प्रकाशकः
भारतीय-संस्कृति-संस्थानम्
महामनापुरी, वाराणसी–५

प्रथमसंस्करणम् २०४१ वि० सं०

मूल्यम् १००/–

प्राप्ति-स्थानम्
(१) मेहरचन्द लछमनदास, अन्सारी रोड, दरियागंज, नई दिल्ली
(२) नाग ब्रदर्स, जवाहरनगर, दिल्ली
(३) मुंशी राममनोहरलाल, रानी झाँसीरोड, नई दिल्ली
(४) चौखम्भा विश्वभारती, चौक, वाराणसी
(५) चौखम्भा विद्याभवन, चौक, वाराणसी
(६) मोतीलाल बनारसीदास, चौक, वाराणसी
(७) ग्रन्थम्, रामबाग, कानपुर

मुद्रकः
चन्द्रज्योति प्रेस
छोटालालपुर (पाण्डेयपुर)
वाराणसी

## समर्पणम्

पण्डितेभ्यो मदनमोहनमालवीयेभ्यः,

यैः शिक्षितोऽस्मि—

सत्येन ब्रह्मचर्येण व्यायामेनाथ विद्यया ।

देशभक्त्यात्मत्यागेन सम्मानार्हो सदा भव ।।

# FOREWORD

In the world of Sanskrit letters today, there is perhaps no other single writer who can be regarded as a model literary critic and historian. The Nāṭyaśāstrīyānusandhānam dealing with Sanskrit dramatic theory and practice is indeed unique in several respects and adds new dimensions to the understanding of Sanskrit drama as well as dramatic criticism. Professor Ramji Upadhyaya wields Sanskrit with such ease and grace that the reader cannot put it down until he completes the last page.

At a time when Indological research has developed lopsidedly in English, degenerating at times to a mere display of wild speculations on chronology and, at other times, meticulous compilations of theoretical details without any reference to actual literary trends, Prof. Ramji Upadhyaya has striven hard to strike out a new procedure for himself; and, I have no doubt that his discerning and illuminating efforts to bring the modern perspective to bear on our classical dramatic works, with copious and telling instances at every step, will be hailed by every student of literature as a substantial as well as much needed contribution to Sanskrit studies.

I need mention here a few of the problems highlighted in a proper focus for the first time :

1. Are Bharata's *sandhis* relevant for our study of Sanskrit drama today? What exactly is their real nature ?
2. Is there such structural unity in plots of Sanskrit dramas that nothing can occur which is not hinted or foreshadowed ?
3. What is the precise allocation given to *raṅgaśīrṣa, raṅgapīṭha* etc. on the Indian stage ?
4. Can we narrow down the exact significance of *praveśakas* and *viṣkambhakas* ?
5. Where do *pūrvaraṅga* and *sthāpanā* begin and end ?
6. What is their role vis-a-vis *nāndī, prastāvanā* etc. ?
7. How does a subplot highlight the main plot ?
8. Can one distinguish clearly between, apparently alike, stage directions like *svagata, janāntika, apavārya* etc. ?
9. What are the unique techniques underlying characterization of heroes etc. ?
10 How does Nature play a conspicuous role in Sanskrit drama, not only as a setting but also as a force in shaping the lives of characters ?
11. What is the importance of time-analysis of plays ?

12. What ideas are symbolized in soliloquies and the objects apostrophised ?

13. How many layers can be noticed in the gamut of humour, dramatic irony, dialogue etc. ?

14. What are the distinct roles played by the different persons that form the entourage of the hero ?

15. The significance of the element of dramatic suspense in plot · s noticed in plays and the device of depicting characters as foils—how the modern perspective is thus foreshadowed in the ancient plays of classical masters ?

These are only a few of the problems refreshingly raised for the first time and illuminatingly solved by select examples from the best Sanskrit plays, with a minimum reference to the rules of rhetoricians It thus supplies a real need and we are sure it will receive the warm welcome it deserves from the Sanskrit scholarly world as his widely read literary histories. I have no hesitation in congratulating Prof. Upadhyaya for the new horizon of research which he has developed. It will serve alike as a guide for classroom teaching and research. Fullness should surely end up in weightiness and glory as the poet said . *pūrṇatā gauravāya.*

I thank Prof. Ramji Upadhyaya for giving me the privilege of a preview of this great contribution to Sanskrit literary criticism.

**K. Krishnamoorthy**

# भूमिका

"अभिनवगुप्तो गुप्तं दशस्वरूपं सतत्त्वकं व्यवृणोद्'—इत्यभिनवगुप्त-परम्परया भरतकृतस्य दशरूपलक्षणस्य सरहस्योद्भेदं नवोन्मेषः नाटककवीनां समीक्षकाणां चोपयोगाय प्रारभ्यते ।

भरतमुनिः स्वयुगे प्रचलितं नाट्यस्वरूपं दशरूपलक्षणं च सम्यगवगाह्य नाट्यशास्त्रं रचयामास। ग्रन्थोऽयं मुनेरलौकिक-प्रतिभया विषयविवेचनस्यान्तर्दृष्टिप्रकाशेन च शाश्वतप्रतिष्ठा-महति । नाट्यप्रधानस्य तस्य नृत्य-सङ्गीत-वाद्य-प्रकरणानि समा-श्रित्य परवर्तिशास्त्रकारा महता श्रमेणाभिनवप्रवृत्तिसन्दर्शनेन वैदुष्येण च सहस्रशो ग्रन्थरत्नैर्व्युत्पत्तिप्रदां प्रशस्यामुपकृतिं चक्रुः, किन्तु दशरूपलक्षणमधिकृत्य तैस्तादृशो विशेषो न प्रकल्पितः । फलतो नाट्यशास्त्रस्य दशरूपलक्षणप्रकरणं यथोचितं योगक्षेमं विनाद्यावधि प्रायः पुरातनमेव पुराणपरिधानोपहितं रूपं धारयति । आधुनिकाः प्राच्याः पाश्चात्याश्चानुसन्धान-व्यवसिता दशरूप-विधानं सर्वतोमुखं साम्प्रतञ्च विधातुमसमर्था इव । ते हि तत्तात्पर्य-प्रतिपादन-विमुखा दृश्यन्ते । प्रस्तुतग्रन्थे पूर्वसूरिभिरदृष्टमेतत्सर्वं यथाविधि समेधितम् ।

भरतानन्तरं संस्कृतनाटकरचनाया अनवच्छिन्नं सातत्यं दृश्यते । तेषु तेषु नाटकेषु भरतस्य दशरूपलक्षण-बाह्यानि नूतनतत्त्वान्या-विर्भूतानि । तानि अन्विष्य यथास्थानमुपस्थाप्य च दशरूपक-लक्षणं संवर्धितमत्र । भरतस्य दशरूपलक्षणस्यांशतः पूरकोऽयं ग्रन्थः । अपरञ्च रूपकानुशीलनस्यान्ताराष्ट्रियपद्धतिर्विकसिता वर्तते ।

तुलनात्मकदृष्ट्या प्राच्य-पाश्चात्त्ययोः समीक्षासरण्योः परस्परा-दानप्रदानमुखेन तयोः प्रचयः काम्यः । स चात्र प्रकल्पितः ।

बहूनां दशरूपलक्षणकारिकाणामभिप्राया अभिनवगुप्तादीनां प्राचीनटीकाकाराणामपि स्पष्टा नासन्निति ग्रन्थेऽत्र तत्र तत्र प्रसाधितम् । एतादृशानामस्पष्टार्थानामंशानां तात्पर्यस्य निर्धारणं लक्ष्यभूतानां नाटकसंहितानामनुसन्धानेनात्र चिकीर्षितम् ।

प्रस्तुतेन शास्त्रार्थेन रूपकरहस्योद्भेदपरायणानामध्येतॄणां परितोषो भविष्यतीति विश्वसिति—

—उपाध्यायो रामजी

## विषयानुक्रमणिका

# सन्ध्यन्तर - रहस्यम्

सन्ध्यन्तर - विषये विसंवादो नास्त्यचिरप्ररूढः। अभिनवगुप्त-स्तदधिकृत्य समसामयिकविप्रतिपत्तीरुद्धरति। तद्यथा—

तत्र केचिदाहुः—अन्तरं छिद्रं सन्धिरिति। तदङ्गमात्रं—तात्स्थ्याच्च तत्स्थान्यं, तेन सन्ध्यङ्गच्छिद्रवर्तित्वात् सन्ध्यन्तराणि, अत एव चाङ्गानां सम्बद्धानि। ननु किं शेषमात्रेण, नेत्याह। किन्तु अर्थस्य प्रयोजनस्य योगेन। अत एव सन्ध्यङ्गानां विशेषकाः।[1] तदर्थविशेष-सम्बद्धं हि तदङ्गं भवति।

अन्ये मन्यन्ते—

य एवोपक्षेपाद्या सामान्या उक्ताः, तेषामेवैतद्विशेषाः, अवान्तरभेदाः। उपक्षेपो हि सामादिविशेषभिन्नः। तथा हि, लाक्षागृहानले'ति क्रोधात्मोपक्षेपः, रामाभ्युदये भयात्मोपक्षेपः, प्रतिमानिरुद्धे स्वप्नरूपः, उदात्तराघवे हेत्ववधारणात्मा। एवमन्यदुपसरणोयम्। एते च विभावानुभावव्यभिचारिरूपा एव। न तु तदतिरिक्तं जगति किञ्चिदस्ति प्रयोगे। प्रयोगोज्ज्वल-त्वोपयोगाय तूपलक्षणत्वेनैकविंशतिरित्युक्तं कवेर्मार्गं प्रदर्शयितुम्।

इदं द्वितीयं मतमभिनवगुप्तस्य स्वीकृतं, यतो हि नामातः परं स स्पष्टयति—

तत्र सामादयो वीरे उज्ज्वलत्वहेतवः, वधो रौद्रे, प्रत्युत्पन्नमतित्वं मतिलक्षणं व्यभिचारि-रूपं, सर्वत्र गोत्र - स्खलनमीर्ष्याविप्रलम्भे, साहसं (शृङ्गारवीरादौ), चापलं हास्यादौ। एवमन्यत्र। ............एते सर्वेषु नाटकादिरूपकेषु सुलभाः, स्वयं च सुज्ञाना इति।

नाटकलक्षणरत्नकोशे सागरनन्दी सन्ध्यन्तराणि अपरविधं परि-भाषते। तद्यथा–'एतेषामेव सन्धीनामेकविंशतिः प्रदेशा अर्थवशाद्भवन्ति। यथा—

**सामभेदः प्रदानं च दण्डश्च वध एव च।** इत्यादि

प्रयोजनवशाद्यावन्तः एते प्रवेष्टुं शक्यन्ते, तावन्तः सन्धिषु प्रदर्शयि-तव्याः।

भरतोऽभिनवगुप्तः सागरनन्दी च सन्ध्यन्तरं सन्ध्यंगाद्भिन्नमेव निदर्श-यन्ति। धनञ्जयः सन्ध्यन्तराणामन्तर्भावो भावेष्वलङ्कारेषु च भवतीति

---

१. शारदातनयानुसारेण'सन्ध्यन्तराणि सन्धीनां विशेषाः'भावप्रकाशने ७.२१२

भरतविरोधिमतमुपन्यस्यति।[1] वे० कृष्णराघवन् महोदय एतयोर्द्वयोर-भिन्नत्वं प्रतिपादयन् नवीनमेव किञ्चित् प्रस्तौति। स कथयति—

Sandhyangas are not only sitxtyfour. The fact that a supplementary list grew up under the name of Sandhyantaras--Sama, Bheda etc. shows that the incidents are too infinite to be exhausted by sixtyfour items. Srngaraprakasa ( P.594 )

राघवन् भरताभिनवगुप्तादीनां मतेभ्यो किञ्चिद्विलक्षणमेव यद्वदति, न तत्साधु प्रतिभातीति निबन्धस्यास्य प्रयोजनम्। न खलु प्राक्तनानां नाटयाचार्याणामभिमतं सम्यक् स्पष्टम्। अत एव राघवन्-महोदयस्य तत्र तिरस्कारो नास्वाभाविकः।

वस्तुतः सन्धिस्तु कथाखण्ड एव। कथाखण्डास्याङ्गान्येव सन्ध्यङ्गानि वचनात्मकानि भवन्ति। इमान्यङ्गानि यथास्थानवैशिष्ट्यं पूर्वापरप्रसङ्गैः सामञ्जस्यं च भजन्ते। तेषु वाग्वैदग्ध्यस्य चारुता विलसति। तत्रैव नाटयकवेः कलानैपुण्यं शिखरायते।

इमानि सन्ध्यङ्गानि न सहसा प्रकटन्ति। तानि प्रासंगिकतामौचितीं। चार्पन्ती पृष्ठभूमिमपेक्षन्ते। सा पृष्ठभूमिः सन्ध्यन्तरैः प्रस्तूयते। तथा हि—संग्रहो भाषणं च सन्ध्यङ्गे सामदानयोः पृष्ठभूमौ निर्दिष्टे—

**सामदानादि - सम्पन्नः संग्रहः परिकीर्तितः।**
**सामदानादि - सम्पन्नं भाषणं समुदाहृतम्॥**

ना० शा० १९.८५, १०२

अत्र सामदानादिभिः पृष्ठभूमिर्निर्मीयते। तस्यां पृष्ठभूमौ कस्यचि-ज्जनस्य संग्रहो भाषणं वा भवति। संवरणनामकेन[2] सन्ध्यन्तरेण उद्भेदनामकं सन्ध्यङ्गं स्थाप्यते। तथा हि—

**उद्भेदो गूढभेदनम्।** दश० १.२७

यथा रत्नावल्यां वत्सराजस्य कुसुमायुधव्यपदेशगूढस्य वैतालिक-वचसा 'अस्तापास्त' इत्यादिना 'उदयनस्य' इत्यन्तेन उद्भेदनादुद्भेदः।

---

१. दशरूपके ४.८४।

२. संवरणमवहित्थम्। ना० शा० १९.१०९ अधिकृत्य भारती।

पृष्ठभूमिगतेन क्रोधनामकेन सन्ध्यन्तरेण सम्फेटः, पर्युपासनं तोटकम् इत्येतानि सन्ध्यङ्गानि स्थाप्यन्ते । तथा हि—

**सम्फेटः**

भरतानुसारेण 'रोषग्रथित - वाक्यं सम्फेटः' । धनञ्जयानुसारेण च रोषभाषणं सम्फेटः । यथा वेणीसंहारे—

भोः कौरवराज, कृतं बन्धुनाशदर्शनमन्युना । मैवं विषादं कृथाः । पर्याप्ताः पाण्डवाः समरायाहमसहायः । इत्यारभ्य

**धार्तराष्ट्रवचनम्—**

**कर्णदुःशासनवधात्तुल्यावेव युवां मम ।**
**अप्रियोऽपि प्रियो योद्धुं त्वमेव प्रियसाहसः ॥**

**पर्युपासनम्**

भरतानुसारेण

**क्रुद्धस्यानुनयो यस्तु भवेत्तत् पर्युपासनम् ।** ( ना० शा० १९.८० )

अत्र क्रोधस्य पृष्ठभूमावेव पर्युपासनं स्थाप्यते । यथा रत्नावल्याम्—

विदूषकः —भो मा कुप्प । एसा खु कदली घरं ते । एहि, इत्यादि । राजा अनुनीतः सन्नाह—

**दुर्वारां कुसुमशरव्यथां वहन्त्या ।** इत्यादि

दशरूपके तु—

**पर्युपास्तिरनुनयः ।**

यथा रत्नावल्यां राजा—

**प्रसीदेति ब्रूयामिदमसति कोपे न घटते ।**

इत्यादिना चित्रगतयोर्नायिकयोर्दर्शनात् कुपिताया वासवदत्ताया अनुनयनं पर्युपासनम् ।

**तोटकम्**

भरतानुसारेण

**संरब्धवचनं चैव तोटकं त्विति संज्ञितम् ।**

तदनुसृत्याभिनवगुप्तो व्याख्याति—

'आवेगगर्भं यद्वचनं तत्तोटकम् । स चावेगो हर्षात्, क्रोधात्, अन्यतोऽपि वा ।'

**उपन्यासः**

भरतानुसारेण

**उपपत्तिकृतो योऽर्थः । उपन्यासश्च स स्मृतः ।** ना० शा० १९.८१

अत्रोपपत्तिस्तु हेतुः(कारणम्)एव । तस्य हेततुनामकस्य सन्ध्यन्तरस्य पृष्ठभूमौ न्यासो वर्ण्यते ।

**अभूताहरणम्**

मायानामकस्य सन्ध्यन्तरस्य पृष्ठभूमौ 'अभूताहरण-नामकं सन्ध्यङ्गं प्रवर्त्यते । धनञ्जयानुसारेण—

**अभूताहरणं छद्म ।**

तत्र गृहीतवासवदत्तावेषायाः सागरिकाया वत्सराजाभिसरणं छद्म विदूषक-सुसङ्गतावलृप्तकाञ्चनमालानुवादद्वारेण दर्शितमित्यभूताहरणम् ।

भरतः कपटाश्रयं वाक्यमभूताहरणमिति परिभाषते । अयं कपटाश्रय एव माया, याभूताहरणस्य पृष्ठभूमिं प्रस्तौति ।

**अनुमानम्**

अनुमाननामकं सन्ध्यङ्गं हेत्ववधारणनामकस्य सन्ध्यन्तरस्य पृष्ठभूमौ उन्नीयते । धनञ्जयोऽनुमानं परिभाषते—

**अभ्यूहो लिङ्गतोऽनुमा ।** ( १.४० )

तत्र लिंगपरामर्शविधिरेव हेत्ववधारणम् । तद्यथाभिनवगुप्तेन स्पष्टीकृतम्—रूपानुरूपगमनमिति । रूप्यमाणेन प्रत्यक्षाद्युपलभ्यमानेन रूपस्य व्यापकस्याविनाभावेन गमनं ज्ञानमनुमानं निश्चयात्मकत्वादूहः ।'

**अधिबलम्**

मायानामकेन सन्ध्यन्तरेण या पृष्ठभूमिः प्रस्तूयते, तस्मिन्नेवाधिबलं प्रवर्तत इत्यधोविधपरिभाषया स्पष्टम्—

**कपटेनातिसन्धानं ब्रुवतेऽधिबलं बुधाः ।** ( ना० शा० १९.८७ )

नाटकलक्षणरत्नकोशेऽधिबलं 'कपटस्यान्यथाकरणमेव' । अत्रापि पृष्ठभूमौ प्रथमं सन्ध्यन्तरेण मायया कपटो भवति, पश्चात्तस्यान्यथाकरणं सन्ध्यङ्गेन प्रदर्श्यते ।

**उद्वेगः, विद्रवः, सम्भ्रमश्च**

भयनामकस्य सन्ध्यन्तरस्य पृष्ठभूमौ सति उद्वेगो ( व्यग्रता ) विद्रवः,

सम्भ्रमश्च सन्ध्यङ्गानि जायन्ते। विद्रवो वधबन्धादिरिति धनञ्जयस्य विद्रवो वधनामकेन सन्ध्यन्तरेणोपस्थाप्यते।

आक्षिप्तिः (आक्षेपः) भरतानुसारेण

**गर्भस्योद्भेदनं यत्साक्षिप्तिरित्यभिधीयते।** ( ना० शा० १९.८६ )

अत्र गर्भो हृदयान्तःस्थितो भावः। तस्य पुनः प्रतिष्ठापितस्यापि यतः कुतश्चिन्निमित्तादुद्भेदनमनपह्नवनीया या स्फुटतापत्तिः सा आक्षिप्तिः। अभिप्रायस्य हि तत्राक्षेपो बहिःकर्षणम्।[१]

अयं हृदयान्तःस्थितो भावः संवरणनामकेन सन्ध्यन्तरेणापादितः पश्चादाक्षेपनामकं सन्ध्यङ्गं जनयति।

**शक्तिः**

शक्तिनामके सन्ध्यङ्गे विरोधस्य यत् शमनं भवति तत् पृष्ठभूमौ सामनामकेन, क्रोधनामकेन च सन्ध्यन्तराभ्यां स्थाप्यते। तत्र प्रथमं क्रोधो वर्ण्यते, पश्चात् साम्ना तस्य शमनं क्रियते। अन्ततः प्रसादः परिलक्ष्यते। स एव शक्तिः विरोधशमनमिति।

**विबोधः**

धनञ्जयानुसारेण

**विबोधः कार्यमार्गणम्।**

अत्र प्रथमं तावत् संवरण - सन्ध्यन्तरं वर्तते, पश्चात् संवृतस्य प्रकाशनं स्यात्।

तद्यथा रत्नावल्याम्—

वसुभूतिः —( निरूप्य ) देव कुत इयं कन्यका ?

राजा—देवी जानाति।

वासवदत्ता—आर्य पुत्र, एषा सागरात् प्राप्तेति भणित्वामात्ययौगन्धरायणेन मम हस्ते निहिता। अत एव सागरिकेति शब्दापयते।

अत्र संवरणोपस्थापितो विबोध इति सन्ध्यङ्गं स्पष्टमेव।

**द्युतिः**

भरतानुसारेण

**लब्धार्थस्य शमनं द्युतिमाचक्षते पुनः।** ( १९.१०० )

तत्र लब्धार्थः क्रोधादिः, तस्य शमनमेवोद्दिष्टम्। अत एव द्युतिरिति सन्ध्यङ्गं क्वचित् क्रोधनामकस्य सन्ध्यन्तरस्य पृष्ठभूमौ सति विलसति।

१. ना० शा० १९.८६ अधिकृत्य भारती।

अत्रावधौ कतिपय-सन्ध्यङ्गानां तत्तदर्थव्याख्यायिसन्ध्यन्तरीयपृष्ठभूमावधिशयनं स्पष्टीकृतम् । अपरतोऽन्येषां सन्ध्यङ्गानां सन्ध्यन्तरे समाश्रयः सोदाहरणं व्याख्यायते ।

**उपक्षेपः**

अभिज्ञानशाकुन्तले प्रथमांके कण्वाश्रमस्य परिसरे दुष्यन्तस्य मृगानुसन्धानं निरूपितम् । तत्र तपस्विनस्त्रय आयान्ति, उच्चस्वरेण राजानं सम्बोधयन्ति च--राजन्, आश्रममृगोऽयं न हन्तव्यो, न हन्तव्यः ।

**न खलु न खलु बाणः सन्निपात्योऽयमस्मिन् ।**
**मृदुनि मृगशरीरे तूलराशाविवाग्निः ।**
**क्व बत हरिणकानां जीवितं चातिलोलं**
**क्व च निशितनिपाता वज्रसाराः शरास्ते ॥** ( १.१० )
**तत् साधु कृतसन्धानं प्रतिसंहर सायकम् ।**
**आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥** ( १.११ )

इत्यनेन संरम्भस्तेषां निर्दर्शितः । तेषां संरम्भस्य साम राज्ञोऽधोवचनेन व्यज्यते--**एष प्रतिसंहृतः** ।

अत्र सामनामकस्य सन्ध्यन्तरस्य पृष्ठभूमौ नाटकस्य बीजं न्यस्यतेऽधोवचनेन--

वैखानसः --सदृशमेतत् पुरुवंशप्रदीपस्य ।

**जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।**
**पुत्रमेवं गुणोपेतं चक्रवर्तिनमाप्नुहि ॥** ( १.१२ )

इदमुपक्षेपनामकं सन्ध्यङ्गं सामनामकस्य सन्ध्यन्तरस्य पृष्ठभूमौ उपस्थापितं तेनैव प्रासङ्गिकतामौचितीं च लभते। अनेन विधिना सर्वेषां सन्ध्यन्तराणां तथाविधानि सन्ध्यङ्गानि अनुसर्तव्यानि ।

अत्रानुष्ठेयार्थो विलसति--सन्ध्यङ्गानि वस्तुतः कथांशा रमणीया वचनप्रकारा एव । तानि तु रम्यतराणां सन्ध्यन्तराणां समाश्रयेण प्रासङ्गिकतामौचितीं च भजन्ते। अत एव सन्ध्यन्तराणि सन्ध्यङ्गानामाश्रयरूपाणि क्वचिद्भावात्मकानि अन्यत्र घटनात्मकानि एव भवन्ति । प्रेक्षकाणां प्रीतिजननमेवोभयोरुद्देश्यम् । सन्ध्यन्तर–सन्ध्यङ्गयोः पर्यायविकल्पनं तु वितथवादः प्रतिभाति । ●

# नाटके कथांशानां पूर्वसूचनावश्यकी

नाटकादिषु 'यथाङ्कभागेऽसूचितं पात्रं रंगपीठं न प्रविशति तथैवासूचितः कथांशो रङ्गे न प्रवर्त्यते' इत्यस्माकं स्थापना। भाविकथांशस्य पूर्वं सूचनार्थोपक्षेपकैः पताकास्थानकैः, निमित्तैरन्यैश्चोपायैः क्रियते। अयं विषयोऽभिज्ञानशाकुन्तलं समाश्रित्य व्याख्यायते।

भरतेन प्रवेशकस्य भाविकथांशसंसूचनमधोलिखितकारिकया निगदितम्[१]।

**कालोत्थानगतिरसौ व्याख्या सरम्भकार्यविषयाणाम्।**
**अर्थाभिधानयुक्तः प्रवेशकः स्यादनेकार्थः॥**

ना० शा० १८.३५

अनया कारिकया भरतो नियमयति—प्रवेशकः संरम्भकार्यविषयात्मको भवति इति। अत्र सरम्भकार्यं तु परवर्त्यङ्के दर्शयिष्यमाणं कार्यमेवेति व्याख्यातमभिनवगुप्तेनाधोविधम्—संरम्भः कार्यविशेषविषयः अभिप्रायस्तस्यार्थं उपायान्वेषणादि। तदभिधानयुक्तः प्रवेशको यथा—अनेन वासवदत्तामपहृत्योज्जयिनीं निनीषोर्वत्सराजस्य प्रयोजकत्वं प्राप्तानाममात्यानां संरम्भः शालङ्कायनेनोक्तः।

पूर्वोक्तोऽयमभिप्रायः प्रागपि भरतेनाधोविधं स्पष्टीकृतः—

**अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम्।**
**प्रकरणनाटकविषये प्रवेशकः संविधातव्यः॥** १८.३३

---

१. नाट्यकथायाः सीमाबन्धनायैव प्रवेशक - विष्कम्भकादयः संक्षेपार्थमेव प्रयुज्यन्त इति साधारण - धारणा'। नैतत् पूर्णं सत्यम्। पूर्ववृत्तमङ्के प्रागेव दर्शितमपि प्रवेशकादौ क्वचित् गृह्यत एव, भाविवृत्तमङ्के प्रदर्शयिष्यमाणमपि प्रागेव प्रवेशकादौ सूच्यत इति धनञ्जयस्याभिप्रायोऽधोलिखितकारिकाया बोधनीयः—

**वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः।**
**संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः॥१.५९॥**

अत्र भरतोऽभिप्रैति—

( १ ) प्रवेशको बिन्दुना संक्षेपेण संकेतितमर्थं ( कथावस्तु ) समाश्रित्यापि प्रवर्त्यते ।[१]

( २ ) स चासौ प्रवेशकोऽङ्कान्तरानुसारी भवति । अत्राङ्कान्तरं तु परवर्त्यङ्क एव । अनुसारीति पदस्यार्थो विश्लेषणीयः । 'अपेक्षते' इति अनुसारी ।[२]

पताकास्थानकं तु परवर्तिकथां सूचयत्येवेति विदिततरम् ।[३]

निमित्तानि क्वचिद् भाविकार्यस्य सूचनाय व्याप्रियन्ते ।

अन्ये उपाया बीजमङ्कास्यमङ्कावतारश्चूलिका च भाविकथा-संसूचनाय व्याप्रियन्त एव ।

## अभिज्ञानशाकुन्तले वस्तुनः पूर्वसूचना

**प्रस्तावनायाम्**

अभिज्ञानशाकुन्तलस्य नान्दी बीजरूपेण नाटकस्य सम्पूर्णां कथां सङ्केतयति । तद्यथा—

**या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री ।**
**ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ॥**
**यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः ।**
**प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥**

या सृष्टिः स्रष्टुराद्येत्यनेन शकुन्तला सूचिता । एतावत्कालपर्यन्तं तादृशसृष्टेरजातत्वादाद्यत्वम् । या विधिना सुरतविधिना हुतं निषिक्तं हवी रेतो वहतीति तस्या गर्भः । होत्रीत्यनेन कण्वः । ये द्वे इत्यनेनानसूयाप्रियंवदे सख्यौ कालं शापान्तसमयं विधत्तो बोधयतः । पातिव्रत्यादिभिर्गुणैर्विश्वं व्याप्य श्रुत्या वार्तया विषये देशे गुणैस्त्रिभिः शार्ङ्गरवशारद्वतगौतमीभिरयत एतादृशी स्थिता । एतेन सगर्भायास्तस्या दुष्यन्तद्वारदेशगमनम् । सर्वेषां बीजं मूलभूतश्चक्रवर्तित्वाद् भरतः । तस्य प्रकृति-

१. बिन्दुस्तु 'अवान्तरकार्यस्य बीजमेव परवर्त्यङ्कस्य कार्यं संकेतयति ।

२. अनुसारी—Seeking, looking out for, investigating,

३. सूचनोपायमेवाहुः पताकास्थानकं बुधाः ।

रुत्पत्तिरिति भरतोत्पत्तिः। यया प्राणिनः प्राणवन्त इत्यनेन भरतशकुन्तलया सह स्वपुरागमनम्।[1]

अभिज्ञानशाकुन्तलस्यामुखे नटी गायति—

**ईषदीषच्चुम्बितानि भ्रमरैः सुकुमारकेसरशिखानि।**
**अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि॥**

अस्मिन् श्लोके शकुन्तला-दुष्यन्तयो रहःप्रणय-व्यापारः सूचितः।

'अस्मिन् क्षणे विस्मृतं खलु मया' इति वाक्येन दुष्यन्तस्य शकुन्तला-विस्मरणं सूचितम्।

अपरञ्च—

**तवास्मि गीतरागेण हारिणा प्रसभं हृतः।**
**एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा॥**

श्लोकेऽस्मिन् सारङ्गस्तु पर्यायेण कामदेवः। 'अतिबलीयसा कामेन राजा प्रसभं हृतः' इत्यनेन तृतीयाङ्कस्य प्रणयव्यापारः पुनरपि सूचितः।

**प्रथमाङ्के**

वैखानसस्याशीर्वादः—

**जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव।**
**पुत्रमेवं गुणोपेतं चक्रवर्तिनमाप्नुहि॥ १ १२**

शिष्यौ—( बाहू उद्यम्य )।

सर्वथा चक्रवर्तिनं पुत्रमाप्नुहि।

इत्यनेन बीजन्यासेनान्तिमाङ्के दुष्यन्तस्य पुत्रसमागमः सूचितः। अभिनवगुप्तानुसारेण बीजे सर्वषामङ्कानामर्थो निधीयते।[2]

शकुन्तलादर्शनस्य सूचना दुष्यन्तस्य बाहुस्फुरणेन जायते। तथा हि—

( प्रविश्य निमित्तं सूचयन् )—

**शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य।**
**अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र॥ १.१५**

अत्र बाहुस्फुरणेन प्रियसमागमः सूचितः। तद्यथा—

**स्पन्दो भुजस्येष्टसमागमाय।**[3]

---

१. अभिज्ञानशाकुन्तलस्य राघवभट्टकृतार्थद्योतनिका।

२. ना० शा० १६.१८ अधिकृत्य।

३. वसन्तराजशकुने नरेङ्गितेऽङ्गस्फुरण-प्रकरण चतुर्थम्।

अत्रैव शकुन्तलाया भाविस्वयंवरस्य सूचना अनसूयावचनेन भवति। तद्यथा—

**हला शकुन्तले, इयं स्वयंवर-वधूःसहकारस्य त्वया कृतनामधेया वन-ज्योत्स्नेति नवमालिका।**

शकुन्तला-दुष्यन्तयोः प्रणयव्यापारस्य सूचना प्रियंवदा-वचनेन सम्भवति। तथाहि—

**'यथा वनज्योत्स्नानुरूपेण पादपेन संगता, अपि नामैवाहमप्यात्मनोऽनुरूपं वरं लभेयेति।**

'भ्रमर-बाधाकाल उभे सख्यौ—के आवां परित्रातुम्, दुष्यन्तमाक्रन्द।'

हला शकुन्तले, यदि अत्र अद्य तातः सन्निहितो भवेत् इति चापि।

कण्वाश्रमस्य तपस्विनां यज्ञरक्षाप्रकरणस्य पूर्वसूचनात्रैव विद्यते—

**'राजरक्षितव्यानि तपोवनानि नाम'।**

शकुन्तला-प्रणयस्य समारम्भः सूचितोऽधोविधम्—

**'गुरोः पुनरस्या अनुरूपवरप्रदाने संकल्पः।**

'आत्मगतम्' इति नाटचधर्मीरीत्या भाविकथांशः सम्यक् सूच्यते। तद्यथा—

**भव हृदय साभिलाषं सम्प्रति सन्देहनिर्णयो जातः।**
**आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्॥**

प्रणयोद्वाहेऽशुभं निमित्तमधोविधं सूचितम्–'कुशसूचि–परिक्षतौ मे चरणौ। कुरबकशाखापरिलग्नं च मे बल्कलम्।'

**द्वितीयाङ्के**

द्वितीयाङ्कस्य कथा प्रवेशके[1] विदूषकस्याधोवाक्येन सूचिता—

विदूषकः—साम्प्रतं (नायकः) नगरगमनस्य मनः कदापि न करोति अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत्। का गतिः।

अन्यच्च दुष्यन्तः शकुन्तलायै स्वानुरागप्रवर्तनमधोविधं प्रकटयति–

न च परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते इत्यनेन तृतीयाङ्कस्य कथा संकेतिता।

---

१. नेदमङ्कभागे, अपि तु प्रवेशके। अनवधानात् सम्पादकैः प्रवेशक इति निर्देशो न तत्र संज्ञितः।

अस्मिन्नङ्के ऋषिकुमारयोः प्रथमो वदति--

'गौतम, अयं स बलभित्सखो दुष्यन्तः।' अनेन वाक्येन सप्तमाङ्क-स्येन्द्रयोजनया दुष्यन्तस्य शकुन्तलायाः पुनर्दर्शनं सम्भाव्यते।

**तृतीयेऽङ्के**

तृतीयाङ्कात् प्राग्विष्कम्भके शिष्यः प्रियंवदामनुसूचयति—

'अहमपि तावद्वैतानिकं शान्त्युदकमस्यै गौतमीहस्ते विसर्जयिष्यामि' इत्यनेन तृतीयस्याङ्कस्यान्तिमे भागे गौतम्याः तद्वृत्तं पूर्वसूचितम्।

तृतीयाङ्कस्य नायकवृत्तं विष्कम्भकस्याधोवाक्येन भवति—

प्रियंवदे, कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि नीयन्ते। (श्रुतिमभिनीय) किं ब्रवीषि। आतपलंघनाद् बलवदस्वस्था शकुन्तला, तस्याः शरीरनिर्वापणायेति।

अपि च द्वितीयाङ्कस्यान्तिमे भागे नायक आत्मगतं सूचयति—

कदाचिदस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत्। अत्र नायकस्य शकुन्तला-विषयिणी प्रार्थनाग्रिमेऽङ्के प्रपञ्चिता नायकयोः कामयमानयोर्वृत्ते।

तृतीयाङ्कस्य प्रारम्भ एकोक्तौ दुष्यन्तः स्वकीयं खेदविनोदनं भावि-कार्यव्यापारमधोविधं सूचयति—

क्व नु खलु खिन्नमात्मानं विनोदयामि। (निःश्वस्य) किं नु खलु मे प्रियादर्शनादृते शरणमन्यत्। यावदेनामन्विष्यामि।

पञ्चमाङ्के शकुन्तलायाः प्रत्याख्यानं तृतीयाङ्कस्यानुसूया वचनेन पूर्वमेव सूच्यतेऽधोविधम्—वयस्य (दुष्यन्त) बहुवल्लभा राजानः श्रूयन्ते यथेयं नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वर्तय।

इयं बन्धुजनशोचनीयता स्वल्पकालिकी स्यादित्यपि दुष्यन्त-वचनेन सूच्यते--

**परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे।**
**समुद्ररशना चोर्वी सखी च युवयोरियम्॥ ३.१७**

चतुर्थाङ्कस्य शकुन्तलाया गान्धर्वविवाहस्यानुज्ञा तृतीयाङ्के दुष्यन्त-स्याधोवचनेन सूच्यते[1]--

१. चतुर्थाङ्कात् प्राक् विष्कम्भके पुनरपि अनुसूया तदेव समर्थयति। तद्यथा-गुणवते कन्यका प्रतिपादनीयेत्ययं तावत् प्रथमः संकल्पः। तं यदि दैवमेव सम्पादयति ननु अप्रयासेन कृतार्थो गुरुजनः।

गान्धर्वेण विवाहेन बहवो राजर्षिकन्यकाः।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥ ३.२०

गौतमी-व्यापारस्य तात्कालिकी सूचना सखिभ्यां पताकास्थानकेन कृता। तद्यथा—चक्रवाकवधूः, आमन्त्रयस्व सहचरं। उपस्थिता रजनीति।

ऊह्यमपि वृत्तं नायकयोः पुनर्मिलनमत। परं गान्धर्वविवाहात्मकं शकुन्तलया प्रवर्तितेन पताकास्थानकेन सूचितम्। तद्यथा, लतावलय-सन्तापहारक, आमन्त्रये त्वां भूयोऽपि परिभोगाय।

चतुर्थाङ्कात् प्राग् विष्कम्भके दुर्वाससः शापोऽनुसूया – वचनेन सूचितम्—

अद्य स राजर्षिरिष्टि परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतो गतं वृत्तान्तं स्मरति वा न वेति।

अस्मिन् विष्कम्भके दुर्वाससः शापवचनं 'स्मरिष्यति त्वां न स बोधितोऽपि सन्' इत्यनेन शकुन्तलायाः प्रत्याख्यानं सूचितमेव।

राज्ञः शकुन्तलाविस्मृतिमपाकर्तुमङ्गुलीयकं प्रदर्शयिष्यते इति षष्ठाङ्कस्य वृत्तमनुसूयामुखेन प्रवेशके सूचितम्।

तत्रैव विष्कम्भके प्रियंवदानुसूयां प्रति चतुर्थाङ्कस्य भाविकथां सूचयति--त्वरस्व शकुन्तलाया· प्रस्थानकौतुकं निर्वर्तयितुम्। कण्वस्य वचोऽनुसृत्य—'अद्यैव ऋषिरक्षितां त्वां भर्तुः सकाशं विसर्जयामि।[1] पुनश्च—ततो मे वचनमन्यथाभवितु नार्हति, किन्त्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयन् स्वयमन्तर्हितः।[2]

**चतुर्थेऽङ्के**

चतुर्थाङ्कस्यारम्भिककथांशोऽधोवचनेन सूचितो विष्कम्भके—

'एषा ( शकुन्तला ) सूर्योदये एव शिखामज्जिता प्रतिष्ठितनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति।'

अस्मिन्नङ्क ऋषिकुमारकौ उपायनमाहरतः। तस्य पूर्वसूचना प्रियंवदाया अधोवचनेन भवति—आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते।

---

१. विष्कम्भके वर्तिष्यमाणस्योदाहरणमिदम्।

२. विष्कम्भके शिष्यस्याधोवचनं तदेव संकेतयति—'तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां लोको नियम्यत इवात्मदशान्तरेषु' ॥ ४.२ ।

प्रत्याख्यानस्य निवारणं प्रियंवदाया अधोवचनेन सूचितं चतुर्थाङ्के—हला, अनयाभ्युपपत्त्या सूचिता, ते भर्तुर्गृहेऽनुभवितव्या राजलक्ष्मीरिति। कण्वर्षिवचनमपि तदेव समर्थयितुं प्रवर्तते—

**ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव।**
**सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि॥ ४.७**
**भूत्वा चिराय चतुरन्तमहीशपत्नी,**
**दौष्यन्तिमप्रतिरथं तनयं निवेश्य।**
**भर्त्रा तदर्पितकुटुम्बभरेण सार्धं,**
**शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन्॥ ४.२०**

पुनरपि तदेव समर्थितमृक्छन्दसा मुनिवचनेन—

**अपघ्नन्तो दुरितं हव्यगन्धै-**
**र्वैतानास्त्वां वह्नयः पावयन्तु॥ ४.८**

शकुन्तलापि भावि प्रत्याख्यानं तस्य निरसनञ्चाधो वचनेन सूचयति—

**दुःखसुखेन मे चरणौ पुरतः प्रवर्तते।**

अस्मिन्नलक्षितनतोन्नतभूमिभागे इत्यादिकण्ववचनेऽपि प्रथमं प्रत्याख्यानं पश्चात् स्वीकरणम्, सूचितम्।

पञ्चमाङ्के यदा सर्वे शकुन्तलां त्यक्ष्यन्ति तदा लोकपिता तां रक्षिष्यति दैवविधानेनेति शकुन्तलाया मृगशावकं प्रति अधोवचनेन सूचितम्—'इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति। निवर्तस्व, वत्स निवर्तस्व' इति[1]। शकुन्तलाया भाविपतिवियोगस्तस्या एवाधोवचनेन सूचितः—

नलिनीपत्रान्तरितमपि सहचरमपश्यन्ती आतुरा चक्रवाकी आरौति। दुष्करमहं करोमि ( करिष्यामि ) इति तर्कयामि।

अनसूयाया अधोवचनेन भाविपतिवियोग एव व्यज्यते—

**एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम्।**
**गुर्वपि विरहदुःखमाशाबन्धः साहयति॥ ४.१६**

कण्ववचनेनापि स एव सूचितः—

**भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः। ४.१७**

---

१. इदं वचनमदृष्टाहतेः ( Irony ) सम्यगुदाहरणम्।

शकुन्तलायाः प्रत्याख्यानस्य निरसनं कण्ववचनेन पुनः सूचितम्—

**तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं ।**
**मम विरहजां वत्से न त्वं शुचं गणयिष्यसि ॥** ४.१९

प्रत्याख्यान-प्रसंगस्यावश्यंभाविता सख्योरधोवचनेनापि प्रकल्प्यते—

'सखि, यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्, ततस्तस्येममात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय ।' इति ।

शकुन्तला प्रतिवदति--अनेन सन्देहेन वामाकम्पितास्मि ।

**पञ्चमेऽङ्के**

पञ्चमाङ्कस्य प्रारम्भ एव शकुन्तलायाः प्रत्याख्यानस्य सूचना हंसपदिकाया गीतेन भवति । तद्यथा—

**अभिनवमधुलोलुपो भवान्,**
**तथा परिचुम्ब्य चूतमञ्जरीम् ।**
**कमलवसतिमात्रनिर्वृतो,**
**मधुकर विस्मृतोऽस्येना कथम् ॥** ५.१

पताकास्थानकमिदं वस्तुतः सूचनापरायणमेव ।

**षष्ठाङ्के**

शकुन्तलाविरहनामाङ्कस्यास्य भूमिका पञ्चमेऽङ्के वर्त्ततेऽधोविधम्—

**कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।**
**बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम् ॥** ५.३१

प्रारम्भ एवास्याङ्कस्य धीवरस्य 'शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः' इति दशान्तरेण शकुन्तलाया नाटकान्ते गृहलक्ष्मीपदप्राप्तिः सूचिता ।

पश्चात्तापाङ्कस्य पूर्वसूचना विष्कम्भके विद्यतेऽधोविधं-कञ्चुकीमुखेन—'यदैव खलु स्वाङ्गुलीयकदर्शानादनुस्मृतं देवेन 'सत्यमूढपूर्वा मे तत्र भवती रहसि शकुन्तला, मोहात् प्रत्यादिष्टेति, तदा प्रभृत्येव पश्चात्तापमुपगतो देवः । तथा हि—

**रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते ।**

षष्ठस्याङ्कस्य प्रारम्भे दुष्यन्तः कञ्चुकिनमादिशति—

मद्वचनादमात्यमार्यपिशुनं ब्रूहि । चिरप्रबोधनान्न सम्भावितमस्माभिरद्य धर्मासनमध्यासितुम्। यत् प्रत्यवेक्षितं पौरकार्यमार्येण तत्पत्रारूढं कृत्वा प्रस्थाप्यतामिति । अनेनाङ्केऽस्मिन् प्रतीहारीवचनं 'अमात्यो

विज्ञापयति-अर्थजातस्य गणनाबहुलतया एकमेव पौरकार्यमवेक्षितम्, तद् देवः पत्रारूढं प्रत्यक्षीकरोतु' इति सन्दर्भस्य पूर्वसूचना । अङ्केऽस्मिन् माधवीमण्डपे चित्रकर्मदर्शनादिना मनोविनोदनस्य सूचना विदूषकस्याधोवचनेन भवति—'नन्वासन्तपरिचारिका चतुरिका भवता सन्दिष्टा—माधवीमण्डप इमां वेलामतिवाहयिष्ये। तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति ।

पूर्वं व्याख्यातमेव यत् कथांशोऽपि असूचितो न प्रवर्त्यते । अपरञ्च नाट्यकथाविन्यासे 'कथं नैतत्कृतमस्यां स्थितौ केनचित् पात्रेण' इत्यपि समाधीयते सुकविना । प्रेक्षकस्य मानस एतादृशः कश्चित् प्रश्नः न समुदेतु इति जिज्ञासां कविः स्वयमेव शमयति । तद्यथाभिज्ञानशाकुन्तले पञ्चमेऽङ्के शकुन्तलायाः प्रत्याख्यानकाले विदूषको राजानं नैव स्मारयति पूर्वभूतं कण्वाश्रमे प्रणय-व्यापारम् । कस्मात् कारणात् तेन नैवं कृतमिति महान्वितर्कः प्रेक्षकाणां ननु भवेदेव । अतएव कालिदासेन षष्ठाङ्के नायकविदूषकयोः संवादे व्याख्यापितमधोविधम्—

राजा—पूर्वापि न त्वया कदाचित् सङ्कीर्तितं तत्र भवत्या नाम । कच्चिदहमिव विस्मृतवानसि त्वम् ।

विदूषकः—न विस्मरामि । किन्तु सर्वं कथयित्वावसाने पुनस्त्वया परिहासविजल्प एष, न भूतार्थ इत्याख्यातम् । मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवितव्यता खलु बलवती ।[१]

सप्तमाङ्के भविता नायकयोः समागमः षष्ठाङ्क एव विदूषकस्य राज्ञश्चाधोविधेन संवादेन सूचितः —

विदूषकः—यद्येवं, समाश्वसितु भवान् । अस्ति खलु समागमः कालेन तत्र भवत्या ।

राजा—कथमिव ।

विदूषकः—न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं चिरं द्रष्टुं पारयतः । ....................

१, अस्माकं मतेन कालिदासस्येदं समाधानं नैव सर्वथा समीचीनम् । यतो हि नाम शकुन्तलायाः प्रणयवृत्तं स्वयमेव विदूषकस्य प्रत्यक्षीकृतमन्यतोऽपि कुतश्चिच्छ्रुतं वासीदेवेति द्वितीयाङ्कात् पूर्वं प्रवेशके तस्य वचनेन स्पष्टमेव । तत्र स कथयति—'अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत्' इत्यादि।

मैवम् । नन्वङ्गुलीयकमेव निदर्शनम् । अवश्यंभाव्यचिन्तनीयः समागमो भवतीति ।

सप्तमाङ्के पुत्रमिलनस्य दौष्यन्तिकवृत्तं षष्ठाङ्क एव सानुमतीवचनेन सूचितम् । तद्यथा—

अपरिच्छिन्नेदानीं ते सन्ततिर्भविष्यति ।

षष्ठेऽङ्के विदूषकस्य रंगे पुनरागमनस्य वृत्तं चतुरिकामुखेन सूचितमधोऽस्ति—एनमाश्वासयितुं मेघप्रतिच्छन्दात् आर्यमाधव्यं गृहीत्वागच्छामि ।

षष्ठस्याङ्कस्यान्तिमे भागे सप्तमस्याङ्कस्य भाविवृत्तान्तो नायकयोः समागमोऽधोविधं सूचितः सानुमती·मुखेन —

अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखाद्यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथाचिरेण धर्मपत्नीं भर्ताभिनन्दिष्यतीति । इयमुक्तिर्मातलिवृत्तस्य पूर्वपीठिकां प्रस्तौति । राज्ञो स्वर्गंगमनाय तदनुसृत्यातः परं सपद्येवेन्द्रसन्देशं श्रावयितुं मातलिः सहसा तत्र समायाति ।

**सप्तमेऽङ्के**

पुत्रादीनां समागमस्य भाविवृत्तं नायकस्य बाहुस्पन्दनेन निमित्तेन सूच्यते । तद्यथा—

राजा—( निमित्तं सूचयित्वा )

**मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा ।** ७.१३

तदनु मंक्षु पश्यति सर्वदमन इति कृतनामधेयं स्वपुत्रम् ।

अपरञ्च—द्वितीयमिदमाशाजननम् ।

तापसीवचनमपि शकुन्तलायाः समागमं सूचयति । तद्यथा—

सर्वदमन, शकुन्तलावण्यं पश्य ।

अत्र धन्यास्तदङ्गरजसा मलिनीभवन्तीति वाक्येन भाविवृत्तं 'पुत्रालिङ्गनं' सूचितम् ।[1]

---

1. मातः एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति । पूर्वमेव दृश्यं वर्तते—बालं परिष्वजते ।

'मृण्मयूरो बालाय दीयते' इति वृत्तं तु पूर्वसूचितमेवाघोविधम्—

द्वितीया तपस्विनी—मदीय उटजे मार्कण्डेयस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति। तमस्मै उपहर।

दुष्यन्तस्य शकुन्तलामिलनात् क्षणमेव प्राग् द्वितीया तपस्विनी कथयति—सुव्रते,एहि,इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयाव:।

बाल:—मुञ्च मां, यावदार्याया: सकाशं गमिष्यामि।

राजा—पुत्रक, मया सहैव मातरमभिनन्दिष्यसि।

शकुन्तलापि तमर्थमासूचयति—अथवा यथा सानुमत्याख्यातं तथा सम्भाव्यत एतत्।

अत्रैव मारीच - दर्शनात् प्राङ् मातलिर्दुष्यन्तं निवेदयति—एत्वायुष्मान्। भगवान्मारीचस्ते दर्शनं वितरति।

—: o :—

# रंगशीर्षं तस्योपयोगश्च

अभिनवगुप्तानुसारेण यथा शरीरस्योपरिभागः शिरः, तथैव रङ्गपीठ-स्योपरिभाग एव रङ्गशिरः।[१] रङ्गपीठस्योदुपरि शिरोरूपमित्यर्थः।[२]

**रङ्गपीठं ततः कार्यं विधिदृष्टेन कर्मणा।**
**रङ्गशीर्षं तु कर्तव्यं षड्दारुकसमन्वितम्॥ २।६८**

इति नाट्यशास्त्रीयां कारिकां विशदयन्नाहाभिनवगुप्तः —

तत् पात्राणां विश्रान्तये, आगच्छतां च गुप्तये रङ्गस्य शोभायै रङ्ग-शिरः कार्यम्।

अत्र प्रश्नः समुदेति (१) किंविधानि तानि पात्राणि येषां विश्रान्तये रङ्गशीर्षं प्रयुज्यते। (२) इयं विश्रान्तिः कदापेक्ष्यते—अभिनयकाले उताहो अभिनयात् प्रागेव, अभिनयात् पश्चादेव वा। अस्माकं समाधान-मिहास्ति—(१) यानि पात्राणि रङ्गे समागतानि सन्ति, तान्येव यदि नाम तत्र संवादानुबन्धे सततप्रामुख्यं न भजन्ते केवलं क्वचित्-क्वचिदेव किञ्चिद्वदन्ति, पृच्छ्यन्ते वा, तदा तानि पात्राणि रंगपीठस्य पश्चाद् रङ्ग-शीर्षेऽवस्थितानि तिष्ठन्ति। (२) विश्रान्तिस्तु कार्यस्य पश्चात् भवति। साधारणपात्राणि अभिनयकाले स्वकार्यं कृत्वान्येभ्यः प्रधानपात्रेभ्यः स्वस्वकार्यप्रस्तुतयेऽवसरं विधातुं तेषां प्रामुख्यं च समानेतुं स्वयमेव पश्चाद् भवन्ति रंगशीर्षभागे विश्राम्यन्ति च। पुनश्च यदा क्वचिदा-वश्यकता भवति तदाते सम्मुखमायान्ति।

अत्रेदमवधेयं वर्तते यत् रङ्गपीठे केवलं तान्येव पात्राणि प्रेक्षकाणां साम्मुख्यं भजन्ते ये स्वकीयप्रतिक्रियाभिर्वचनैरनुभावादिभिश्चानुरंजयन्ति

---

१. नाट्यमण्डपस्य ह्युत्तानसुप्तवदवस्थितस्य रङ्गपीठं मुख्यम्। तदष्टहस्तं शिरः।

२. ना. शा. २.९६ अधिकृत्य भारती। अस्यां कारिकायां रङ्गपीठप्रवेशनमिति रङ्गशिरप्रवेशनमेवाभिनवगुप्तः सम्यग् व्याचष्टे, यतो हि नाम रङ्गशिरस्तु रङ्गपीठस्योत्तमाङ्गमेव।

दर्शकान् । अन्यान्यनायकपात्राणि रङ्गशीर्षे विश्राम्यन्ति ।[1]

## प्रमाणम्

भरतानुसारेण यथायोगं क्षेत्रमवचित्य चतुष्षष्टिकरान् कृत्वा द्विधा कुर्यात् । पुनश्च तान्

**पृष्ठतो यो भवेद् भागो द्विधाभूतस्य तस्य तु ।**
**सममर्धविभागेन रङ्गशीर्षं प्रकल्पयेत् ॥ २.३४**

अत एव रङ्गशिरसो दैर्घ्यमष्टहस्तं, विस्तारश्च द्वात्रिंशद् हस्तं प्रमाण्यते । तत्पृष्ठे तु दैर्घ्याद्धि षोडशहस्तं नेपथ्यगृहं भवति । विस्तारात्तु द्वात्रिंशत्करमेव तत् ।[2] नैपथ्यादिकं च तत्र गृह्यते । 'शुद्धादर्शतलाकारं रङ्गशीर्षं प्रशस्यते' इति भरतेन विशेषितम् ।[3]

अन्यत्र—**समुन्नतं समं चैव रङ्गशीर्षं तु कारयेत् ।**
**विकृष्टे तून्नतं कार्यं चतुरश्रे समं तथा ॥ ना.शा. २.१००**

## नेपथ्यगृहेण सम्बन्धः

अभिनवगुप्तो विशदयति—अत्र नेपथ्यगृहस्य द्वारद्वयं कार्यम् । एकं दक्षिणतः, अपरमुत्तरतः ।[4] अपरञ्च भरतो व्याख्याति—

**नेपथ्यगृहकञ्चैव ततः कार्यं प्रयत्नतः ।**
**द्वारं चैकं भवेत्तत्र रङ्गपीठप्रवेशनम् ॥ २.९६**

इमां कारिकां विशदयन्नाहाभिनवगुप्तः 'तेन द्वारद्वयमेव रङ्गशिरसि नेपथ्यगतपात्र - प्रवेशाय कर्तव्यम् ।' आद्यरङ्गाचार्यस्तु रङ्गपीठे एकद्वारं रङ्गशिरसि चान्यत्र मन्यते । तस्य मतं शास्त्र-सम्मतं न प्रतिभाति ।

---

१. श्री आद्यरङ्गाचार्योऽन्यथा मन्यते। रङ्गशीर्षेऽपि पात्राणि अभिनये व्यापृतानि सन्ति, इति प्रतिपादयन् स कथयति—The Rangasirsa in this oblong house is to be higher in level than the Rangapitha so that actors in deep scenes are more clearly visible. Bharati on Natyasastra P, 19,

२. ना. शा. २.३४ अधिकृत्य भारती ।

३. ना. शा. २.७३ । विप्रकृष्टमण्डपे रंगपीठापेक्षया रङ्गशिर उन्नतं वक्ष्यते । इति ना. शा. २.९७ अधिकृत्य भारती ।

४. ना. शा. २.६९ तदधिकृत्य भारती च ।

## रङ्गशीर्षोपयोगः

प्राक्कलितोपयोगान् व्यतिरिच्यापि रङ्गशीर्षस्य विशिष्टोपयोगो भरतानुसारेणासीत् प्रयोगसज्जायाम् । तथा हि—

**ये नेपथ्यगृहद्वारे मया पूर्वं प्रकीर्तिते ।**
**तयोर्भाण्डस्य विन्यासो मध्ये कार्यः प्रयोक्तृभिः ॥**

ना. शा. १३.२

अयं भाण्डविन्यासो रङ्गशीर्षस्य पश्चिमतमे भागेऽभवत् ।[1]

अभिनवगुप्तानुसारेण रङ्गशीर्षं प्रविशतां पात्राणामन्तः स्थानं भवति।

शाकुन्तले रङ्गशिरसि पात्राणि द्वितीयाङ्के राज्ञा सह बाणासन-हस्ता यवन्यः प्रविशन्ति ।[2] इमा यवन्य राज्ञो विदूषकस्य च संवादे भागग्राहिण्यो नो बभूवुः, पश्चात् सेनापतिः तत्र संगतः । एषां त्रयाणां संवादेऽपि यवन्यो भागग्राहिण्यो न सन्ति । ताः सर्वा रङ्गशिरसि वर्तमाना मृगया-निषेधात्मवार्तां नाश्रृण्वन्निति प्रेक्षकाणामपि धारणा बभूव । अत एव राजा ता विलोक्य कथयति[3]—अपनयन्तु भवत्यो मृगयावेशम् ।

चतुर्थाङ्के गौतमी प्रायशो रङ्गशीर्षे वर्ततेऽन्तिमे भागे । एकादशाच्छ्लोकात् पश्चात् द्वाविंशश्लोकं यावत् सा केवलं द्विर्वदति—

**जाते ज्ञातिजनस्निग्धाभिरनुज्ञातासि तपोवनदेवताभिः । प्रणम भगवतीः ।**

इदमुक्त्वा सा रङ्गशीर्षं प्रतिगच्छति । सा रङ्गपीठे नाभवत्, यदा काश्यपं-ताम्प्रत्यवदत्—कथं वा गौतमी मन्यते ।

नाम्ना तस्यै अनुयोगस्तस्या दूरत्वं व्यनक्ति यः कश्चित् निकटं वर्तते, तस्मै नाम्ना संज्ञापनं साधारणतो न विधीयते तत्र गौतमी वाक्यमेकं वदति रङ्गशीर्षे क्षणार्धं पुनरागत्य—

१. 'कुतपस्य तु विन्यासः प्रत्याहार इति स्मृतः ।' इति भारतीयं कारिकाम् २.१७ विशदयन्नभिनगुप्तः प्राह—नेपथ्यगृहद्वारयोर्मध्ये पूर्वाभिमुखो मार्दङ्गिकः' इत्यादि ।

२, एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृतः इत एवागच्छति प्रियवयस्यः ।

३. अत्र विलोक्य पदेन तासां साधारणवार्तापरिधेर्बहिर्भावः प्रतीयते ।

एतावान् वधूजनस्योपदेशः। एतत् खलु सर्वमवधारय।

पुनः सा प्रत्यावर्तते रङ्गशीर्षे। ततः प्रवर्तते पुनः काश्यपशकुन्तलायोनां संवादो रङ्गपाठे। तस्य मध्ये सान्तिमवारमेतावन्मात्रं वदति—'जाते परिहीयते गमनवेला। निवर्तय पितरम् अथवा चिरेणापि पुनः पुनरेषा एवं मन्त्रयिष्यते। निवर्ततां भवान्।

इदमुक्त्वा सा पुनः रङ्गशीर्षं प्रतिगच्छति।

शारद्वतस्तु चतुर्थाङ्के नवमश्लोकात्पूर्वं प्रवेशकाल एवरङ्गपीठं समायाति। शार्ङ्गरवेण सह स वदति—

**भगवन् इमौ स्वः।**

पश्चात् स रङ्गशीर्षे एवाङ्कान्तं यावत्तिष्ठति किन्तु शारद्वतः संवादे भागं न गृह्णाति।

पञ्चमाङ्के पुरोहित आश्रमवासिभिः सह रङ्गपीठमायाति। स ( राजानं निर्दिश्य ) 'भो भोस्तपस्विनः, असावत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति। पश्यतैनम्' इति कथयति। पुनश्च (पुरो गत्वा) एते विधिवदर्चितास्तपस्विनः। कश्चिदेवमुपाध्यायसन्देशः। त देवः श्रोतुमर्हतीति स वदति। पश्चात् स रंगशिरस्यात्मानं निधाय तत्रैव प्रायोऽङ्कान्तं यावत्तिष्ठति। आश्रमवासिनां वार्तायाः पश्चाद् राजा पुरोहितं प्रतिवदति 'भवन्तमेव गुरुलाघवं पृच्छामि' अस्मिन् सुदीर्घकालावधौ स प्रेक्षकैः कार्यव्यापृतपात्रैश्चानिध्यायमानो रङ्गशीर्षेऽतिष्ठत्।

अङ्केऽस्मिन् वेत्रवती यदा कदा रङ्गपीठमागच्छति। प्रायशः सा रङ्गशीर्षे विश्राम्यतीति स्पष्टमेव।

पञ्चमेऽङ्के कञ्चुकी आश्रमवासिभिः सह प्रविशति, अङ्कान्तं यावद् रङ्गे तिष्ठति। सोऽङ्के केवलमेकमेवाधोवाक्य वदति—

**इत इतो भवन्तः**

अतः परं तस्य स्थिती रङ्गशिरसि बभूवेति निश्चप्रचम्।

वस्तुतः कञ्चुकी वेत्रवती च रङ्गस्य शोभार्थमेव विलसतः। राज्ञां वैभवस्य द्योतकानि पात्राणि राजप्रासादपरिधौ तैः सह भवन्तु नामेति विचार्य रङ्गशीर्षे तेषामवस्थितिर्विहिता।

षष्ठांके पुनरन्तिमे भागे यवनी शरासनं दातुं रङ्गेप्रविशति। साङ्कान्तं यावत् रङ्गशीर्षे तिष्ठति, न तु रङ्गपीठे। अत्र प्रतीहारी अपि "इत इतो देवः" इति कथनस्य पश्चात् रङ्गशीर्षे तिष्ठत्यङ्कान्तं यावत्।

तत्र निष्ठ्यूतार्थोऽस्य निबन्धस्याधोलिखितो विलसति—

१. रंगशिरः रङ्गशीर्षं वा पश्चिमतो नेपथ्यं यावत् पूर्वतश्च रङ्ग-पीठं यावत् विस्तृतमासीत्।

२. नेपथ्यस्य पूर्वभित्तौ द्वारद्वयं रङ्गशीर्षे गमनागमनयोर्मार्गारम्भं प्रस्तौति।

३. रङ्गशिरो रंगपीठं प्रविशतां पात्राणामन्तःस्थानम्।

४. अनायकपात्राणि रङ्गपीठं स्वनियोगं विधाय रङ्गशीर्षे तावद् विश्राम्यन्ति स्म यावत् तेषामपेक्षापुनः रङ्गपीठे नाभवत्।

५. रङ्गपीठे तान्येव पात्राणि तिष्ठन्ति, येषां कार्यजातं, प्रतिक्रियाः, अनुभावा, भावाः प्रेक्षकाणां कृते रसनिष्पत्ति-दिशि महत्त्वं भजन्ते।

६. यथावश्यकं पात्रेण स्वनियोगं परिसमाप्य स्वयमैव रङ्गशीर्षे पश्चाद् गत्वापरेषां सम्प्रतिसंवादभागग्राहिणां पात्राणां कृते स्थानं कर्तव्यम्।

—: o :—

# अभिज्ञानशाकुन्तले प्रवेशकानां विन्यासः

अभिज्ञानशाकुन्तले द्वितीयाङ्कस्य प्रारम्भे विदूषको रंगे प्रविशति। स एव तत्रात्मकथां स्वानुभूता स्वयमेव दृष्ट्वा निरूपयति। पश्चाद् राजा प्रविशति। अत्र प्रश्नः समुदेति—किं राज्ञ आगमनात् प्राग् विदूषकस्य वचनानि प्रवेशक इति संज्ञाप्यानि, उताहो तानि द्वितीयाङ्कस्य भाग एव। किं तत्र प्रवेशको नास्ति।

प्रकरणेऽस्मिन् प्रसङ्गवशात् अङ्कस्य प्रवेशकस्य च विशेषलक्षणानि निरूप्यन्ते। अङ्कस्य लक्षणानि अधोविधानि सन्ति—

( १ ) तत्र नायकेन भवितव्यम्। नायकस्त्वत्र फलाधिकारी, कार्य-नायकः, प्रतिनायकः, नायिका वा स्यात्।[1]

( २ ) श्रव्येण सूच्येन वा क्वचिच्छबलितं दृश्यमेव प्राधान्येनाङ्कभागे भवेत्।

प्रवेशकस्य विशेषलक्षणानि अधोविधानि सन्ति—

( १ ) तत्राधमकोटिकेन पात्रेण भवितव्यम्।

(२)वृत्त-वर्त्तिष्यमाण-वर्तमानानां कथांशानां सूचनामात्र तत्र स्यात्।[2]

अङ्कस्य प्रवेशकस्य च परिभाषामपेक्ष्येदं विचारणीयं वर्तते यत् किन्नाम विदूषकवचनानि प्रवेशकः? तत्राङ्कस्य लक्षणानि न घटन्ते यतो हि नाम नायककोटिकं पात्रं तत्र नास्त्येव। अन्यच्च तत्र कार्याणां दृश्य-तापि नास्ति। प्रेक्षकाः केवलं वृत्तविवरणानि शृण्वन्ति, न किञ्चित् पश्यन्ति। अत एवाङ्कत्वं तत्र नास्त्येव।

किं पुनः प्रवेशकत्वं तत्र वर्तते? अथ किम्, यतो हि नाम तत्र केवल-मेकं पात्रमधमकोटिकमस्त्येव। भूतकथावृत्तानां वर्तमानवद् सूचना तत्र वर्तत एव।

---

१. अत्र नायको मध्यमसामान्यवचनेऽभिप्रेतः। दशरूपकतत्त्वदर्शने पृष्ठं ८७ द्वितीये संस्करणे।

२. दशरूपके वृत्तवर्तिष्यमाणानामेव चर्चा प्रवेशकार्थं विहिता, किन्तु तत्र वर्त-मानानां कथांशानां निदर्शनं प्रवेशके भवितुमर्हतीति सोदाहरण दशरूपक-तत्त्वदर्शने पृष्ठं ६५ दर्शनीयम्।

न खलु विदूषकस्य प्रवेशक भागादङ्कभागे सततोपस्थितिः प्रवेशककोटिं बाधते। अन्यत्रापि कालिदासः प्रवेशकस्य पात्रमङ्कभागेऽवतारयति। तद्यथा विक्रमोर्वशीयस्य द्वितीयाङ्कात् प्राक् प्रवेशके विदूषकः चेटया सह वार्तालापं समाप्य बहिर्न गच्छति। स प्रवेशकस्य समाप्तौ रङ्गम-परित्यज्य प्रविशता राज्ञा सहानुवर्तते।[1]

चतुर्थाङ्कात् प्राक् क्रमशो विष्कम्भकत्रयं वर्तते—
प्रथमः—अनसूया-प्रियंवदयोरारम्भिकः
द्वितीयः—संवादः केवलं शिष्यस्य वार्ता
तृतीयः—अनसूयाप्रियंवदयोः शिष्यात् पश्चात् पुनः वार्तालापः।

अत्र सम्पादकानां विप्रतिपत्तयो वर्तन्ते। प्राचीनसम्पादकाः काले प्रभृतयः पूर्वोक्तं प्रथममेवार्थोपक्षेपकं मन्यन्ते, पश्चात् द्वितीयं तृतीयं च विष्कम्भकमङ्के निवेशयन्ति। नैतत् साध्विति वक्ष्यते। केवलं प्रो० रेवा-प्रसादद्विवेदी तृतीयविष्कम्भकं यावदर्थोपक्षेपकस्य प्रसारं मन्यते। तस्येद-मवधारणं वैज्ञानिकं सुविचारितमेव।

द्वितीयस्तृतीयश्च विष्कम्भकौ अङ्कभागे न निवेशनीयौ यतो हि नाम तत्र मध्यमसामान्य-कोटिको नायको नास्त्येव। अपरञ्च एतयोर्द्वयोः सूच्यत्वं स्पष्टमेव न तु दृश्यत्वं तत्र मनागपि वर्तते। अत एवाङ्कत्वं न ग्रहणीयं तयोः।

प्रो० द्विवेदी एतत्त्रयस्य मिश्रविष्कम्भकत्वं समवायेन संकेतयति। नैतत् साधु प्रतिभाति। त्रयोऽपि इमे विष्कम्भकाः पृथक् पृथगेव संकेत-मर्हन्ति। अन्यच्च द्विवेदिनिर्देशानुसारेण सख्यौ अधमकोटिके सम्प्रधा-रिते। नैतत् साधु प्रमाणितम्। अधमकोटिकभूमिकायाः किमपि लक्षणं सख्योर्नास्ति। सख्यौ मध्यमकोटिके स्तः। न खलु दुर्वाससो नेपथ्यवच-नेन प्रथमविष्कम्भकस्य कोटिर्निर्धारणीया, यतो हि नाम नेपथ्यवचनं तु अन्या कोटिः, दुर्वासाश्च विष्कम्भकस्य पात्रं नास्त्येव।

---

१. प्रवेशकस्यान्तिमे भागे विदूषकः कथयति—एष पुनः प्रियवयस्यो धर्मासन-समुत्थित इत एवागच्छति। तद् यावत् पार्श्वपरिवर्ती भवामि।
प्रो० रेवाप्रसादद्विवेदिना कालिदासग्रन्थावल्यां प्रवेशकोऽयं मिश्रविष्कम्भक इति संकेतितम्। नैतत् साधु प्रतिभाति। प्रवेशकस्य पात्रद्वयं विदूषकचेटयौ अधमौ। वैतालिकस्तु चूलिका-प्रवर्तकः प्रवेशकस्य पात्रं नास्ति।

षष्ठाङ्कात् प्राक् धीवरश्यालादीनां वार्तालापः साधुसम्मतः प्रवेशक इति। एतस्मात्प्रवेशकात् पश्चाद् अङ्कः प्रवर्तत इति सर्वेषां सम्पादकानां मतम्।[1] नैष तेषां समीचीन आग्रह प्रतिभाति, यतो हि नाम प्रथमप्रवेशकस्य पश्चात् सानुमतीचेटी - 'कञ्चुकिनां वार्तालापेऽङ्कत्वं नास्त्येव सूच्यत्वात् नायकपुरुषाभावात् दृश्यताऽभावाच्च। अत्राङ्कारम्भस्तु तस्मात् स्थानाद् भवति यत्र पश्चात्तापसदृशवेषो राजा प्रविशति।

—: ० :—

१. प्रो० रेवाप्रसादद्विवेदी कालिदासग्रन्थावल्यामत्रार्थोपक्षेपकद्वयं मन्यते। किन्तु तयोर्नाम समवायेन मिश्रविष्कम्भक इति संकेतयति। तयोः पृथग्भावः प्रतिपादनीयः। प्रथमस्तत्र श्यालादीनां वचनानि प्रवेशक एव, पश्चात् सानुमती-कञ्चुके-चेटीनां वार्तालापो मिश्रविष्कम्भकः कञ्चुकिनो मध्यमत्वात् चेटया अधमत्वाच्च।

# नाटके वर्णनसन्निवेशः

'वर्णनप्रधानमेव महाकाव्यम्' इति सूत्रेण कस्यचिन्नायकस्य चरित-निरूपणे बहुविधवर्णनानां संग्रन्थनं तत्र युज्यत एव। तत्राधिकांश एव वर्णनपरैः श्लोकैः संभृतो वर्तते। विश्वनाथानुसारेण यथायोगवर्णनीया विषया अधोलिखिताः सन्ति—

**सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ।**
**प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ॥**
**सम्भोग-विप्रलम्भौ च मुनिस्वर्गपुराध्वराः ।**
**रणप्रयाणोपयममन्त्रपुत्रोदयादयः ॥**

इति दिशा मानवकृतिषु प्रकृतिषु च यत्किञ्चिद् रमणीयं वैभव-सम्पन्नं च तत् सर्वं वर्णनद्वारेण क्वचित् रसानामुद्दीपनविभावरूपेणान्यत्र लोकानुरञ्जनेन प्रचीयते। पूर्वोक्ता वर्णनविषया न केवलं महाकाव्येऽपि-तु रूपकेष्वपि महाकाव्यदिशा सस्पृहं सगृह्यन्त इति निबन्धेऽस्मिन् प्रस्था-पयिष्यतेऽभिज्ञानशाकुन्तलस्योदाहरणद्वारेण।

**मृगया**

मृगानुसारी सशरचापहस्तो दुष्यन्तः सूतेन वर्ण्यते—

**कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके।**
**मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनम् ॥**

पश्चात् शरभयात् पलायमानो मृगो वर्ण्यते अयं पुनरिदानीमपि—
**'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः'** १.७ इत्यारभ्य
यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलताम्—

सूत, पश्यैनं व्यापाद्यमानम्। १.९ इत्यन्तेन मृगयावर्णनं प्रपञ्चितम्।

नायं कथांशः आधिकारिकवस्तुना साक्षादनुबद्धः। मृगयापथेन राजा कण्वाश्रमं प्रतिगच्छतीति कथनमात्रेण विष्कम्भके राज्ञस्तत्रोपस्थितिः सूचिता भवेत्। मृगयावर्णनं तु प्रेक्षकाणाम्प्रियमित्यभिप्रायेण तस्य समावेशोऽभीष्ट एव कवेः।

**तुरगखुरतस्तथा हि रेणु**--इत्यादि १.२९

अभिज्ञानशाकुन्तलस्य प्रथमाङ्कस्य पश्चात् सानुरोधं मृगया वर्ण्यते। तद्यथा,

विदूषकः—भो कष्टम्। एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि। अयं मृगः, अय वराह, अयं शार्दूल इति मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वनराजीषु आहिण्डयतेऽटवीतोऽटवी। पत्र-संकरकषायाणि कटूनि गिरिनदीजलानि पीयन्ते। अनियतवेलं शूल्यमांस-भूयिष्ठ आहारो मृग्यते। तुरगानुधावनकण्डितसन्धे रात्रावपि निकामं शयितव्यं नास्ति। ततो महत्येव प्रयूषे दास्याः पुत्रैः शकुनिलुब्धकैर्वन-ग्रहणकोलाहलेन प्रतिबोधितोऽस्मि। इयतेदानीमपि पीडा न निष्क्रामति।

विश्वसाहित्येऽपि विरलमेवेदृशं विनोदस्थानं मृगयावर्णनम्। अत्रा-वधेयं वर्तते यन्नेदं नाटयांगमपितु विशुद्धकाव्यमेवानुरञ्जनम्। अपरञ्च तत्रैव—

एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृत इत एवागच्छति प्रियवयस्यः।[1]

द्वितीयाङ्के राज्ञो मृगयां प्रति निरुत्सुकं चेतो वर्णितम्। यथाहि—

> न नमयितुमधिज्यमस्मि शक्तो
> धनुरिदमाहितसायकं मृगेषु।
> सहवसतिमुपेत्य यैः प्रियायाः
> कृत इव मुग्धविलोकितोपदेशः॥ २.३

सेनापतेर्मतेन दृष्टदोषापि केवलं गुण एव संवृत्ता। तथाहि—

> **अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं**
> **रविकिरणसहिष्णु स्वेदलेशैरभिन्नम्।**
> **अपचितमपि गात्रं व्यायतत्वादलक्ष्यं**
> **गिरचर इव नागः प्राणसारं बिभर्ति॥ २.४**

> **मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः**
> **सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।**
> **उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले**
> **मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः॥ २.५**

---

1. एतत्सर्वं द्वितीयाङ्कात्पूर्वं प्रवेशके वर्तत इति लेखकस्य सम्मतम्।

विदूषकः ( सेनापतिं प्रति )—त्वं तावदटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्य जीर्णऋक्षस्य कस्यापि मुखे पतिष्यसि।

**राजा—गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं**
**छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।**
**विस्रब्धं क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले**
**विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः॥** २.६

मृगयाप्रसङ्गेनानेन नाटकादिषु वर्णनाया महत्त्वपूर्णं स्थानं सविशेषं प्रतिभाति।

**तपोवनम्**

महाकाव्ये वनोपवनवर्णनमभीप्सितमेव। अत्राभिज्ञाने तादृशमेव तपोवनवर्णनमुत्कृष्टं वर्तते। तद्यथा

**नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः।** १.१४
**तीव्राघातादभिमुखतरुस्कन्धभग्नैकदन्तः।** इत्यादि १.३०

अन्यच्च—

**कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी**
**पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः।**
**शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यहम्**
**शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्॥** ६.१७

नवकुसुमयौवना वनज्योत्स्ना स्निग्धपल्लवतया चोपभोगक्षमः सहकारः।

काश्यपस्तपोवनतरून् सम्बोधयति—

**पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या,**
**नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।**
**आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः,**
**सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्॥** ४.९

प्रियंवदा पुनः निर्वर्णयति तपोवनं शकुन्तलायाः प्रस्थानकाले। तद्यथा—

**उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तनमयूराः।**
**अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः॥** ४,१२

शकुन्तला वनज्योत्स्नां स्मरति—

वनज्योत्स्ने, चूतसंगतापि मां प्रत्यालिंग इतो गताभिः शाखाबाहुभिः ।

काश्यपः समर्थयति—

**चूतेन संश्रितवती नवमालिकेय-**
**मस्यामहं त्वयि च सम्प्रति वीतचिन्तः ॥** ४.१३

गर्भमन्थरा शकुन्तला मृगवधूं प्रति समुत्सुका स्वभावतो वर्तते प्रस्थानकाले । सा पितरं कण्वं निवेदयति—तात, एषा उटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूः यदानघप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ ।

शकुन्तलाया निवसन आसक्तो मृगशावः कण्वेन निर्वर्णितः—

**यस्य त्वया व्रणविरोपणमिङ्गुदीनां**
**तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।**
**श्यामाकमुष्टिपरिवर्धितको जहाति**
**सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥** ४.१४

सप्तमाङ्के पुनः कविः काश्यपस्याश्रमं वर्णयति । तथा हि—

मातलिना कथितम्—

एतौ अदितिपरिवर्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः ।

ततो राजा समीक्षते—

स्वर्गादधिकतरं निर्वृतिस्थानम् । अमृतह्रदमिवावगाढोऽस्मि ।

राजा—ननु विस्मयादवलोकयामि—

**प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने,**
**तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।**
**ध्यानं रत्नशिलागृहेषु बिबुधस्त्रीसन्निधौ संयमो,**
**यत्कांक्षन्ति तपोभिरन्यमुनयस्तस्मिँस्तपस्यन्त्यमी ॥** ७.१२

**मुनिवर्णनम् ।**

मातली राजानं प्रति मुनिं काश्यपं सप्तमाङ्के वर्णयति—

**वल्मीकाग्रनिमग्नमूर्तिरुरसा सन्दष्टसर्पत्वचा**
**कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसम्पीडितः ।**
**अंशव्यापि शकुन्तनीड निचितं बिभ्रज्जटामण्डलं ।**
**यत्र स्थाणुरिवाचलो मुनिरसाभ्यर्कबिम्बं स्थितम् ॥**

पुनश्च सप्तमाङ्के—

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्त्तारं भुवनत्रयस्य सुषवे यद् यज्ञभागेश्वरम् ।
यस्मिन्नात्मभवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसम्भवमिदं तत्स्रष्टुरेकान्तरम् ॥ ७.२७

यात्रापथः

रम्यान्तरः कमलिनीहरितैः सरोभिश्,
छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात् कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥

इति पङ्क्त्यां शकुन्तलादीनां यात्रायै पथविशेषं निदर्शयति। सप्तमाङ्क आकाशयानेनेन्द्रलोकात् काश्यपाश्रम यावद् यात्रा वर्णिता। अस्मिन् प्रकरणे स्वर्गमार्गं निदर्शयति—

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मिः ।
तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ७.६

राजा—

अयमरविवरेभ्यश्चातकैर्निष्पतद्भिर्
हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरिघनानां वारिगर्भोदराणां
पिशुनयति रथस्ते सीकरक्लिन्ननेमिः ॥ ७.७

( अधोऽवलोक्य ) वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः तथा हि—

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी,
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः ।
सन्धानं तनुभावनष्टसलिलव्यक्त्याव्रजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ ७.८

मातलिः—साधु दृष्टम् ( सबहुमानमवलोक्य ) अहो उदाररमणीया पृथिवी ।

राजा—मातले, कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिष्यन्दः सान्ध्य इव मेघः सानुमानवलोक्यते । इत्यादि

इन्द्रस्य रथस्य यात्रा-विशेषा वर्ण्यन्ते—

**उपोढशब्दा न रथाङ्गनेमयः**
**प्रवर्तमानं न च दृश्यते रजः ।**
**अभूतलस्पर्शतया निरुद्धति-**
**स्तवावतीर्णोऽपि रथो न लक्ष्यते ।। ७.१०**

**राजौदात्त्यम्**

दुष्यन्त-विषये ऋषिकुमारकः कथयति—

अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः । **अथवोपपन्नमेतद् मुनिभ्यो नातिभिन्ने राजनि । कुतः**

**अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये**
**रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।**
**अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः**
**पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ।। २.१५**

द्वितीय ऋषिकुमारकः समर्थयति—

**नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीम्** । इत्यादि २.१६

कञ्चुकी राज्ञः कर्तव्य-परायणतां वर्णयति----

**प्रजाः, प्रजाः स्वा इव तन्त्रयित्वा**
**निषेवतेऽश्रान्तमना विविक्तम्** । ५.५

अस्मिन्नाटके दुष्यन्तो राज्यभारं समालोचते—

**औत्सुक्यमात्रमवसाययति प्रतिष्ठा**
**क्लिश्नाति लब्धपरिपालनवृत्तिरेनम् ।**
**नातिश्रमापनयनाय न च श्रमाय**
**राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ।। ५.६**

तदेव समर्थयति वैतालिकद्वयम्—

**स्वसुखनिरभिलाषः खिद्यसे लोकहेतो** । इत्यादि ५.७
**नियमयसि कुमार्गप्रस्थितानात्तदण्डः**
**प्रशमयसि विवादं कल्पसे रक्षणाय ।**

**अतनुषु विभवेषु ज्ञातयः सन्तु नाम**
**त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ ५.८**

शार्ङ्गरवोऽपि नरपतिं प्रशंसति—

**महाभागः कामं नरपतिरभिन्नस्थितिरहो ।** इत्यादि ५.१०

शिष्यौ पुनः राजौदात्त्यं निर्वर्णयतः—

**कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।**
**तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥** ५.१४

**वर्णाश्रमधर्मः**

कालिदासो वर्णाश्रमधर्मस्य प्रतिष्ठापको यत्र-तत्र तमेवानुसन्धत्ते । तद्यथा—

**सहजं किल यद् विनिन्दितं न हि तत्कर्म विवर्जनीयकम् ।**
**पशुमारणकर्मदारुणोऽप्यनुकम्पामृदुरेव श्रोत्रियः ॥ ६.१**

पौरवाणां कुलव्रतं तदेवानुसरति—

**भवनेषु रसाधिकेषु पूर्वं क्षितिरक्षार्थमुशन्ति ये निवासम् ।**
**नियतैकपतिव्रतानि पश्चात् तरुमूलानि गृहीभवन्ति तेषाम् ॥७.२०**

**सत्क्रिया**

समुदाचारस्यापूर्वः कश्चिद् विशेषः सत्क्रियायां परिलक्ष्यते । एतस्याः किंचित् स्वरूपमधोलिखिते वर्णितम्—

राजा—मातले, अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये ।

मातलिः ( सस्मितम् )—आयुष्मन्, उभयत्राप्यपरितोषं समर्थये ।

**प्रथमोपकृतं मरुत्वतः**
**प्रतिपत्त्या लघु मन्यते भवान् ।**
**गणयत्यवदान-विस्मितो**
**भवतः सोऽपि न सत्क्रिया गुणान् ॥ ७.१**

राजा—मातले, मा मैवम् । न खलु मनोरथानामप्यभूमिर्विसर्जनावसर-सत्कारः । मम हि दिवौकसां समक्षमर्धासनोपवेशितस्य ।

**अन्तर्गतप्रार्थनमन्तिकस्थं**
**जयन्तमुद्वीक्ष्य कृतस्मितेन ।**

**आमृष्टवक्षोहरिचन्दनाङ्का**
**मन्दारमाला हरिणा पिनद्धा ॥ ७.२**

मातलिः—आयुष्मन्, इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः —

**विच्छित्तिशेषैः सुरसुन्दरीणां**
**वर्णैरमी कल्पलतांशुकेषु ।**
**विचिन्त्य गीतक्षममर्थबन्धं**
**दिवौकसस्त्वच्चरितं लिखन्ति ॥ ७.५**

काश्यपदर्शनावसरे राजा कथयति—

तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ।

**आशीर्वचनम्**

मारीचस्याशीर्विद्योतते सप्तमाङ्के—

**आखण्डलसमो भर्त्ता जयन्तप्रतिमः सुतः**
**आशीरन्या न ते योग्या पौलोमीसदृशो भव ॥ ७.२८**

अदितिः —

**जाते, भर्तुर्बहुमता भव ।**

मारीचः —

अवश्यं दीर्घायुर्वत्सक उभयकुलनन्दनो भवतु ।

**दिष्टचा शकुन्तला साध्वी सदपत्यमिदं भवान् ।**
**श्रद्धा वित्तं विधिश्चेति त्रितयं तत् समागतम् ॥ ७.२९**

तदनन्तरं प्रसादानुभूतिः । तद्यथा—

**तव प्रसादस्य पुरस्तु सिद्धयः । ७.३०**

**उच्चादर्शः**

प्रेक्षकाः सद्वृत्तं गृह्णीयुरित्युद्दिश्य कविरुच्चादर्शान् चित्रयति । तथा हि—

**भवन्ति नम्रास्तरवः फलागमै-**
**र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।**
**अनुद्धताः सत्पुरुषाः समृद्धिभिः**
**स्वभाव एवैष परोपकारिणाम् ॥ ५.१२**

राजापि वशिनामादर्शमुत्थापयति —

**कुमुदान्येव शशाङ्कः सविता बोधयति पंकजान्येव।**
**वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः॥** ५.२८

प्रजया सम्बन्धो वर्णितो राज्ञा—

**येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।**
**स स पापादृते तासां दुष्यन्त इति घुष्यताम्॥** ६.२३

अन्यत्र—

**हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः॥** ६.२८

**प्रसादसौम्यानि सतां सुहृज्जने।**
**पतन्ति चक्षूंषि न दारुणाः शराः॥** ६.२९
**सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः।**
**सम्भावनागुणमवेहि तमीश्वराणाम्॥** ७.४

दुष्यन्तः सप्तमाङ्के प्रकटयति—अनार्यः परदार्यपृच्छाव्यवहारः।

**नीतिपथः**

**अतः परीक्ष्य कर्तव्यं विशेषात् संगतं रहः।**
**अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम्॥** ५.२४
**ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते।**
इत्यादि ६.२५

**पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते।** ७.१३

**प्रजाप्रतिपत्तिः**

प्रतिहारी निवेदयति राज्ञे षष्ठाङ्के—काले प्रवृष्टमिव अभिनन्दितं देवस्य शासनं महाजनेन।

**कार्याकार्यविचारणा**

शकुन्तलायाः प्रत्याख्यानाद् भृशमुद्विग्नो नायकः कार्याकार्यविचारणायां व्यापृत एव कथयति—

**संरोपितेऽप्यात्मनि धर्मपत्नी**
**त्यक्ता मया नाम कुलप्रतिष्ठा।**
**कल्पिष्यमाणा महते फलाय**
**वसुन्धरा काल इवोप्तबीजः॥** ६.२४

**रूपसौन्दर्यं नायकयोर्वर्णनं वा**

नायकयो रूपसौन्दर्यस्य वर्णनं सम्भोगविप्रलम्भादीनां पृष्ठभूमिं प्रस्तौति। तद्यथा,

इदं किलाव्याजमनोहरं वपुः तपःक्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥ १.१७
सरसिजमनुविद्धं शैवलेनापि रम्यम्। इत्यादि १.१८।
अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥ १.१९
मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥ १.२३
स्रस्तांसावतिमात्रलोहिततलौ बाहूघटोत्क्षेपणात्। १.२७

दुष्यन्तः शकुन्तलाया रूपसौन्दर्यं निर्वर्णयति—

चित्रे निवेशयति परिकल्पितसत्त्वयोगा,
रूपोच्चयेन मनसा विधिना कृता नु।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ २.१०
अनाघ्रातं पुष्पं किसलयमलूनं कररुहै,
रनाविद्धं रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघम्॥ २.११
अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात्। ३.६
स्तनन्यस्तोशीरं शिथलित-मृणालैकवलयं।
प्रियायाः साबाधं किमपि कमनीयं वपुरिदम्॥ ३.७
क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यक्लान्ततरः, प्रकामविततावंसौ छविः पाण्डुरा। ३.८

शृङ्गाराभिलाषलुलितो नायक आत्मानं वर्णयति—

इदमशिशिरैरन्तस्तापाद् विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रसारिभिरश्रुभिः।
अनतिलुलितज्याघाताङ्कं मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ ३.१०

इदं नायकस्यात्मनिवेदनम्।

शकुन्तलाञ्च पुनर्वर्णयति—

**उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।**
**कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥** ३.१२

पञ्चमाङ्के राजा शकुन्तलां निर्वर्ण्यात्मगतं वदति—

**इदमुपनतमेवं रूपमक्लिष्टकान्ति**

**सम्भोगः**

अभिज्ञानशाकुन्तलस्य तृतीयाङ्के नायकयोः सम्भोगोपक्रमो वर्णितः । तद्यथा—

राजा (शकुन्तलां प्रति) नन्वयमाराधयिता जनस्तवसमीपे वर्तते—

**किं सीकरैः क्लमविनोदिभिरार्द्रवातं**
**संचारयामि नलिनीदलतालवृन्तम् ।**
**अङ्के निधाय करभोरु यथासुखं ते**
**संवाहयामि चरणावुत पद्मताम्रौ ॥** ३,१८

**अपरिक्षतकोमलस्य यावत् कुसुमस्येव नवस्य षट्पदेन ।**
**अधरस्य पिपासता मया ते सदयं सुन्दरि गृह्यते रसोऽस्य ॥**

राज्ञः सम्भोगविषय एकोक्तिर्विद्यते—

**मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् ।**
**मुखमंसविवर्तिपक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥**
३.२४

सप्तमाङ्के पुनः राजा—

**स्मृतिभिन्नतमसः इत्यादि ७.२२ आरभ्य ७.२५ यावत् ।**

**विप्रलम्भः**

विप्रलम्भस्तु प्रेष्ठ एव शृङ्गारवृत्तीनाम् । कञ्चुकिमुखेन दुष्यन्तस्य विप्रलम्भावस्था प्रथमं वर्णिता । तथा हि—

**रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते**
**शय्याप्रान्त-विवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।**
**दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा**
**गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ॥** ६.५

अथ च उत्सुको नायको विप्रलम्भे—

**प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथम् ।** इत्यादि । ६.६

राजात्मानः स्थितिं वर्णयति–

**मुनिसुतप्रणयस्मृतिरोधिना मम च मुक्तमिदं तमसा मनः।**
**मनसिजेन सखे प्रहरिष्यता धनुषि चूतशरश्च निवेशितः ॥ ६.८**

शकुन्तलामधिकृत्य

**इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता**
**स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।**
**पुनर्दृष्टिं वाष्पप्रसरकलुषामर्पितवती**
**मयि क्रूरे यत् तत् सविषमिव शल्यं दहति माम् ॥ ६.९**

**स्वप्नो नु माया नु मतिभ्रमो नु** । इत्यादि ६.१०

**तव सुचरितमङ्गुलीयनूनं।**
**प्रतनु ममेव विभाव्यते फलेन । ६.११**

अत्रैव विप्रलम्भावस्थायां स्मरणं भूतकालिकीनां घटनानां सम्यक् संघटते। सप्तमाङ्केऽङ्गुलीयकस्य शकुन्तलायै उपनयनम्, तस्य गङ्गा-स्रोतसि पतनम्, अङ्गुलीयकापालम्भ.[१] श्रृङ्गारितवृत्तिमुज्जागरयन्ति।

राजा स्वगतिं वर्णयति---

**साक्षात् प्रियामुपगतामपहाय पूर्वमित्यादि । ६.१६**

राजा सप्तमाङ्के ( शकुन्तलां विलोक्य ) कथयति—

**वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणी।**
**अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति ॥ ७.२१**

**ऋतुः**

वसन्तः कवेरभीष्ट एव चूतकोरकप्रसङ्गेन वर्ण्यते। तथा हि—

**आताम्रहरितपाण्डुर जीवितसर्वं वसन्तमासस्य।**
**दृष्टोऽसि चूतकोरक ऋतुमङ्गल त्वां प्रसादयामि ॥ ६.२**

---

१. दुष्यन्तः—कथं नु तं बन्धुरकोमलाङ्गुलिं
करं विहायासि निमग्नमम्भसि।
अथवा
अचेतनं नाम गुणं न लक्षये-
न्मयैव कस्मादवधीरिता प्रिया ॥ ६.१३

वसन्तस्य सखा कामदेवोऽर्च्यतेऽस्मिन् प्रसङ्गे—

**त्वमसि मया चूताङ्कुर दत्तः कामाय गृहीतचापाय ।**
**पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव ॥ ६.३**

विपर्ययेण वासन्तिकास्तरवस्तस्याश्रयिणश्च वर्णिताः । तद्यथा—

**चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः**
**सन्नद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया ॥**
**कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं**
**शङ्के संहरति स्मरोऽपि चकितस्तूर्णार्धकृष्टं शरम् ॥ ६.४**

**चित्रदर्शनम्**

प्रणयिनां चित्रदर्शनं तु विनोदस्थानमेव । सप्तमाङ्के राजा शकुन्तला-चित्रे स्वीयं भावचिह्नं निर्वर्णयति । तद्यथा—

**स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः ।**
**अश्रु च कपोल-पतितं दृश्यमिदं वर्तिकोच्छ्वासात् ॥ ६.१५**

चित्रे यदकृतं तदपि भावोद्रेकाय भवति । तद्यथा—

**कृतं न कर्णार्पितबन्धनं सखे**
**शिरीषमागण्डविलम्बिकेसरम् ।**
**न वा शरच्चन्द्रमरीचिकोमलं**
**मृणालसूत्रं रचितं स्तनान्तरे ॥६.१८**

तत्र चित्रे मधुकर—व्यसनमपि न विस्मृतम् । चित्रदर्शनप्रसङ्गेन रमणीयं वर्णनं मधुकरस्य दण्डविधानस्य भावोद्रेकं जनयति तथाहि—

**अक्लिष्टबालतरुपल्लवलोभनीयं**
**पीतं मया सदयमेव रतोत्सवेषु ।**
**बिम्बाधरं स्पृशसि चेद् भ्रमर प्रियाया-**
**स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ ६.२०**

नातः परं किञ्चिदनुभवनीयं श्रृंगारस्य विस्मृतिपथेन—

**दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।**
**स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ ६.२१**

सानुमत्या साधु समीक्षितम्—

**पूर्वापरविरोधी अपूर्व एष विरहमार्गः ।**

अदर्शनमपि सुखं जनयति—

**प्रजागरात् खिलीभूतस्तस्याः स्वप्ने समागमः ।**
**वाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ ६.२२**

**वधूजनोपदेशः**

काश्यपः ( शकुन्तलां प्रति ) सा त्वमितः पतिकुल प्राप्य—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भवदक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येव गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ ४.१८

अभिजनवतो भर्तुः श्लाध्ये स्थिता गृहिणीपदे । इत्यादि ४.१९

मारीचः शकुन्तलामुपदिशति—

वत्से, विदितार्थासि । तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः । पश्य—

शापादसि प्रतिहता स्मृतिरोधरुक्षे
भर्तर्यपेततमसि प्रभुता तवैव ।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशः ॥ ७.३२

**पुत्रोदयः**

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ४.४
ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ४.७
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनम् । ३.१९
भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ ४.२०

दुष्यन्तः कथयति षष्ठाङ्के ममाप्यन्ते पुरुवंशश्रीरेव वृत्ता ।

अपरञ्च—

अस्मात्परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि नियच्छतीति ।
नूनं प्रसूति-विकलेन मया प्रसिक्तं
धौताश्रुसेकमुदकं पितरः पिबन्ति ॥ ६.२५

सप्तमाङ्के पुनः भरतस्य चक्रवर्तित्वं वर्णितम्--

**रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः**
**पुरा सप्तद्वीपामवति वसुधामप्रतिरथः।**
**इहायं सत्त्वानां प्रसभदमनात् सर्वदमनः**
**पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ ७.३३**

**बालवत्सलता**

नाटकेऽस्मिन् शिशुत्रयं कवेरुपलब्धिः। महती प्रीतिः कवेः शिशुभ्यो महाकाव्येषु दृष्टैव। अत्र प्रथमं तावत् सिंहशिशुर्दुष्यन्तेन निर्वर्ण्यते--

**अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम्।**
**प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ ७.१४**

भरतस्य प्रथमदर्शनेन--

किं न खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे हृदयम्। नूनमनपत्यता मां वत्सलयति।

बालस्य चक्रवर्तिद्योतनहस्तो राज्ञा वर्णितः--

**प्रलोभ्यवस्तुप्रणयप्रसारितो**
**विभाति जालग्रथिताङ्गुलिः करः।**
**अलक्ष्यपत्रान्तरमिद्धरागया**
**नवोषसा भिन्नमिवैकपंकजम् ॥ ७.१६**

राजा स्वहृदयं प्रकटतीवानेन कथनेन--

**आलक्ष्यदन्तमुकुलाननिमित्तहासै-**
**रव्यक्तवर्णरमणीयवचः प्रवृत्तीन्।**
**अङ्काश्रय-प्रणयिनस्तनयान् वहन्तो**
**धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ ७.१७**

अधोलिखिते श्लोके तृतीयः शिशुः कविनावाप्यते--

**एवमाश्रम - विरुद्धवृत्तिना**
**सयमः किमिति जन्मतस्त्वया।**
**सत्त्वसंश्रयसुखोऽपि दूष्यते**
**कृष्णसर्पशिशुनेव चन्दनः ॥ ७.१८**

अत्र कृष्णसर्पशिशुस्तृतीय एव।

बालस्पर्शस्याभिनवागमो राजान प्रीणाति--

**अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रस्य सुखं ममैवम्।**

कां निर्वृतिं चेतसि तस्य कुर्यात्
यस्यायमङ्कात् कृतिनः प्ररूढः ॥ ७.३९

**प्रभातम्**

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतोऽरुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद् व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ ४.२

अपि च— अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि ॥ ४.३

**कञ्चुकीयः** –

नाटककवयः कञ्चुकिन आत्मवर्णनं श्लाघन्ते । तद्यथा—

आचार इत्यवहितेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थान-विक्लवगतेरवलम्बनार्था ॥ ५.३

**नारीनिन्दा**–

कवीनां वैदिककालादेव नारीनिन्दा पद्धतिरेव । पञ्चमाङ्के राज्ञो मुखादशोभनापि सम्प्रदायानुसारिणा कविना नारीनिन्दा प्रवर्तिता । तद्यथा—

राजा गौतमीं लाञ्छत्यधोविधम्–

इदं तत् प्रत्युत्पन्नमतिस्त्रैणमित्युच्यते ।

पुनश्च तामेव सम्बोधयन् राजाह–

स्त्रीणामशिक्षितपटुत्वममानुषीषु । इत्यादि ५.२२

पूर्वनिरूपितैः सन्दर्भैः स्पष्टमेव यन्महाकाव्यवदभिनेयार्थेष्वपि वर्णनानां वैशिष्ट्यं वर्तत एव, अभिज्ञानशाकुन्तले चाधोलिखिता विषया वर्णनद्वारेण समुन्नीताः ---

मृगया, तपोवनम्, मुनिः, यात्रापथः, राजौदत्त्यम्, वर्णाश्रमधर्मः, आशीर्वचनम्, उच्चादर्शः, नीतिपथः, प्रजाप्रतिपत्तिः, कार्याकार्यविचा-

रणा, रूपसौन्दर्यम्, सम्भोगः, विप्रलम्भः ऋतुः, चित्रदर्शनम्, वधूजनोपदेशः पुत्रोदयः, बालवत्सलता, प्रभातम्, कञ्चुकी, नारीनिन्दा च ।

अन्येषु नाटकेषु उपर्युक्तान् विषयानतिरिच्यापि वर्ण्यविषयाः समासक्ताः सन्त्येव । शृङ्गारप्रकाशे भोजेनाभिनेयार्थेषु देशवेषात्मकप्रवृत्तीनां चर्चाविषये तत्र वर्ण्यविषयाणां निदर्शनानि साङ्गोपाङ्गानि समुपात्तानि।

वर्णनसन्निवेशस्यावश्यंभाविता तस्याधोविधप्रयोजनेन परिकल्पनीया--

१. रसनिष्पत्तय आलम्बनोद्दीपनविभावानां प्रस्तुतिः । नान्यथोदात्तत्वादीनि प्रतिफलन्ति ।

२. प्रेक्षकाणां पाठकानां वा समक्षं निसर्गस्य, मानवकृतस्य सर्वोत्कृष्टविभूतीनां सन्दर्शनम् ।

३. वर्णितवस्तूनां सम्पर्केण प्रेक्षकाणामुदात्तीकरणम् ।

४. वर्णनद्वारेण भाविकथांशस्य सङ्केतः ।

५. समुदाचार-निदर्शनम्

६. नायकदेशकालकार्याणां परस्परसामञ्जस्यौचित्य-विधानम् ।

महाकाव्ये वर्णनानि सन्ति, नाटकेऽपि वर्णनानि भवन्त्येव । एतयोर्द्वयोर्यो वर्णनसन्निवेशो वर्तते स काव्यविधानुसारेण पृथक्-पृथग्विधो भवति। महाकाव्ये तु वर्णनाटवी प्रस्तूयते, तस्य वर्णनप्राधान्यात् । तत्र पाठकः कथावस्तु-तन्तुं विस्मरत्येव । नाटके पुनः वर्णनं प्रायशः कथांशस्यालङ्कार इव शोभाधायकं भवति, कथाशं समुन्नयति च । अत एव संक्षिप्तवर्णनं नाट्यस्य वैशिष्ट्यम् ।

उत्कृष्टवर्णनं तु रसानां प्रभवभूमिरेवाभिनेयार्थेऽनभिनेयार्थे वा काव्ये विलसति । पुनश्च प्ररोचनं यत् यथा महाकाव्यपरिभाषायां तथैव नाटकपरिभाषायामपि 'अमी वर्ण्या विषया यथायोगं सन्निवेशनीयाः' इति कल्पनीयम् ।

—: ० :—

# प्रकरी वर्णनादिर्नास्ति

प्रासङ्गिकवृत्तस्य प्रकरणे शारदातनयो भावप्रकाशने प्रकरी-लक्षण-मधोविधं परिभाषते—

**शोभायै वैदिकादीनां यथा पुष्पाक्षतादयः ।**
**तथात्र वर्णनादिस्तु प्रबन्धे प्रकरी भवेत् ।। ७.१३९**

'प्रकरी तु वर्णनादिः' इति सर्वथा त्रुटिपूर्णम् । तदेव व्याख्यास्यामः ।

प्रकरी तु प्रासङ्गिकवृत्तमेवेति शारदातनयोऽपि मन्यते । तद्यथा,

**प्रासङ्गिकामिधं वस्तु नाटके भवति त्रिधा ।**
**पताका-प्रकरीयुक्तपताकास्थानकक्रमात् ।। ७.१३५**

अनेन प्रकरी वस्तु एवेति सिद्धम् । इदं लक्षणं 'प्रकरी वर्णनादिः' इत्यत्र न संघटते यतो हि नाम वस्तु (कथावस्तु, इतिवृत्त वा) वर्णनं न भवति ।

अन्यत्रापि शारदातनयः प्रकर्या वस्तुत्वं निरूपयति । पताकास्थानक-परिभाषाप्रकरणे स स्पष्टयति—

**आगन्तुकेन भावेन यदभिव्यक्तिकारणम्,**
**वस्तुनो भाव्यवस्थस्य पताकास्थानकं तु तत् ।**
**तत्पताकाप्रकर्यादेर्भाव्यवस्थस्य वस्तुनः,**
**सूचनोपायमेवाहुः पताकास्थानकं बुधाः ।। ७.१४०**

निष्ठ्यूतार्थो विलसति यत् प्रकरी वर्णनादिर्नास्त्येव । भरतादयः प्रायः सर्वे नाट्यशास्त्राचार्याः प्रकर्या वृत्तत्वमेवावश्यकं मन्यन्ते ।

शारदातनयस्येदं प्रकरीलक्षणं भोजस्य श्रृङ्गारप्रकाशस्य प्रकरी-लक्षणमनुसरति । तद्यथा—लघुर्हि प्रकारः प्रकरीत्युच्यते । स तु पुष्पादीनामेव स्यात् । यथा च पुष्पप्रकरः परार्थोऽवरकादेः शयनस्थानस्य अन्यस्य वा शोभायै भवति, एवं महाप्रबन्धस्य ऋतुवर्णनादिः अन्यो वा तद्विधोव्यापारः सा प्रकरीति कथ्यते । एतदनुसारेण महाप्रबन्धे ( महाकाव्यादिषु ) वर्णनादिः प्रकरी भवतु नाम, न तु वर्णनादीनां नाटकादौ प्रकरीत्वम् ।

—: o :—

# अभिनेय-वस्तुनः पाञ्चविध्यम्

प्रेक्षकाणां बोधः कथं भवतीत्यपेक्षया नाटके पञ्चविधं वस्तु भवति।[1] तद्यथा—

१. श्रव्य-दृश्यम्

२. दृश्यम्

३. श्रव्यम्

४. ऊह्यम्

५. सूच्यम्

एतेषु प्रथमं चतुर्विधमङ्कभागे नियोज्यते। पञ्चमं चार्थोपक्षेपक एव निवेश्यते। क्रमशः सोदाहरणं परिभाष्यन्त इमे वृत्तभेदाः।

## श्रव्य-दृश्यम्

अङ्कभागे प्रायशः पात्रं किञ्चित् पठति गायति वा, तदनु तेन सहैवाभिनयेन स्वोक्तमर्थं प्रेक्षकाणां समक्षं दर्शयति। अत्र प्रेक्षकः शृणोति पश्यति च। अत एव श्रव्य-दृश्यत्वं सार्थकं भवति। तद्यथाभिज्ञानशाकुन्तले प्रथमाङ्के —

राजा—सूत, पश्यैनं व्यापाद्यमानम्। ( शरसन्धानं नाटयति। )

( नेपथ्ये )

भो भो राजन्, आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः।

सूतः ( आकर्ण्यावलोक्य च )—आयुष्मन्, अस्य खलु ते वाणपातवर्तिनः कृष्णशारस्यान्तरे तपस्विन उपस्थिताः।

राजा ( ससम्भ्रमम् ) तेन हि प्रगृह्यन्तां वाजिनः।

सूतः—तथा। ( रथं स्थापयति )

अत्र कथनान्तरमभिनयेन प्रत्यक्षीकरणं भवति। अत एव वस्तुनः श्रव्यत्वं दृश्यत्वञ्च प्रतीतम्।

---

१. साधारणता नाट्यशास्त्रकारा वस्तुनो द्वैविध्यमेव मन्यते—श्रव्य-दृश्य सूच्यञ्च।

धनञ्जयः शारदातनयश्च—

द्वेधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः।
सूच्यमेव भवेत्किंचिद् दृश्य-श्रव्यमथापरम्॥

नैतदवधारणं तथ्यानुरोधीति वचनमस्माकम्।

## दृश्यम्

यत्राभिनयाभिनिवेशि वाक्यं न प्रोच्यते, केवलमभिनयद्वारेण कार्यमेव प्रत्यक्षीकार्यते, तत्र दृश्यनामकं वस्तु विलसति। तद्यथाभिज्ञाने सप्तमाङ्के—

राजा—( सहर्षम्, आत्मगतम् ) कथमिव सम्पूर्णमपि मे मनोरथं नाभिनन्दामि ! ( बालं परिष्वजते )।

अत्र राज्ञो बालपरिष्वङ्गः केवलं दृश्यत एव न वाचा सूच्यते। अत एव दृश्यत्वमात्रमेवात्र कथितम्।

प्रथमाङ्केऽपि ऋषिकुमारकौ फलान्युपहरतः इत्यत्र दृश्यत्वमेव। अत्र प्रेक्षकः फलोपहरणं पश्यति, वाचा न किञ्चिदपि तद्विषयकं शृणोति।

## श्रव्यम्

अङ्कभागे बहुशः किमपि पात्रं वस्तु-विषयं केवलं वक्ति, तदनु तस्य प्रत्यक्षीकरणायाभिनयो नापेक्षितः। तस्य वस्तुनः केवलं श्रवणेन ज्ञानं भवति प्रेक्षकाणाम्, अत एव श्रव्यमेतत्।

तदेतदभिनवगुप्तेन सङ्केतितमधोवचनेन-'एवं परस्थं वा यदा व्याख्यायते न च प्रत्यक्षत्वेनैतदुपयुज्यते' इति।[1]

श्रव्यस्योदाहरणमभिज्ञानशाकुन्तले पञ्चमाङ्के पुरोहितस्य राज्ञे अधोवचनं देव, परावृत्तेषु कण्वशिष्येषु।

**सा निन्दन्ती स्वानि भाग्यानि बाला।**
**बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता॥** ५.३० इत्यादि

अन्यद्वाचतुर्थाङ्के—

गौतमी—वत्स नारद कुत एतत्।

प्रथमः—तातकाश्यपप्रभावात्।

गौतमी—किं मानसी सिद्धिः।

द्वितीयः—न खलु। श्रूयताम्। तत्र भवता वयमाज्ञप्ताः—शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरत इति। तत् इदानीं—

1. ना० शा० २२-२४९।

**क्षौमं केनचिदिन्दुपाण्डुतरुणा मांगल्यमाविष्कृतं**
**निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।**
**अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-**
**र्दत्तान्याभरणानि तत्किसलयोद्भेद-प्रतिद्वन्द्विभिः ॥ ४.५**

प्रियंवदा—( शकुन्तलां विलोक्य ) हला, अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीरिति ।

अपरत्र स्वप्नवासवदत्ते श्रव्यस्योत्कृष्टमुदाहरणं विद्यते प्रथमाङ्के ब्रह्मचारिणो लावाणकदाहकथनम्—

ब्रह्मचारी—भोः श्रूयताम् । राजगृहतोऽस्मि । श्रुतिविशेषणार्थं वत्सभूमौ लावणकं नाम ग्रामस्तत्रोषितवानस्मि ।

यौगन्धरायणः—अथ परिसमाप्ता विद्या ।

ब्रह्मचारी—न खलु तावत् ।

इत्यारभ्य तदिदानीं न जाने । इह तया सह हसितम्, इह तया सह कथितम्, इह तया सह पर्युषितम्, इह तया सह भणितम्, इत्येवं विलपन्तं राजानं महता यत्नेन तस्माद् ग्रामाद् गृहीत्वापक्रान्तम् । ततो निष्क्रान्ते राजनि प्रोषितनक्षत्रचन्द्रमिव नभोऽरमणोयः संवृत्तः स ग्रामः । ततोऽहमपि निर्गतोऽस्मि ।

प्रतिज्ञायौगन्धरायणे पुनः तृतीयाङ्के विदूषको यौगन्धरायणो रूमण्वांश्च संवदन्ति—'अथ किं कृता कार्य-विपत्तिः' इत्यारभ्य 'किं ततस्ततः' इति । बन्धनमिदानीं प्रमदवनं सम्भाव्य प्रवृत्तो राजलीलां कर्तुम् ।

यत्किञ्चिद् रङ्गाद् बहिर्घटते तस्य रङ्गपात्रेभ्यो विज्ञापनं श्रव्यविधानेन सम्पद्यते ।

आकाशे, आकाशवाणी, दूतवाक्यं, सन्देशः, वरशापौ, नेपथ्योक्तिः, नेपथ्यार्धोक्तिः, आकाशेदत्तदृष्टिः, एकोक्तिः, स्वगतम् इत्येवंविधानि वाक्यानि वस्तुतः श्रव्यमेव । एतेषु क्वचिच्छ्रोतुः क्वचिद वक्तुः, क्वचिदुभयोरनुभावाः दर्शनीया भवन्ति प्रेक्षकैः ।

## ऊह्यम्

यत् किञ्चिद् रङ्गे 'कर्णे' कथ्यते, तत् सर्वमूह्यं भवति । वस्तुतः कर्णे किमपि न कथ्यते, केवलं कर्णसमीपं मुखं नीयते रहस्यं किमपि वक्तुम् ।

## अभिनेयवस्तुनः पाञ्चविध्यम्

तत् तूत्तमप्रकृतीनामपि कृते वृत्त-वर्तिष्यमाणघटना-विषयकं भवति। तद्रहस्यमकथितमश्रुतञ्च कथितं श्रुतमिवाभिनीतं परवर्तिघटनाचक्रस्य कुञ्चिकेव स्यात्। यथा मालविकाग्निमित्रे प्रथमेऽङ्के—

राजा—अपि कच्चिदुपेयोपायदर्शने व्यापृतं ते प्रज्ञाचक्षुः।

विदूषकः—प्रयोगसिद्धिं पृच्छ।

राजा—कथमिव।

विदूषकः—( कर्णे ) एवमिव।

नाटचदृष्टया कर्णे कथनस्यात्र महत्त्वं नाविदितं सहृदयानाम्। 'केनोपायेन मालविकया सङ्गमनं राज्ञो भविष्यतीति' सम्प्रति रहस्य-विषयः प्रेक्षकाणां मननविषयो द्वितीयाङ्के प्रवर्तते।

अन्यविधमूह्यमनुमानेन गम्यते। यथाभिज्ञानशाकुन्तले प्रथमाङ्के विदूषको नास्ति। द्वितीयाङ्कस्य प्राक् प्रवेशके यदि नाम स शकुन्तला-दुष्यन्तयोः प्रणयारम्भं चर्चति, तर्हि प्रेक्षकैरूह्यमेव भवति यद् राजा विदूषकस्तस्मिन् विषये विज्ञापितः। तत्रैव चतुर्थेऽङ्के सख्यौ शकुन्तलां कथयतः—यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत् ततस्तस्येमा-मात्मनामधेयाङ्कितमङ्गुलीयकं दर्शयेत्यनेनोह्यते यदाश्रमात् प्रस्थानात् प्राग् दुष्यन्तेन सुखदस्मृतिरूपा नाममुद्रिका शकुन्तलायै दत्ता। विक्रमो-र्वशीयस्य प्रथमाङ्केऽपि नायकयोः प्रणय-व्यापारोपक्रमः प्रचरितः। स विषयः द्वितीयाङ्कात् प्राक् प्रवेशके चेटीविदूषकयोः संवादे प्रस्फुटति। तत्राप्यूह्यं वर्तते यद्राज्ञा विदूषकोऽभिनवप्रणयव्यापारविषये विज्ञापितः।

मुद्राराक्षसे च

चाणक्यः—राक्षस एव कश्चित् कालं सेवितव्यः। ततः प्रत्यासन्नेषु परेषु प्रयोजनमिदमनुष्ठेयम्। ( कर्णे एवमेव ) १.२०/२१

अन्यविधमेवोह्यं वा कर्णे वा भरतेन निर्दशितम्। यथा

पूर्ववृत्तं तु यत्कार्यं भूयः कथ्यं तु कारणात्।<br>
कर्णप्रदेशे तद्वाच्यं मागात्तत्पुनरुक्तताम्॥ २५.९२

यथोत्तररामचरितस्य द्वितीयाङ्कस्य विष्कम्भे

वासन्ती—( सभयं, स्वगतम् ) कथं नामशेषेत्याह?

( प्रकाशं ) किमत्याहितं, सीतादेव्याः?

आत्रेयी—न केवलमत्याहितम्, सापवादमपि ।
( कर्णे ) एवमिति ।

मृच्छकटिके चतुर्थेऽङ्केऽपि—

मदनिका—स च तस्यार्यस्य हस्ते विनिक्षिप्तः ।

शर्विलकः—किमर्थम् ।

मदनिका— ( कर्णे ) एवमिव । ४. १७/१८

## सूच्यम्

पूर्वोक्तश्चतुर्वर्गः सरसो हृद्यो विस्तरोपपन्नो विलसति । कवेः प्रतिभायाः समुन्मेषाय तत्र प्रकामावसरो वर्तते । तस्याङ्कभागे सन्निवेशः संस्तुत एव । सूच्यं प्रायशस्तावदर्थोपक्षेपकेषु निधीयते । तत्र कथावस्तुप्रपञ्चो रसनिष्पत्तये नापेक्षितः अपि तु नाट्यवस्तुनः संरचनायां सूत्रबन्ध एव सूक्ष्मरीत्या संक्षेपेण कथांशस्तत्र नैकदिवसानां मासानां वर्षाणां वा विवरणं प्रस्तौति । तान्येव वस्तूनि सूच्यानि विधीयन्ते यानि प्रायो रङ्गपरिधौ समाहितेभ्यो देशकालेभ्यो बहिर्भवन्ति ।[1]

स्वगतेनापि क्वचित् सूच्यं भवति । यथोत्तररामचरितस्य प्रथमाङ्के

रामः —( स्वगतम् । ) शुद्धान्तचारी दुर्मुखः ।
स मया पौरजानपदेष्वपसर्पः प्रहितः ।

पञ्चविधेष्वेतेषु श्रव्यं सूच्यं चाख्यानं ( Narration ) भवति । नाटक आख्यानांशस्य तावन्मात्रं महत्त्वं न भवति, यावन्मात्रं दृश्यस्य । दृश्यं तु कर्तॄणां नायकानां चरितानि साभिनयं प्रस्तौति । अरस्तू समीक्षते—

An imitation of a worthy or illustrious action, possessing magnitude in pleasing language, using separately the several species of imitation in its parts by men acting and not through narration, through pity and fear effecting a purification from such like passions.[2]

---

१. वृत्तानि क्वचित् रङ्गाद्बहिर्घटितानि भवन्तीति नाविदितं सताम् ।

२. Sobel : The Theatre Handbook P. 625

# पूर्वरंगावधारणम्

[ १. पूर्वरङ्गस्य प्रत्याहारादि आमुखान्तं विस्तारः ।
२. केवलं बहिर्यवनिकाङ्गानि ( गीतादि प्ररोचनान्तं ) भवति पूर्वरङ्गः ।
३. आश्रावणादि महाचार्यन्तमेव पूर्वरङ्गः ।
४. रङ्गद्वारं यावत् पूर्वरङ्गः ।
५. विघ्ननिर्वहणात्मकं कार्यजातमेव पूर्वरङ्गः ।
६. त्रिगतं प्ररोचना च परवर्तिकाल एव पूर्वरङ्गे समावेशिते । ]

भरतः पूर्वरङ्गं लक्षयते—

**पूर्वरङ्गः कृतः पूर्वं तत्रायं द्विजसत्तमाः ।**
**तथा त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः ॥** ४.१०

इदं भरतवचनमभिनवगुप्तः परतो विशदयति—'रङ्गे नाट्यप्रयोगे यः पूर्वो भागः' इत्यादि ।[1] अर्थात् नाट्यप्रयोगस्य समारम्भे यत् सर्वं कार्यजातं पूर्वं भवति, तत् पूर्वरङ्गः ।[2]

**यस्माद्रङ्गे प्रयोगोऽयं पूर्वमेव प्रयुज्यते ।**
**तस्मादयं पूर्वरङ्गो विज्ञेयो द्विजसत्तमाः ॥**

ना० शा० ५.७

पश्चाच्च 'उत्तररङ्गः' भवति । अयमेवोत्तररङ्गः मुखादिसन्धिपञ्चकात्मकं नाट्यं वस्तुतः प्रस्तौति ।

पूर्वरङ्गस्य विंशतिप्रायाङ्गानि सन्ति । न तेषु सर्वेषु

---

१. तेन पूर्वो रङ्गे पूर्वरङ्गः । अभि० भा० भाग १ पृष्ठे २०९ ।

२. पूर्वरङ्गविषयिणीयं धारणा ना० शा० ५.१६ अनुसरति । संगीतचन्द्रे विप्रदासः प्ररोचनां प्रस्तावनां च समाने मन्यमानः पूर्वरंगं वर्णयति—

रङ्गद्वारं ततश्चारी महाचारी त्रिकं ततः ।
प्रस्तावनेति भरतः क्रमादुपादिशन्मुनिः ॥ २४५

नाटयप्रयोगो विलसति।[१] प्रत्याहारादीन्यासारितान्तानि अन्तर्यवनिकाङ्गानि नाटयतत्त्वविहीनानि सन्ति। शेषभूतेषु बहिर्यवनिकाङ्गानां नाटयप्रयोगो न्यूनाधिकमस्त्येव। एतेषां नाटयप्रयोगविशिष्टानां पूर्वरङ्गाङ्गानां नाटयतत्त्वं प्रगुणीकृत्य पूर्वरङ्गस्यापरविधः सामासिकविग्रहः परिलक्षितः। तद्यथा—'पूर्वं रज्यते यस्मिन्' इति। पूर्वरङ्गस्येदमवधारणं नाटयशास्त्रेऽधोलिखिते श्लोके स्पष्टमेव—

**पूर्वरंगं महाभागा गदतो मे निबोधत।**
**पादभागाः कलाश्चैव परिवर्तास्तथैव च॥** ५.६

अभिनवगुप्तः प्रतिपादयति—इह बहिर्यवनिकाङ्गान्येव पूर्वरङ्गः।[२] पूर्वरङ्गस्येदमपरमवधारणम्।

बहिर्यवनिकाङ्गानि सन्ति—गीतम्, उत्थापनम्, परिवर्तनम्, नान्दी, शुष्कावकृष्टाध्रुवा, रङ्गद्वारम्, चारी, महाचारी, त्रिगतम्, प्ररोचना च।[३] एतेषु महाचार्यन्तं दैवतपूजनं भवति।[४]

पूर्वरङ्गस्यैका सीमा दैवतपूजनं यावत् प्रथितासीत्।[५] भरत एव निर्दिशति—

**आश्रावणादि चार्यन्तमेतद् दैवतपूजनम्।**
**पूर्वरङ्गे मया ख्यातं तथा चाङ्गविकल्पनम्॥** ५.५३

दैवतपूजनस्य पश्चात् त्रिगतं, प्ररोचना च वर्तते। अभिनवगुप्तानुसारेण 'त्रिगत-प्ररोचनयोर्दृष्टैकं प्रयोजनमिति तात्पर्यम्।[६] 'त्रिगत-प्ररोचनाद्वारेण प्रस्तावना प्रारभ्यते' इति भरतो निर्दिशति। तद्यथा—

---

१. अङ्गाना न्यूनाधिकभावे हि भूयांसः पूर्वरङ्गभेदाः। अभिनवभारती प्रथमे भागे पृ० २१० गा० ओ० सी०। अभिनवगुप्तो भरतानुसारेण प्ररोचनान्तान् ऊनविंशति भेदान् पूर्वरङ्गस्य मनुते। भारती ना. शा. ४.१४ अधिकृत्य।

२. अपरञ्च—तेन गीततालवाद्यनृत्तपाठयं व्यस्तसमस्ततया प्रयुज्यमानं यन्नाटयाङ्गभूतं स पूर्वरङ्ग इत्युक्तं भवति। अभि० भा० भाग १ पृ० २०९

३. ना० शा० ५.२१–२९

४. ना० शा० ५.५३।

५. एवं पूजाधिकारार्थं पूर्वरंगः कृतो मया। ना० शा० ३६.२८।

६. अभि० भा० भाग १ पृ० २२९।

उपक्षेपेणकाव्यस्य हेतुयुक्तिसमाश्रया ।
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना ॥ ५.२९

इयं प्ररोचना तु वस्तुतः प्रस्तावनैव, यथा भरतेन निर्दिष्टम्—

प्रस्तावना ततः कुर्यात् काव्यप्रख्यापनाश्रयम् ।
उद्घात्यकादिकर्तव्यं काव्योपक्षेपणाश्रयम् ॥ ५.१६६

त्रिगतप्ररोचनयोः पूर्वमपि प्रस्तावना भवेन्नाम चारीनामके पूर्वरङ्गे भरतो विशदयति—

प्रयुज्य विधिनैवं तु पूर्वरङ्गं प्रयोगतः ॥
स्थापकः प्रविशेत्तत्र सूत्रधारगुणाकृतिः ।
स्थापनं तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम् ॥
प्रविश्य रंगं तैरेव सूत्रधारपदैर्व्रजेत् ।
स्थापकस्य प्रवेशे तु कर्तव्यार्थानुगा ध्रुवा ॥
त्र्यश्रा वा चतुरश्रा वा तज्ज्ञैर्मध्यलयान्विता ।
कुर्यादनन्तरं चारीं देवब्राह्मणशंसिनीम् ॥
सुवाक्यमधुरैः श्लोकैर्नानाभावरसान्वितैः ।
प्रसाद्य रंगं विधिवत्कवेर्नाम च कीर्तयेत् ॥

ना० शा० ५.१६१–१६५

अत्र चार्या स्थापको यथानाम काव्यस्थापनं करोति कवेर्नाम कीर्तयित्वा ।[1] चारी कमपि 'अर्थं' काव्यार्थं प्रस्तौति च ।[2]

अत्रावधेयं वर्तते यत् पूर्वरङ्गस्यान्त एव स्थापकः समायाति ।[3] अत एव रङ्गद्वारं यावत् पूर्वरङ्गो विलसति, पश्चात् चारीतः स्थापना प्रारभ्यते ।[4] महाचार्यां समाप्तायां स्थापकः पारिपार्श्वकौ व्याहरति ।

---

१. ५.१६५ कारिकाधोविधं भारत्यां व्याख्याता—ततः कविनाम कीर्तयेत् । च शब्दाद् गुणादिकम् । तेन प्रसिद्धादरणीयत्वं भवति ।

२. अर्थाभिधायिनं श्लोकं चार्यङ्गभूतं पठेदिति । भारती प्रथमे भागे २३९ पृष्ठे ।

३. पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते ।
प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥ दशरूपकम् ३.२
प्रयुज्य विधिनैवं तु पूर्वरङ्गं प्रयोजयेत् । इति पूर्वरंगस्यात्र सीमां प्रकटयति ।

४. तस्यान्ते तु त्रिपद्यां व्याहरेत् पारिपार्श्वकौ । ना० शा० ५.१३२

अत्र त्रिपदी काचित् प्रयुज्यते । अभिनवगुप्तानुसारेण सा त्रिपदी 'आमुख'-रूपा भवति ।[१] अत्रावधेयं वर्तते यदभिनवगुप्तोऽत्रैवामुखस्य प्रारम्भं स्थापयति ।

भरतस्याधोविधः श्लोकः प्ररोचनायाः प्रागेव पूर्वरङ्गस्य सीमामवधारयति—

**प्ररोचना च कर्तव्या सिद्धेनोपनिमन्त्रणम् ।**
**रङ्गसिद्धौ पुनः कार्यं काव्यवस्तुनिरूपणम् ॥** ५.१३५

अर्थात् पूर्वरङ्गे सिद्धे ( सम्पादिते ) सति प्रेक्षका नाट्यप्रेक्षणार्थं निमन्त्र्यन्ते । पूर्वरङ्गस्यान्ते ( प्ररोचनायां ) काव्यवस्तुनिरूपणं भवति । अत्र रङ्गस्तु पूर्वरङ्ग एव ।

पूर्वरङ्गस्य वास्तविकी सीमा कुत्र स्यादित्यस्मिन् विषये भरत एव प्रमाणम्—

**प्रोक्तवानस्मि यत् पूर्वं शुभं विघ्ननिबर्हणम् ।**
**तस्यानुबन्धेन मया पूर्वरङ्गः प्रकीर्तितः ॥**

अनया दृष्ट्या विघ्न-निबर्हणात्मकः कार्यक्रम एव पूर्वरङ्गः । न तु त्रिगते, प्ररोचनायां वा विघ्न-निर्बर्हणं भवति । अत एव तयोः पूर्वरङ्गता शिथिलमेववचनम् ।

त्रिगतं प्ररोचना च पूर्वरंगस्याङ्गे इति विवादास्पदमेव प्रतिभाति भरतस्याधोलिखितेन श्लोकेन—

त्रिकं प्ररोचना चापि पूर्वरङ्गे भवन्ति हि । ५.१५

अत्र चापि पदाभ्यां त्रिकप्ररोचनयोः पूर्वरङ्गाङ्गत्वं न सर्वसम्मतमिति संकेतितम् ।

निष्ठ्यूतार्थो विलसति—पूर्वरङ्गस्य महासामान्यवचनं, मध्यसामान्यवचनं, विशिष्टवचनं च प्रसङ्गानुसारेण बोद्धव्यानीति ।

---

१. त्रिपद्येति पारिपार्श्विकौ आमुखरूपया । भारती भागः १ पृ० २४२
इदं पारिपार्श्विकीयमामुखमिति बड़ौदा संस्करणस्य भारत्याः 'पारिपार्श्वकामुखस्वरूपायाः' इति 'म' पाठेन संकेतितम् । भाग १ पृ० २४२ ।

## पूर्वरङ्गप्रयोजनम्

विघ्नविनाशस्तु पूर्वरङ्गस्य पारमार्थिकं प्रयोजनं विदितचरमेव। अपरं च तस्य नाट्योचितं प्रयोजनं सविशेषमेव निर्दिष्टम्। तद्यथा—

निजसुखादिविवशीभूतश्च कथं वस्त्वन्तरे संविदं विश्रामयेदिति तत्प्रत्यूहव्यपोहनाय प्रतिपदार्थनिष्ठैः साधारण्यमहिम्ना सकलभोग्यत्व-सहिष्णुभिः शब्दादिविषयमयैरातोद्यगान-विचित्रमण्डपपदविदग्धगणिका-दिभिरुपरञ्जनं समाश्रितम्, येनाहृदयोऽपि हृदयवैमल्यप्राप्त्या सहृदयी-क्रियते।[१]

आवश्यकतानुसारेण पूर्वरङ्गस्येदं प्रयोजनं परवर्तिकाल आविष्कृत-मिति प्रतिभाति।

—:०:—

१. अभिनवभारती प्रथमभागे पृष्ठम् २८१।

# प्रस्तावना

[ १. प्रस्तावना मूलतो द्विविधा भवति पूर्वरङ्गीया आमुखीया च तद्यथा--

(क) उत्थापने सामान्येन रङ्गद्वारे रूपकविशेषेण नाटयमुत्थापितम् ।

(ख) चार्यां कविविषयिणी प्रस्तावना स्थापकेन ।

(ग) त्रिगते प्ररोचनायां च काव्यार्थविषयिणी काव्यार्थोपक्षेपेण ।

(घ) नाटयकथामुख-विषयिणी आमुखेन ।

२. स्थापकः प्रस्तावको वा रङ्गद्वारानन्तरं चार्यामेव रङ्गं प्रविशति । ततः प्रभृति काव्यस्थापना क्रियते तेन ।

३. भासनाटकेषु केवलं नान्द्याः, विज्ञापनस्य, स्थापनायाश्चोल्लेखो वर्तते । तत्र विज्ञापनं तु प्ररोचना-स्थानीयम् । स्थापना तु आमुखीय-प्रस्तावनैव । ]

## आमुखीया प्रस्तावना

नाटकीया प्रस्तावना बहुविधा भवति। प्रथमं तावदामुखीया प्रस्तावना लक्ष्यते । भरतो निर्दिशति--

> नटी विदूषको वापि पारिपार्श्वक एव वा ।
> सूत्रधारेण सहिताः संलापं यत्तु कुर्वते ॥
> चित्रैर्वाक्यैः स्वकार्योत्थैः वीथ्यङ्गैरन्यथापि वा ।
> आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावनापि वा ॥ १९.३०-३१

अस्याः प्रस्तावनाया वैशिष्ट्यं विशदयन्नभिनवगुप्तः स्पष्टयति—

अत्रामुखं प्रारम्भमीषन्मुखं वा प्रस्ताव्यतेऽनयेति (प्रस्तावना) । तत्र कदाचित् कार्याभिमुखं नीयते पूर्वरङ्गविधिः, तदभिमुखं वा कार्या-रम्भः तन्नीयते, सा द्विधेति ।

अत एवामुखं तु पूर्वरङ्गानन्तरं भवतीति स्पष्टमेव ।

इयमामुखीया प्रस्तावना बीजोपक्षेपात्मिका भवति[1]। भरतानुसारेण तु तत्र—

**मुखबीजानुसदृशं नानामार्गसमाश्रयम् ।**
**नानाविधैरुपक्षेपैः काव्योपक्षेपणं भवेत् ॥ ५.१६८**

आमुखं द्विविधं भवति वीथ्यङ्गात्मकं स्वकार्योत्थं च।[2] किमिदं स्वकार्योत्थं नामेति अभिनवगुप्तेन स्पष्टीकृतम्—यथा नागानन्दे—नाटयितव्ये किमित्यकारणमेव रुद्यते" इत्यादि।

अन्यच्च—"नटोविदूषकपारिपार्श्वकैः समन्तादिति विचित्रभेदेन स्वकार्यनिरूपण-व्याजेन ये नानाविधा उपक्षेपा उपांशुछन्नत्वेन रूपकार्थबीजस्य सामाजिकहृदयभूमौ क्षेपास्तैः काव्यं प्रस्ताव्य प्रस्तावक-स्थापकौ निष्क्रामेताम्।"[3]

अपरविधा प्रस्तावना कविं प्रस्तावयति चारीद्वारेण। तद्यथा—

**कुर्यादनन्तरं चारीं देवब्राह्मणशंसिनीम् ।**
**सुवाक्यमधुरैः श्लोकैर्नानाभावरसान्वितैः ।**
**प्रसाद्य रङ्गं विधिवत् कवेर्नाम च कीर्तयेत् ॥ ५.१६४, १६५**

अभिनवगुप्तानुसारेण चार्यां कवेर्नाम गुणादिकं च कीर्तयेत्। अन्यत्र चार्यामर्थाभिधायिश्लोकपाठोऽपि निर्दिष्टः।[4]

तृतीयविधा प्रस्तावना काव्यं प्रस्तावयति।

महाचार्या अन्तिमे भागे पारिपार्श्विकौ त्रिपद्यामुखं प्रस्तुतः। तद्यथा

---

१. ततो रूपकविशेषप्रख्यापनमाश्रित्य तत्प्रख्यापनव्याजेन भाविरूपकार्थस्य प्रस्तावनामुपक्रमोपक्षेपपर्यायां कुर्यात्। अभिनवभारती प्रथमभागे पृष्ठं २४९

२. ना० शा० २०.३१। स्वकार्योत्थात्मक-प्रस्तावनायाः कर्ता स्थापको भवतीति अभिनवगुप्तो भारत्यां प्रथमे भागे पृ० २४९ प्रतिपादयति—पूर्वरङ्गाङ्गेऽस्याः कविरुदासीनः। स्थापक एव स्वतन्त्रो निर्माता।

३. अभिनवभारती ना० शा० ५.१६८ अधिकृत्य। अत्र काव्यं तु काव्यार्थबीजमथवा काव्योपक्रम एव।

४. अभिनवभारती प्रथमे भागे पृ० २३९

**ततो रौद्ररसं श्लोकं पादसंहरणं पठेत् ।**
**तस्यान्ते तु त्रिपद्याथ व्याहरेत् पारिपार्श्वकौ ॥**

ना० शा० ५.१३२

अभिनवगुप्तोऽत्र स्पष्टयति—त्रिपद्येति पारिपार्श्वकाआमुखरूपया ।

**उत्थापनाङ्ग-रङ्गद्वारयोः प्रस्तावनातत्त्वम्**

अभिनवगुप्तो नाटयशास्त्रस्य ५.२६ कारिकामधिकृत्य व्याख्याति—उत्थापनाङ्गे सामान्येन नाटयमुत्थापितम् । इह (रङ्गद्वारे) तु रूपकविशेषेणेति ।

## पूर्वरङ्गीया प्रस्तावना

( "त्रिगत-प्ररोचने" )

भरतानुसारेण चारि–महाचार्यनन्तरं त्रिगत–प्ररोचने भवतः । नाटयशास्त्रे चार्या वर्णनं पंचमाध्याये १६४-१६५ श्लोकयोर्निष्पन्नम् । तदनन्तरं १६६तमः श्लोकोऽधोविधो वर्तते—

**प्रस्तावनां ततः कुर्यात् काव्यप्रख्यापनाश्रयाम् ।**
**उद्घात्यकादि कर्तव्यं काव्योपक्षेपणाश्रयाम् ॥**

ना० शा० ५.१६६

अस्मिंच्छ्लोके 'प्रस्तावना तु त्रिगत-प्ररोचनयोः समन्वितं नामेति प्रस्थाप्यते—

त्रिगते तु काव्य-प्रख्यापनं गौणतो भवति । तद्यथा—

**विदूषकस्त्वेकपदां सूत्रधारस्मितावहाम् ।**
**असम्बद्धकथाप्रायां कुर्यात् कथानिकां ततः ॥**[1]

ना० शा० ५.१३४

अन्यच्च—

**विदूषकः सूत्रधारस्तथा वै पारिपार्श्वकः ।**
**यत्र कुर्वन्ति संजल्पं तच्चापि त्रिगतं मतम् ॥** ना. शा. ५.२८

१. असम्बद्धकथा तदेव व्यनक्ति । त्रिगतमन्योक्तिद्वारेण विधीयते ।

अभिनवगुप्तोऽत्र स्पष्टयति--

संजल्पो भविष्यन्नाटकादिविषयः। स एव काव्योपक्षेपस्त्रिषु समायत्तत्वात् त्रिगतशब्देनोक्तः।

इदं त्रिगतं त्वत्रोद्‌घात्यकादिपदेन व्यज्यत एव, यतो हि नाम उद्घात्यकादिवती-वीथ्याः त्रिगतमेकमंगम्। अत एव त्रिगतस्य प्रस्तावनात्वं प्रतिभाति।

प्ररोचना भरतेनाधोविधं लक्षिता--

**उपक्षेपेण काव्यस्य हेतुयुक्तिसमाश्रया।**
**सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना॥** ना० शा० ५.२९

अत्र प्ररोचना तु काव्यस्यौपक्षेपेण पूर्वोक्तायाः प्रस्तावनाया अन्तर्गतैव। अत्र काव्योपक्षेपोऽगूढतया स्पष्टं क्रियते।

उपर्युक्तपूर्वरंगीया प्रस्तावना त्रिगतप्ररोचनाद्वारेण तु विशिष्टैव। सामान्या प्रस्तावनापि शेषेषु पूर्वरंगाङ्गेषु व्यञ्जनाद्वारेण विलसत्येवेति सम्बोधयत्यभिनवगुप्तः। तद्यथा--

"उत्थापनाङ्ग-विवरणे"--अत्र च वैचित्र्यार्थं समुचितमात्रमित्यादि प्रवृत्तिमपि भाविरूपकोचितं काव्यमपि पठ्यमानं केचिदिच्छन्ति। तथा हि सति "पाठ्ययोगकृतैस्तथा [१]" इति न संकोचितं भविष्यति। युक्तं चैतत्। तथा हि रमणीयाद्युपकरणभूतशयन-विरचनादौ प्रतिपादुकस्तम्भधूपवस्त्रादिष्वपि तदुचितनायक-युगलादिप्राय-विचित्रादियोगो युद्धोचित-सन्नाहकङ्कटादौ च कातरजनभयभावनं नृसिंहगरुडादिरचनाकृतयोगस्तथैव ह्यतिरमणीये नाट्ये भविष्यति, यदुपरंजकवर्गढौकनादौ। एतदपि सुकुमारतदुक्तगीतपाठ्याभिनययोगेनैव कार्यम्।[२]

रंगद्वारनामके पूर्वरंगागे नाट्योत्थापनं क्रियते।[३] तदपि प्रस्तावनैव।

---

१. ना० शा० ५.८ २. अभिनवभा० ना. शा. ४.२२

३. रङ्गद्वारविषयिणी ५.२६ कारिकां विशदीकुर्वन्नभिनवगुप्त आह--अभिनीयते इत्यभिनयो रूपकविशेषः। सोऽवतार्यते संक्षेपेण तस्यार्थप्रयोजनादिनिरूपणपाठ्यद्वारेण तथैव चाभिनयः क्रियते यत्र तद्रंगस्य भाविनो रूपकस्य द्वारमिव रङ्गद्वारम्। उत्थापनाङ्गे सामान्येन नाठ्यमुत्थापितम्। इह तु रूपकविशेषेणेति भेदः। ना. शा. ५.२६ अधिकृत्य भारती।

पूर्वरङ्गीयां प्रस्तावनामुपरिविधामेवाभिनवगुप्तः संकेतयति यदा स कथयति—

द्विविधा प्रस्तावना भवति–पूर्वरंगस्याङ्गभूता, अन्यस्य वा। तत्र पूर्वरंगाङ्गेऽस्याः कविरुदासीनः। स्थापक एव स्वतन्त्रो निर्माता।[1] अग्रेऽभिनवगुप्त आमुखीयां प्रस्तावनामधोविधं विवृणोति–सा (प्रस्तावना) द्वितीया या वृत्तिमध्ये पठिता नाट्यशास्त्रीया कारिका २०.३०—नटी विदूषको वापि पारिपार्श्वक एव वा' इत्यादि

भासनाटकेषु केवलं नान्द्याः, विज्ञापनस्य, स्थापनायाश्चोल्लेखो दृश्यते। तत्र स्थापना विज्ञापनं च क्रमश आमुखीय-प्रस्तावनायाः प्ररोचनायाश्च स्थाने भवतः। नान्दीश्लोकास्तत्र प्रकाशितनाटकेषु नोद्धृताः। पूर्वरंगस्य तदा का स्थितिरासीत्, पूर्वरंग आसीन्नवेति सन्दिग्धमेव।

अपरैव काचित्पद्धतिः रसार्णवसुधाकरे सिंहभूपालेन सूचिता। तदनुसारेण 'आमुखं द्विविधं भवति—स्थापना, प्रस्तावना च'। यत्र पारिपार्श्विकैः सह सूत्रधारो वीथ्यङ्गद्वारेण संवदति, तत्र प्रस्तावना भवति। यत्र पारिपार्श्विको नास्ति, केवलं नटी-विदूषक-नटादिभिः सह सूत्रधारो सवदति, प्रस्तुतमर्थमाक्षिपति च तत्र स्थापना भवति। अपरं च स निर्दिशति वीराद्भुतप्राये नाटके प्रस्तावनोचिता, हास्यवीभत्सरौद्रादिप्राये तु स्थापना मता। प्रस्तावनास्थापनयोरन्तरं रसार्णवसुधाकरानुसारेणाधोविधमेव—

प्रस्तावनायां कथोद्घातः, प्रवर्तकः, प्रयोगातिशयश्च आमुखाङ्गानि विकसन्ति। स्थापनायां स्वोत्थं कल्पितं कथानिकां वर्णयित्वा सूत्रधारादयस्तदनुसारिणीं नाटककथां प्रयोजयिष्माणामाक्षिपन्ति।[2]

१. ना. शा. ५.१६८-१६९ अधिकृत्य भारती।

२. रसार्णवसुधाकरः तृतीयविकासे १५७-१६२

# नान्दी

[ १. भरतात् प्राक् नान्दी यज्ञ-विवाह-युद्धादिमांगलिककार्याणां समारम्भ-सूचकः तूर्यनिर्घोषपुरस्सरो हर्षजननः उपक्रम आसीत् ।

२. नाटचप्रयोगे भरतेन सा नान्दी आशीर्वादश्लोकैः संयुता विहिता । इमे श्लोका एव नान्दीति प्रायोवादोऽपूर्णं सत्यम् ।

३. नाटचप्रयोगे पौरस्त्य-नान्द्याः प्रपञ्च एव पूर्वरङ्गः । स प्रपञ्चः पूर्वरङ्गस्य प्रत्याहारादि अन्तर्यवनिकाङ्गरूपेण गीतादि बहिर्यवनिकाङ्ग-रूपेण च विलसति ।

४. नाटचशास्त्रीय-सन्दर्भेषु कतिपयस्थलेषु पूर्वरङ्गस्थानीयेत्वेन पूर्वरङ्गस्य पर्यायरूपेण वा नान्दीपदं प्रयुक्तं दृश्यते ।

५. नान्दीश्लोकानां सर्वोत्कृष्ट आदर्शः —'नमोऽस्तु सर्वदेवेभ्यः' इत्यादि पदानि सन्ति । ]

नाटचशास्त्रे प्रथमनाटचप्रयोगस्येदृशं वर्णनं विद्यते—

पितामहः — **महानयं प्रयोगस्य समयः प्रत्युपस्थितः ।**
**अयं ध्वजमहः श्रीमान् महेन्द्रस्य प्रवर्तते ॥**
**अत्रेदानीमयं वेदो नाटचसंज्ञः प्रयुज्यताम् ।**

भरत : — **ततस्तस्मिन् ध्वजमहे निहतासुरदानवे ।**
**प्रहृष्टामरसंकीर्णे महेन्द्रविजयोत्सवे ।**
**पूर्वं कृता मया नान्दी ह्याशीर्वचन-संयुता ॥** १.५४–५६

अनेन प्रकरणेनेदं स्पष्टमेव यत् तस्मिन्नवसरे नान्दी 'आशीर्वाद-संयुता' कृता ।[1] ततः प्राक् पुराणतरं रूपं नान्द्याः किंविधमासीदिति भरतेन नाटचशास्त्रेऽन्यत्र दर्शितम्—

---

१. अन्यत्रापि नाटचशास्त्रे भरतः स्पष्टयति यन्नाटचार्थमाशीर्वादो नान्द्या योजितः । तद्यथा—

आशीर्वचन-संयुक्ता नित्यं यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥ ५.२४

आवाहे च विवाहे च यज्ञे नृपतिमंगले ।
नान्दीशब्दमुपश्रुत्य हिंस्रा नश्यन्ति चैव हि ॥[१]
पाठ्यं नाट्यं तथा गेयं चित्रवादित्रमेव च ।
वेदमन्त्रार्थवचनैः समं ह्येतद् भविष्यति ॥

ना० शा० ३६.२४, २५

अनेन स्पष्टं प्रतिभाति यत् पूर्वं नान्द्यां पाठ्यं नाट्यं, गेयं, वादित्रं चासन् । एतदेव भरतस्याधोवचनेन प्रमाणितम्—

'नान्दी-शुष्कावकृष्टासु करणाश्रितं वाद्यं योज्यम्' ।[२] अभिनवगुप्तानुसारेण 'नान्दीपादान्तरेषु बहुतरं नृत्तमिति । नान्दीमुखीं परिभाषमाणः स्पष्टयति--नाद्यं । मंगलदुन्दुभेरिव मुख यस्याः ।[३]

ईदृशी पुरातनकालात् प्रचरितायां नान्द्यां भेरी-तूर्य-निर्घोषस्य प्राथम्यमासीत् । सेयं नान्दी भरतेन साशीर्वादा कृता नाट्यप्रयोगार्थम् ।

---

१. तथा हि महाभारते याज्ञिकी नान्दी —

ततो राजकुले नान्दी संजज्ञे भूयसी पुनः ।
पुरोहितकुले चैव सम्प्राप्ते ब्राह्मणर्षभे ॥

शान्ति० प० ८३.६५

सांग्रामिकी पुनः

कर्णस्य मतमाज्ञाय पुत्रस्ते भरतर्षभ ।
योगमाज्ञापयामास नन्दीतूर्यपुरस्सरम् ॥

कर्ण प० १७.३

उत्तररामचरिते च—रामस्यायं पट्टाभिषेकसमयो रात्रिंदिवमसंहृतनान्दीकः । प्रस्तावनायाम् ।

२. ना० शा० २४.२२४ । अन्यच्च—कण्ठहस्त-गौण्यं करणम् । ना० शा० ३३.११ । करणं तु नृत्तस्य क्रिया । गात्राणां विलासक्षेपस्य । ना० शा० ४.२९ अधिकृत्य भारती । हस्तपादसमायोगो नृत्तस्य करणं भवेत् । ना० शा० ४.३० । अन्यत्र—द्विपादक्रमणं यत्तु करणं नाम तद् भवेत् ॥ ना० शा० १०.३

३. अभिनवभारती प्रथमभागे पृ० २४६ । ना. शा. १५.९४ अधिकृतभारती

कोशेषु नान्दी तु तूर्यघोषोऽपि बोधिता।[1] रंगराजानुसारेण एकदा द्वादश-मृदङ्गघोषो नान्दी। काव्यार्थ-प्रयोगात् पूर्वमेव पूर्वरंगाङ्गानीति बहुविधं नृत्तगीत-वाद्य-पाठ्यात्मकं मांगलिकं कार्यजातं भरतेन प्रवर्तितम्। तेषु नान्दी सर्वोत्कृष्टं स्थानं भजते स्वकीयेनाशीर्वाद-रूपेण मांगल्य-वैपुल्येन। तद्यथा—

**नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यः शुभं तथा।**
**जितं सोमेन वै राज्ञा शिवं गोब्राह्मणाय च॥**
**ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा।**
**प्रशास्त्विमां महाराजः पृथिवीं च ससागराम्॥**
**राष्ट्रं प्रवर्धतां चैव रङ्गस्याशा समृद्ध्यतु।**
**प्रेक्षाकर्तुर्महान् धर्मो भवतु ब्रह्मभावितः॥**
**काव्यकर्तुर्यशश्चास्तु धर्मश्चापि प्रवर्धताम्।**
**इज्यया चानया नित्यं प्रीयन्तां देवता इति॥**

ना० शा० ५.१०५-१०८

अभिनवगुप्तोऽत्र सङ्केतयति—नान्दीं पठति—नमोऽस्त्वित्यादि देवता इत्यन्तम्।

इयं नान्दी साधारण्येन सर्वेषां रूपकाणाम्प्रयोगात्प्राक् पूर्वरङ्गेषु योजनीया सूत्रधारेण। वस्तुतः सर्वरूपकोचितेयं नान्दी।

## नान्दीश्लोको वा रङ्गद्वारं वा

भरतानुसारेण 'नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यः शुभं तथा' इत्यारभ्य 'इज्यया चानया नित्यं प्रीयन्तां देवता' इति यावत् नान्दी विलसति। अत्र प्रश्नः समुदेति—'या सृष्टिः स्रष्टुराद्या इत्यादि अभिज्ञानशाकुन्तले, वेदान्तेषु यमाहुरेकपुरुषम्' इत्यादि विक्रमोर्वशीये, 'एकैश्वर्ये स्थितोऽपि प्रणतबहुफले' इत्यादि मालविकाग्निमित्रे नान्दी सन्ति, उताहो किञ्चिद-परमेव पूर्वरङ्गाङ्गम्?

---

१. शब्दकल्पद्रुमानुसारेण नान्दी तु भेरी। मानियर-विलियम्स-महोदयस्य Sanskrit-English-Dictionary नामके कोशे नान्दी तु द्वादशतूर्यनिर्घोषोऽस्ति।

पूर्वोक्तश्लोकेषु नान्दीलक्षणस्यायोगात् नान्दी तत्र नास्तीति साहित्यदर्पणकारेण विश्वनाथेन प्रागेव समुन्मेषितम् । यद्यथा—

एतन्नान्दीति कस्यचिन्मतानुसारेणोक्तम् । वस्तुतस्तु पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गम्' इत्यन्ये । यदुक्तम्—

**'यस्मादभिनयो ह्यत्र प्राथम्यादवतार्यते ।**
**रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम्'** ॥ इति

कालिदासादिमहाकविप्रबन्धेषु च—

**वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी**
**यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।**
**अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते**
**स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥**

एवमादिषु नान्दीलक्षणायोगात्। उक्तञ्च—रङ्गद्वारमारभ्य कविः कुर्यात्—इत्यादि । अत एव प्राक्तनपुस्तकेषु 'नाद्यन्ते सूत्रधारः' इत्यनन्तरमेव 'वेदान्तेषु'—इत्यादि श्लोकलिखनं दृश्यते ।[१] यच्च पश्चात् 'नाद्यन्ते सूत्रधारः' इति लिखनं तस्यायमभिप्रायः—नान्द्यन्ते सूत्रधार इदं प्रयोजितवान् । इतः प्रभृति मया नाटकमुपादीयत इति कवेरभिप्रायः ।

प्रसङ्गेऽस्मिन् रङ्गद्वारस्य लक्षणं समीक्षणीयम् । भरतानुसारेण तु रङ्गद्वारमधोविधं भवति—

**ततः श्लोकं पठेदेकं गम्भीरस्वरसंयुतम् ।**
**देवस्तोत्रं पुरस्कृत्य यस्य पूजा प्रवर्तते ॥**
**राज्ञो वा यत्र भक्तिः स्यादथवा ब्रह्मणस्स्तवम् ।**
**गदित्वा जर्जरश्लोकं रङ्गद्वारे च यत्स्मृतम् ॥**

ना. शा. ५.११३, ११४

---

१. भासनाटकेष्वियं स्थितिर्वर्तते । तथा हि मध्यमव्यायोगे—
पायात् स वो सुरवधूहृदयावसादः
प्रतिमानाटके—
सीताभवः पातु सुमन्त्रतुष्टः सुग्रीवरामः सहलक्ष्मणश्च ।
स्वप्नवासवदत्ते—उदयनवेन्दुसवर्णावासवदत्ताबलौबलस्य त्वाम् इत्यादिभ्यः प्रागेव—
'नान्द्यन्ते ततः प्रविशति सूत्रधारः' इति लिखितम् ।

यस्मादभिनयस्त्वत्र प्रथमं ह्यवतार्यते ।
रङ्गद्वारमतोज्ञेयं वागङ्गाभिनयात्मकम ॥

ना. शा. ५. २६

लक्षणमिदं 'वेदान्तेषु यमाहुरेकपुरुषम्' इत्यादि सम्यग्रूपेण घटते ।

## नान्दी पूर्वरङ्ग-पर्यायः

नाट्यशास्त्र एव नान्दी पूर्वरङ्गस्य पर्याय इति निगदितम् । तद्यथा—

**देवतासुरमानद्य यम्माल्लोकश्च नन्दति ।**
**तस्मादयं प्रयोगस्तु नान्दीनामा भविष्यति ॥** ३६.२१

श्लोकेऽस्मिन् 'अयं प्रयोगः' तु पूर्वरङ्गस्थानीय इति ३६. १५—श्लोकेषु भरतेन प्राक्कलितमेव ।

शारदातनयो भावप्रकाशने पूर्वोक्तं भारतीयं नान्दी–विषयकं महा-सामान्यार्थकमभिप्रायं समर्थयति । तद्यथा—

**या पूर्वरङ्गसम्बन्धाद् द्वाविंशत्यङ्गवर्तिनी ।**
**सभ्यान्नन्दयतीत्येवं सापि नान्दीति कीर्त्यते ॥** ७.१००

अभिनवगुप्तोऽपि 'नान्द्यन्त इति पूर्वरङ्गान्तः' इति ब्रुवन् नान्द्या पूर्व-रङ्गस्य च पर्यायः क्वचित् सम्भवतीत्येव प्रकटयति ।[1]

शारदातनयो नान्द्याः पूर्वरङ्गस्य च पर्यायमपरविधमप्यधोलिखित-कारिकयापि प्रस्तौति—

**यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।**
**तथाप्यवश्यं कर्तव्या नान्दीविघ्नोपशान्तये ॥**

भावप्रकाशने ७. २८५

अत एव 'नान्द्यन्ते सूत्रधारः' इति वचनमात्रेण ततः प्राक् श्लोको नान्दी न भवति । श्लोके तस्मिन् नान्दीलक्षणं घटते न वेति परीक्षणीयम्

---

१, नान्द्यन्त इति पूर्वरङ्गान्त इति । अभिनवभारती चतुर्थभागे पृ० ५०३
अपरञ्च—'नान्द्याख्यं मुख्यं मंगलं सकलपूर्वरङ्गाङ्गोपलक्षणमितिकेचित् ।
ना० शा० १.५६ अधिकृत्य भारती । शारदातनयः स्पष्टयतितराम्—
प्ररोचनान्तो नान्द्यन्तः प्रत्याहारादि कथ्यते । भाव पृ० ७.१२८

# नाटकेषु अंकच्छेद-विधिः

नाटकेष्वङ्कानामन्तः कथं विधेय इति कवीनां काचित् शास्त्रीया पद्धतिरभूत्। अङ्केष्ववान्तरकार्याणि निबध्यन्ते। कस्यचिदङ्कस्य अवान्तरकार्यस्यावान्तरत्वं मुख्यकार्यं प्रति तस्य प्रतिप्रत्ति च द्योतयितुं कविरधोविधप्रकरणेनाङ्कान्तं वितनोति—

१. मध्याह्नः, सायाह्नः, प्रभातकालो वा समायात इति सूचनेन।
२. नायकस्य कार्यार्थमन्यत्रागमनापेक्षया।
३. कार्यवशात् नायकपात्राणां सर्वेषामन्यत्र गमनेन।
४. नायकेन सम्पादनीयस्यापरस्य कस्यचित् कार्यस्य सूचनया।
५. उपायेन बाधानां दूरीकरणे।
६. अवान्तरकार्यस्य समापनेन।
७. नायकस्य किंकर्तव्याविमूढतया कार्यविश्रान्त्या। ]
८. भयकारण उपस्थिते पात्राणामन्यत्रशरणग्रहणेन।

## अंकान्त-विधिः

अङ्के प्रायश एकदिनस्यैव कार्यं निर्वाह्यते। प्रसङ्गेऽस्मिन् दिनं मध्याह्नं यावत् सायाह्नं यावद्वा कल्प्यते। क्वचित् प्रभातं यावद्दिनं भवति।[१] स्वप्नवासवदत्तस्य प्रथमाङ्कस्यान्तः साये भवति। तद्यथा—

**खगा वासोपेताः सलिलमवगाढो मुनिजनः**
**प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम्।**
**परिभ्रष्टो दूराद् रविरपि च संक्षिप्तकिरणो**
**रथं व्यावर्त्यासौ प्रविशति शनैरस्तशिखरम्॥ १.९६**

साये सर्वे विश्रमन्ति। अत एव नायकानां विश्रमोऽङ्कान्तेन योग्य एव।

अविमारकस्य द्वितीयाङ्कः सूर्यास्तेन समाप्यते। तथा हि

---

१. बालचरितस्य द्वितीयाङ्के रात्रौ निर्वृत्तं कार्यमभिनीतम्। ततः परमङ्कान्तः प्रभाते सति विधीयते।

अविमारकः—वयस्य, अस्तमितो भगवान् दिवाकरः। सम्प्रति हि—

पूर्वा तु काष्ठा तिमिरानुलिप्ता
सन्ध्यारुणा भवति च पश्चिमाशा।
द्विधा विभक्तान्तरमन्तरिक्षं
यात्यर्धनारीश्वररूपशोभाम् ॥ २.१२

अभिषेकस्य चतुर्थोऽङ्कः सायं परिसमाप्यते। तथाहि—

रामः—( परिक्रम्य विलोक्य ) अये अस्तमितो भगवान् दिवाकरः। सम्प्रति हि—

अस्ताद्रिमस्तकगतः प्रतिसंहृतांशुः।
सन्ध्यानुरञ्जितवपुः प्रतिभाति सूर्यः ॥ ४.२३

उप मध्याह्ने स्नानवेला भवति। तदा कार्यं समाप्याङ्कान्तो विधेयः। तद्यथाविमारके प्रथमाङ्के —

भूतिकः—स्वामिन्, शेषमभ्यन्तरे चिन्तयिष्यामः। अतिक्रामति स्नान-वेला। स्वामिदारिका चाश्वासयितव्या इत्यादि।

प्रतिज्ञायौगन्धरायणस्य द्वितीयाङ्कस्यान्तिमे भागे काञ्चुकीयः सूचयति—मध्याह्नमारोहति दिवाकरः। तदा राजा देवीमभ्यन्तरं प्रविशतु इति ज्ञापयति। काञ्चुकीयेन निवेदितां भरतरोहतकस्य राज्ञो दर्शनस्य प्रार्थनामशृण्वन्निव स रंगान्निष्क्रामतेऽङ्कसमाप्तौ। तृतीयाङ्कस्यान्तो मध्याह्ने समुपयाते भवति। तत्र विदूषको निवेदयति—

'परिवृत्तदिवसविस्रम्भेणाविरलं सरन् जनो दृश्यते। किमिदानीं कुर्मः।'

अतः परं नेदीयानेवाङ्कान्तः।

मालविकाग्निमित्रस्य द्वितीयाङ्को वैतालिकस्य मध्याह्न-सूचनया समाप्यते। तद्यथा,

वैतालिकः—जयतु जयतु देवः। उपारूढो मध्याह्नः। तथा हि—

विदूषकः—अविधा, अविधा। अस्माकं पुनर्भोजनवेलोपस्थिता। अत्र भवत उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति इत्यादि। अतः परमेकैकशः सर्वे निष्क्रान्ताः।

विक्रमोर्वशीयस्य द्वितीयाङ्कान्तो मध्याह्नसूचनेन भवति। तद्यथा—

विदूषकः—बुभुक्षितस्य ब्राह्मणस्य जीवितमवलम्बतां भवान्। समयः खलु स्नानभोजनं सेवितुम्।

राजा—( ऊर्ध्वमवलोक्य ) गतमर्धं दिवसस्य। अतः खलु 'उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी' इत्यादि। २.२२

रात्रौ वासगृहप्रवेशवेलायामुपस्थितायामङ्कान्तो विधीयते। तद्यथा-विमारकस्य तृतीयाङ्कान्ते—

अविमारकः—(सहर्षम्) अनृणोऽस्मि यौवनस्य।

कुतः—

**नेत्रे बाष्पपरिप्लुते करधृतौ व्यावल्गमानौ स्तनौ**
**श्रोणी चाधिकभारिकानु विशदौ पादौ ह्रिया स्यन्दिनौ।**
**एतत् सप्तपदप्रमाणमिहभोः सम्पाद्यते योजना**
**यद्येषा क्षणदा भवेद् युगशतं धन्यो मदन्यः कुतः॥**

पञ्चमाङ्कान्तेऽप्यविमारकस्य वर्षारम्भे सहरमणवेलायां नायकौ रंगात् प्रस्थितौ। तद्यथा—

कुरङ्गी—आर्यपुत्र, आरब्धः सम्प्रति वर्षितुं देवः।
अविमारकः—प्रिये, एहि। अभ्यन्तरमेव प्रविशावः।
कुरंगी—( सहर्षम् ) यदार्यपुत्र - आज्ञापयति।

विक्रमोर्वश्यास्तृतीयाङ्कस्यान्तो राज्ञ उर्वश्याश्च वासगृहप्रवेशेन विधीयते। तद्यथा—

विदूषकः—समयः खलु ते वासगृहप्रवेशस्य।
राजा—तेन हि सख्यास्ते मार्गमादेशय।
विदूषकः—इत इतो भवती।
उर्वशी—कीदृशी सा

राजा—अनुपनतमनोरथस्य पूर्वं शतगुणितेव गता मम त्रियामा।
यदि तु तव समागमे तथैव प्रसरति सुभ्रु ततः कृती भवेयम् ॥

( निष्क्रान्ताः सर्वे )

रंगस्थः प्रधाननायको यदान्यत्रापेक्ष्यते, तदाङ्कः समाप्तिं याति।[१] तद्यथा प्रतिज्ञायौगन्धरायणस्य प्रथमाङ्कः—

प्रतिहारी (प्रविश्य)—आर्य, भर्तृमाताह—इच्छामि मे पुत्रकं प्रेक्षितु-मिति।

यौगन्धरायणः—अयमहमागच्छामि। विजये गच्छाग्रतः

अभिषेकस्य पञ्चमाङ्कान्ते रावणोऽशोकवनिकायां सीताया व्यर्थ-मनुनयं कृत्वा भ्रातृसंहारकं राममभियोक्तुं संग्रामभूमिं प्रतिष्ठते।

बालचरिते तृतीयाङ्कस्यान्तः कृष्णस्य संकर्षण-वारणाय पर्वताद्य-मुनाह्रदं प्रति गमनेन भवति। तद्यथा—

दामकः—जयतु भर्ता। एष भर्ता संकर्षणः पर्वतात् यमुनाह्रदे कालियो नाम महानाग उत्थित इति श्रुत्वा तं प्रति गतः। वारयवारय भर्तः संकर्षणम्।

दामोदरः—कालियो नाम मयापि श्रूयते सदर्पः पन्नगपतिः। भवत्वहमस्य दर्पप्रशमनं करोमि।

**गोब्राह्मणादयस्तेन सुजुष्यन्ते किल प्रजाः।**
**अद्य प्रभृति शान्तात्मा निष्प्रभः स भविष्यति ॥ ३.१६**

चतुर्थाङ्कस्यान्तोऽपि भाविकार्य-सूचनेनान्यत्रगमनेन च भवति। तद्यथा—

भटः—मथुरायां धनुर्महो नाम महोत्सवो भविष्यति। तमनुभवितुं सपरि-जनाभ्यां भवद्भ्यामागन्तव्यम्।

दामोदरः—आर्य, अयं ननु देवरहस्यकालः।

संकर्षणः—शीघ्रमिदानीं गमिष्यावः।

दामोदरः—बाढम्। प्रथमः कल्प एष भोः।[१]

---

१. अत्र भाविकार्यस्य सूचनापि भवति।

**प्रभ्रष्टरत्नमुकुटं परिकीर्णकेशं**
**विच्छिन्नहारपतिताङ्गदलम्बसूत्रम् ।**
**आकृष्यकंसमहमद्य दृढं निहन्मि**
**नागं मृगेन्द्र इव पूर्वकृतावलेपम् ॥ ४.१३**

अभिज्ञानशाकुन्तलस्य द्वितीयोऽङ्को भाविकार्यार्थमन्यत्र गमनस्येप्सया समाप्यते। तथा हि—

राजा—( सप्रणामम् ) गच्छतां भवन्तौ। अहमप्यनुपदमागत एव।

ऋषिगौरवादाश्रमं गच्छामि इत्यादि।

अभिज्ञानस्य षष्ठाङ्कान्ते राजा दुष्यन्त इन्द्रस्य सहायार्थं स्वर्गं गन्तुकामो रथाधिरोहणं नाटयति।

मालविकाग्निमित्रस्य प्रथमाङ्कस्यान्तो भाविकार्यार्थं नायकादीनामन्यत्र गमनेन भवति।

मालविकाग्निमित्रस्य चतुर्थाङ्को नायकस्य कुमारीवसुलक्ष्म्याः समाश्वासनाय रंगान्निष्क्रमणेन भवति।

विक्रमोर्वशीयस्य प्रथमाङ्कान्तो नायकं विहाय सर्वेषां पात्राणां निर्गमनेन भवति।

कार्यवशान्नायकस्याज्ञया यदा सर्वे नायकपुरुषा रङ्गाद्बहिर्गच्छन्ति, तदाङ्कः समाप्यते। चारुदत्तस्य प्रथमाङ्कस्यान्तोऽनेन विधिना भवति। चेटी, विदूषको वसन्तसेना च निष्क्रामन्ति। ततोऽङ्कान्तो भवति। अत्र प्रधाननायक एवैकाकी अवशिष्यते। अत एवाङ्कः समाप्यते।

अभिज्ञानशाकुन्तलस्य प्रथमाङ्कान्तो नायकं दुष्यन्तं विहाय सर्वेषां पात्राणामन्यत्र गमनेन भवति। तद्यथा—

राजा—(निश्श्वस्य) हन्त, गताः सर्वाः। अहं पुनर्मन्दौत्सुक्योऽस्मि गमनं प्रति। यावदानुयात्रिकान् समेत्य नातिदूरे तपोवनस्य निवेशयेयम्। न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्तयितुम्। मम हि—

**गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः।**
**चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ १.३१**

यद्यप्यत्र भाविकार्यसूचनापि 'यावदनुयात्रिकान् समेत्येत्यादिना व्यज्यते, तथापि एकं विहाय सर्वेषां पात्राणां निर्गमनमेवाङ्कान्तमवश्यो-

करोति । तृतीयाङ्कस्यान्तोऽप्येवमेव भवति । गौतम्या आगमनेन दुष्यन्तं विहाय सर्वाणि पत्राणि उटजं गतानि । अङ्कान्तोऽपेक्षित एव । पुनश्च सायो भूतः। अपरञ्च रक्षोविघ्ननिवारणाय तस्यान्यत्र गमनमपेक्षितमेव। स 'सायन्तने सवनकर्मणि सम्प्रवृत्ते' इत्यादि श्रुत्वा कथयति—भो भोस्तपस्विनः । मा भैष्ट । अयमहमागतोऽस्मि ।[1] (निष्क्रान्तः)

अभिनव - कार्यक्रमसूचनयाङ्कान्तोऽवश्यीक्रियते, स्वप्नवासवदत्तस्य द्वितीयाङ्कान्ते—

चेटी—त्वरतां त्वरतां तावदार्या। अद्यैव किल शोभननक्षत्रम् । अद्यैव कौतुकमङ्गलं कर्तव्यमित्यस्माकं भट्टिनी भणति ।

अस्यैव नाटकस्य चतुर्थाङ्कस्यान्तोऽभिनवेन कार्यक्रमसूचनेन भवति । तद्यथा विदूषको निवेदयति राजानम्—

उचितं तत्र भवतो मगधराजस्यापराह्णकाले भवन्तमग्रतः कृत्वा सुहृज्जनदर्शनम् । तदुत्तिष्ठतु तावद् भवान्।

राजा—बाढम् ।

पञ्चमाङ्कस्यान्तेऽपि शत्रोर्विजयाय राज्ञा प्रयातव्यमिति नव-कार्यक्रमसूचनेनाङ्कसमाप्तिर्भवति ।[2] तत्र राजा कथयति—

**उपेत्य नागेन्द्रतुरङ्गतीर्णे तमारुणि दारुणकर्मदक्षम् ।**
**विकीर्णबाणोग्रतरंगभंगे महार्णवाभे युधि नाशयामि ॥ ५.१३**

फलप्राप्तिसूचनेनाभिनवकार्यक्रमसूचनेन च स्वप्नवासवदत्तस्यान्तिमोऽङ्कः समाप्तिं याति । तथा हि—

यौगन्धरायणः —स्वामिन् देव्याः कुशलनिवेदनार्थमद्यैव प्रतिनिवर्ततामत्रभवान् रैभ्योऽत्रभवती च ।

राजा—न, न । सर्व एव वयं यास्यामो देव्या पद्मावत्या सह ।

---

१—अस्मिन् प्रकरणेऽङ्कान्तस्त्रिविधि योजितः —

(क) पात्राणां सर्वेषां निर्गमनेन् ।

(ख) सायेन

(ग) भाविकार्यसूचनेन ।

२. अत्रेदमवधेयं यत् सूचितकार्यस्याङ्कान्तरे वर्णनमावश्यकं नास्ति ।

यौगन्धरायणः —यदाज्ञापयति स्वामी ।

प्रतिमानाटकस्य षष्ठाङ्कस्यान्ते भरतः सूचयति नवं कार्यक्रमम्—

**वेलामिमां मत्तगजान्धकारां**
**करोमि सैन्यौघनिवेशनद्धाम् ।**
**बलैस्तरद्भिश्च नयामि तुल्यं**
**ग्लानिं समुद्रं सह रावणेन ॥** ६.१६

अनेन सूचनेनाङ्कः समाप्यते ।

चारुदत्तस्य चतुर्थाङ्कान्तोऽभिनवकार्यक्रमसूचनेन भवति । तद्यथा—
गणिका—एहीममलंकारं गृहीत्वार्यचारुदत्तमभिसरिष्यावः ।

अतः परमङ्कः समाप्तिं याति ।

पञ्चरात्रस्य प्रथमोऽङ्को गोग्रहणस्याभिनवकार्यक्रमोपक्रमसूचनेन समाप्यते । द्वितीयोऽङ्कोऽभिमन्युनोत्तराया विवाहस्य कार्यक्रमसूचनेन समाप्तिं याति ।

अभिषेकनाटकस्य प्रथमाङ्को वालिनोऽन्त्येष्टिसंस्कारः सुग्रीवस्याभिषेक इति कार्यद्वयस्य सूचनेन समाप्यते । तद्यथा—

रामः —हन्त स्वर्गं गतो वाली । सुग्रीव क्रियतामस्य संस्कारः ।

सुग्रीवः —यदाज्ञापयति देवः ।

रामः —लक्ष्मण, सुग्रीवस्याभिषेकः कल्प्यताम् ।

लक्ष्मणः —यदाज्ञापयत्यार्यः ।

अभिषेकस्य द्वितीयोऽङ्को हनुमतोऽधोविधभाविकार्यक्रमसूचनेन भवति—

हनुमान्—अनुगृहीतोऽस्मि । ( परिक्रम्य ) कथमिदानीं ममागमनं रावणाय निवेदयामि । भवतु दृष्टम् ।

**परभृतगणजुष्टं पद्मषण्डाभिरामं**
**सुरुचिरतरुषण्डं तोयदाभं त्रिकूटम् ।**
**करचरणविमर्दैः काननं चूर्णयित्वा**
**विगतविषयदर्पं राक्षसेशं करोमि ॥** २.२६

तृतीयोऽङ्कोऽभिषेकस्य विभीषणस्याधोविधकार्यक्रमसूचनेन भवति—

**अद्यैव तं कमलोचनमुग्रचापं**
**रामं हि रावणवधाय कृतप्रतिज्ञम् ।**
**संश्रित्य संश्रितहितप्रथितं नृदेवं**
**नष्टं निशाचरकुलं पुनरुद्धरिष्ये ॥ ३.२७**

बालचरितस्य प्रथमोऽङ्को नन्दस्य भाविकार्यस्य सूचनेन समाप्यते । तथा हि--

नन्दः --यावदहमन्तःपुरं प्रविश्य देवकी समाश्वासयामि। द्वितीयाङ्कस्यान्तः कसस्य शान्तिकर्मसूचनेन भवति । तद्यथा—

राजा—अये प्रभाता रजनी ।

**अतः प्रविश्य शान्त्यर्थं शान्तिकर्मोचितं गृहम् ।**
**करोमि विपुलां शान्तिं मम शान्तिर्भविष्यति ॥ २.२५**

कस्याश्चिन्महत्त्वपूर्णघटनाया अन्तेऽङ्कान्तो विधीयते । तथा हि प्रतिमानाटकस्य प्रथमाङ्कान्ते रामस्य वनवासाय प्रस्थानं वर्तते। द्वितीयाङ्कस्यान्तो राज्ञो दशरथस्य मृत्युना भवति ।

अन्यत्र गमनसूचनेनाङ्कसमाप्तिर्भवति।[१] प्रतिमानाटकस्य तृतीयाङ्कान्ते भरतः सूचयति—

**तत्र यास्यामि यत्रासौ वर्तते लक्ष्मणप्रियः । ३.२४**

चतुर्थाङ्कस्यान्ते भरतो वने रामं मिलित्वा पुनः वनात् प्रत्यावर्तते । तत्रैवाङ्कः समाप्यते । पञ्चमाङ्को रावणस्य रामाश्रमाल्लङ्कार्थं प्रस्थानसूचनया समाप्यते ।

विक्रमोर्वशीयस्य चतुर्थोऽङ्कोऽन्यत्रगमनापेक्षया समाप्यते । तद्यथा—

उर्वशी—प्रियंवद, महान् खलु कालस्तव प्रतिष्ठानान्निर्गतस्य । कदाचिदसूयन्ति मह्यं प्रकृतयः । तदेहि निवर्तावहे ।

राजा—यदाह भवती

( उत्तिष्ठतः )

कस्यचित्कार्यक्रमस्यान्ते सति अङ्कान्तो भवत्येव । स्वप्नवासवदत्तस्य

---

१—अत्र भरतविहितोऽधोलिखितो नियमो संघटते—

यः कश्चित् कार्यवशाद् गच्छति पुरुषः प्रकृष्टमध्वानम् ।
तत्राप्यङ्कच्छेदः कर्तव्यः पूर्ववत् तज्ज्ञैः । १८.३२

तृतीयाङ्कस्यान्तो नायकस्य विवाहसम्पत्त्या भवति। चारुदत्तस्य द्वितीयोऽङ्को चेटवृत्तान्तेन परिसमाप्यते। तद्यथा,

गणिका—हञ्जे, एवं हि स आर्यचारुदत्त एव यज्ञोपवीतमात्रप्रावारको गच्छति। तद्यावद्दूरं गतो न भविष्यत्येष, पश्यामस्तावदेनम्।

अत एवाङ्कान्तो विधीयते। चतुर्थोऽङ्कोऽपि चारुदत्तस्य तथैव नायकेन विदूषकद्वारा वसन्तसेनायै मुक्तावलीं सम्प्रेष्यानेन विधिना समाप्ति नीयते।

अभिज्ञानशाकुन्तलस्य चतुर्थोऽङ्क उद्दिष्टकार्ये समाप्ते भवति। इदं कार्यं तु शकुन्तलायाः पतिगृहाय प्रस्थानमेव। भरतानुसारेण च प्रकृष्टमध्वानं यत्र पुरुषो गच्छति, तत्राङ्कच्छेदो भवेत्।[1] अनेन नियमेनापि शकुन्तला-प्रस्थानादत्राङ्कान्तो भवेत्।

औपयिकेन प्रियासंगमे बाधायां दूरीकृतायामङ्कः समाप्तिं याति। तद्यथाविमारकस्य चतुर्थाङ्कान्तः —

अविमारकः —एहि तावदभ्यन्तरमेव प्रविशावः। (प्रविश्य) इह हि,

**पुरे गृहे वापि पुरा सुखोषितैः**
**मनस्विभिर्दुर्लभचिन्तयागतैः ।**
**पुनः कृतार्थैर्मुदितान्तरात्मभिः**
**सुखं प्रवेष्टुं सविशेषकर्मभिः ॥** ४.२३

कार्यसाधनक्षणेऽपायेन यदा नायकः सम्यक् प्रतिहतो भवति, तदाङ्कः समाप्तिं याति। अस्योदाहरणं मालविकाग्निमित्रस्य तृतीयाङ्कान्तो वर्तते। तत्र इरावत्याः प्रतीपव्यवहारेण निराशीकृतो नायको विदूषकेण सह शीघ्रमपक्रामति।

विषमे समुपस्थिते भयकारणादात्मानं परित्रातुं पात्राणां शरणग्रहणा-यान्यत्रगमनमपेक्षितं भवति। तदाङ्कान्तो विधीयते। यथा अभिज्ञान-शाकुन्तले—

**धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः ॥** १.३०

सख्यौ—आर्य, अनेनारण्यकवृत्तान्तेन पर्याकुलाः स्मः। अनुजानीहि न उटजगमनाय।

१. ना० शा० १८.३२

( सर्वा उत्तिष्ठन्ति )

अस्यां स्थिता अङ्कच्छेदो जातः।

नायको यदा किंकर्तव्यविमूढतां प्रतिपद्यते कार्याकुलतया, तदाङ्को विच्छिद्यते। तद्यथाभिज्ञानस्य पञ्चमाङ्कान्ते दृश्यते—

राजा—वेत्रवति, पर्याकुलोऽस्मि। शयनभूमिमार्गमादेशय।
प्रतीहारी—इत इतो देवः।

राजा—

**कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम्।**
**बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम्॥** ५.३१

नाटकेष्वङ्कानामन्तं साधारणतः स्वाभाविकतया कर्त्तुमेव कविर्यतते। तथा हि—नायकः कार्यवशादन्यत्रापेक्ष्यते, कार्यवशान्नायकं विहाय सर्वाणि पात्राणि रंगपीठादन्यत्र गच्छन्ति, काचिन्महत्त्वपूर्णघटना सम्पद्यते, कार्यं वा साध्यते[1], नायकः किमपि कर्त्तुमनीशो भवेत्। एतासु स्थितिषु नायकस्य कार्य-व्यापारः स्थगितो भवति। अत एव स्वभावतोऽङ्कान्तो भवति।

अन्यत्र कृत्रिमविधानेनाङ्कान्तो विधीयते। तद्यथा मध्याह्नः सञ्जातः, सायः सञ्जातः, प्रभातः सञ्जातः इति कृत्वा पूर्वतो गृहीतकार्यस्य परित्यागोऽङ्कान्तरं प्रति नाटक गमयति। न खलु कस्यचिदङ्कस्यान्तोऽकस्माद् विधेयः। नैकविधानैरपि केचिदङ्काः समाप्तिमुन्नीयन्ते। पूर्वोक्तदिशा यथायोग्यं विधानं परिकल्प्यैवाङ्कस्य समाप्तौ रसनिष्पत्तौ साह्यमाचरतीति। तत्र सहृदयसामाजिकानां विपुलप्रीतिरेव प्रमाणम्।

---

१. साधारणतोऽवान्तरकार्यस्य समाप्तौ एवाङ्कान्तो विधेयः तादृशो स्थितिः सर्वत्राङ्कान्ते न सम्भवति। तदाङ्कान्तोऽन्यैरुपायैर्विधीयते।

# प्रवेशकोद्धरणम्

[ प्रवेशकरूपेण भूमिकयाङ्कः सहकृतो भवेदिति भारतीयनाट्य-शास्त्रीय-मतं कविभिर्नाटकेषु स्वीकृतम्, किन्तु मुद्रितपुस्तकेषु ते प्रवेशका-न सर्वत्र दर्शिताः । ]

प्रकरणेऽस्मिन् प्रवेशकस्तु मध्यमसामान्यवचनेन विष्कम्भकमपि व्यनक्ति । लेखेऽस्मिन् प्रवेशका उद्धृताः सन्ति । नाटकग्रन्थेषु बहवः प्रवेशका लघवोऽपि संकेतिताः सन्ति । तद्यथा मालतीमाधवस्याष्टमाङ्कस्य प्रवेशकोऽतिलघुः पंक्तित्रयमेवाधोविधः —

अवलोकिता—'वन्दिता मया नन्दनावसथप्रतिनिवृत्ता भगवती । तद्या-वन्मालतीमाधवसकाशं गच्छामि । ( परिक्रम्य ) एतौ तौ परिनिर्वर्तितग्रीष्मदिवसावसानमज्जनौ दीर्घिकातीर-शिलातलमलंकुरुतः । तदुपसर्पामि ।'

प्रकाशितेषु प्राचीननाटकेषु ये प्रवेशका निर्दिष्टा न सन्ति, तेषां प्रवेशकानां निर्देशनमेवात्राभिप्रेतम् ।

## भासनाटकेषु

प्रतिमानाटकस्य प्रथमाङ्कस्य आरम्भे प्रतीहारो काञ्चुकीयश्च रामाभिषेकविषये दशरथाज्ञामधिकृत्य संवदेते । तयोर्निष्क्रमणपर्यन्तो भागोऽवदातिकायाः प्रवेशात् प्राक् प्रवेशक एव ।[1]

प्रतिमानाटकस्य षष्ठाङ्कस्य प्रथमो विष्कम्भो निर्दिष्टो वृद्धतापस-योर्निर्गमनात् । अतः परं द्वितीयो विष्कम्भस्तत्र न निर्दिष्टः । तद्यथा—

काञ्चुकीयः —क इह भोः काञ्चनतोरणद्वारमशून्यं कुरुते ।

प्रतिहारी—आर्य, अहं विजया । किं क्रियताम् ।

---

१. नैतन्निर्दिष्टं चौखम्भा-विद्याभवन-संस्करणे ।

इत्यारभ्य

काञ्चकीयः —( विलोक्य ) अये, अयमत्रभवान् भरतकुमारः सुमन्त्रागमजनितकुतूहलहृदयश्चीरवल्कलवसनश्चित्रजटापुञ्जपिञ्जरितोत्तमाङ्ग इत एवाभिवर्तते । य एषः

प्रख्यातसद्गुणगणः प्रतिपक्षकाल —<br>स्तिग्मांशुवंशतिलकस्त्रिदशेन्द्रकल्पः<br>आज्ञावशादखिलभूपरिरक्षणस्थः<br>श्रीमानुदारकलभेभसमानयानः ॥ ६.६

इति यावत् ।[१]

प्रतिज्ञायौगन्धरायणस्य तृतीयाङ्कस्यादितः सर्वेऽग्निगृहं प्रविशन्ति' इत्यन्तेन प्रवेशक एव ।[२] अस्मिन्नंशे सर्वे पुरुषाः प्राकृतवादिनः सन्ति । तत्रैव चतुर्थाङ्कस्यैक एव प्रवेशको भटगात्रसेवकयोः संवादादनन्तरं निर्दिष्टः । मुद्रितपुस्तकेषु तदनन्तर पात्रे न निष्क्रान्ते । प्रवेशक-विष्कम्भकयोरन्तेऽङ्कः प्रारभ्यते । नैतत् समीचीनम् । प्रथमप्रवेशकानन्तरं द्वितीयः प्रवेशको वर्तते—

(ततः प्रविशतः साधारणौ ) इत्यादिना यौगन्धरायणागमनात् प्राक् ।

चारुदत्तस्य प्रथमाङ्कस्यादौ स्थापनान्तरमेकमेव पात्रं विदूषको रंगं प्रविशति । तस्य सम्भाषणं वर्तते—

अन्यमन्यं निमन्त्रयतु तावद् भवान् । अरिक्तकस्तावदहम् इत्यादिना

---

१. अत्र विष्कम्भकस्यान्ते इत्यादिना-इत्यन्तेन पात्राणां निर्गमनमावश्यकं नास्ति। तद्यथा स्वप्नवासवदत्तस्य द्वितीयाङ्कस्य प्रवेशकस्यान्ते चेटी कथयति--अम्मो, इयं भर्तृदारिका उत्कृतकर्णचूलिकेन व्यायाम-संजातस्वेदबिन्दुविचित्रितेन परिश्रान्तरमणीयदर्शनेन मुखेन कन्दुकेन क्रीडन्तीत एवागच्छति । यावदुपसर्पामि । विक्रमोर्वशीयस्य द्वितीयाङ्कस्य विष्कम्भकस्यान्ते विदूषकः कथयति--एष पुनः प्रियवयस्यो धर्मासनसमुत्थित इत एवागच्छति । तद् यावत् पार्श्ववर्ती भवामि ।

२. नायमंशः प्रवेशक इति मुद्रितपुस्तकेषु दर्शितः ।

यावदेनमुपसर्पामि' इत्यन्तेन प्रवेशक इति न निर्दिष्टो मुद्रितपुस्तकेषु। अङ्कांश इव दर्शितः।

दूतवाक्ये स्थापनानन्तरं 'ततः प्रविशति काञ्चुकीयः' इति वर्तते। एकाकी एव रंगे स घोषयति—

भो भोः प्रतिहाराधिकृताः, महाराजो दुर्योधनः समाज्ञापयति—अद्य सर्वपार्थिवैः सह मन्त्रयितुमिच्छामि' इत्यादिना—

'नक्षत्रमध्य इव पर्वगत शशाङ्कः' इत्यन्तेन प्रवेशको वर्तते। नायमंशः प्रवेशक इति निर्दिष्टो मुद्रित-पुस्तकेषु।[1]

कर्णभारस्य स्थापनानन्तरं भटस्योक्तिः 'भो भो निवेद्यतां महाराजायाङ्गेश्वराय युद्धकाल उपस्थित इत्यादिना यावदपसर्पामि इत्यन्तेन प्रवेशक एव मुद्रितपुस्तकेषु 'अङ्कांश इव' दर्शितः।

दूतघटोत्कचेऽपि स्थापनानन्तरं भटस्य धृतराष्ट्राय घोषणा प्रवेशकरूपेण पुस्तकेषु न तथा निर्दिष्टा।

पञ्चरात्रे द्वितीयाङ्कात् प्राक् एक एव प्रवेशको निर्दिष्टः—'इमं वृत्तान्तं महाराजाय विराटाय निवेदयिष्यामः' इति यावत्। अतः परं द्वितीयो विष्कम्भकः 'ततः प्रविशति भटः' इत्यादिना

काञ्चुकीयः —इदं निवेद्यते' इत्यन्तेन न दर्शितो मुद्रितपुस्तकेषु। अस्मिन् प्रवेशके भट. काञ्चुकीयश्च दुर्योधनादिभिर्गोहरणं क्रियते इति चर्चितम्। अतः परं राजा प्रविशति।

अस्मिन्नेव नाटके तृतीयाङ्कस्यारम्भे—

सूतः—भो भो, निवेद्यतां निवेद्यतां सर्वक्षत्राचार्यपुरोगाणां क्षत्रियाणाम्।

एष हि—

**अपास्य नारायणचक्रजं भयं**
**चिरप्रनष्टान् परिभूय पाण्डवान्।**
**धनुस्सहायैः कुरुभिर्न रक्षितो**
**हतोऽभिमन्युः क्रियतां व्यपत्रपा॥ ३.१**

---

१—एकाङ्किरूपकेषु प्रवेशको नोचित इति नात्र सम्प्रधारणीयम्। एकाङ्क ऊरुभङ्गे विष्कम्भको मुद्रितपुस्तकेषु दृश्यत एव।

इति विष्कम्भक इव न दर्शितं पुस्तकेषु।

अभिषेकनाटकस्य तृतीयाङ्कात् प्राक् यो विष्कम्भको विलसति, न स प्रकाशितपुस्तकेषु दर्शितः। सोऽयं विष्कम्भकः —

'ततः प्रविशति शङ्कुकर्णः'

शंकुकर्ण :—क इह भोः, काञ्चनतोरणद्वारमशून्यं कुरुते' इत्यादिना

**अमलकमलसन्निभोग्रनेत्रः**
**कनकमयोज्ज्वलदीपिकापुरोगः**
**त्वरितमभिपतत्यसौ सरोषो**
**युगपरिणामसमुद्यतो यथार्कः** ॥ ३.२

इत्यन्तेन व्याप्त एव। अस्मिन् विष्कम्भके प्रतिहारी शंकुकर्णश्च पात्रद्वयं वर्तते।

बालचरितस्य स्थापनानन्तरं प्रविशति नारदः। शिशुत्वमुपागतं त्रिलोकेश्वरं प्रगृह्य वसुदेवः निष्क्रामति स्वगृहादिति स सूचयति, भगवन्तं स्तौति च। पश्चात् नारदो निष्क्रान्तः। नायमंशो विष्कम्भक इति पुस्तकेषु दर्शितः। नाटकेऽस्मिन् तृतीयेऽङ्के द्वितीयः प्रवेशको वर्तते। तद्यथा—

वृद्धगोपालः

**अनुदितमात्रे सूर्ये प्रणमत सर्वादरेण शीर्षेण।**
**नित्यं जगन्मातॄणां गवाममृतपूर्णानाम्** ॥ ३.१

इत्यादिना दारिका एष भर्ता दामोदरो गोक्षीरपाण्डरेण भर्ता संकर्षणेन सह गोपालकैश्च परिवृतो गुहानिक्षिप्तः सिंहः श्वेत इवागच्छती-त्यन्तेन प्रवेशक एव न निर्दिष्टः पुस्तकेषु।

## कुन्दमालायाम्

अदर्शित एव लघुतमः प्रवेशकः कुन्दमालायाः पञ्चमाङ्कस्य वर्ततेऽधोविधः—

(ततः प्रविशति विदूषकः)

विदूषकः —( नेपथ्याभिमुखमवलोक्य ) आसन्नस्तपोधनानां सम्पात-समयः। तत् त्वरतां भवान् (रामः)।

अतः परं रामः प्रविशति ।[१]

अस्मिन्नाटके षष्ठाङ्कस्यापि प्रवेशकस्तथैव न दर्शितः। तद्यथा—

(ततः प्रविशति कञ्चुकी)

कञ्चुकी—सम्पादितः कौशिकमुखसंक्रान्तपार्थिवाज्ञाहम् । अत्र स्थितं स्वामिनमवलोकयामि । विलोक्य) एष प्राप्त एव स्वामी—

**महाशीलैस्त्रिभिः सार्धमित एवाभिवर्तते ।**
**परिष्कृतस्त्रिभिर्वेदैरश्वमेध इवाध्वरः ॥ ६.१**

अतः परमङ्कः प्रारभ्यते—

( ततः प्रविशति कुशलवाभ्यामनुगम्यमानो रामः सह लक्ष्मणश्च ) ।

## मृच्छकटिके

मृच्छकटिकस्यामुखात् पश्चात् प्रथमाङ्कारम्भात् प्राक् प्रवेशको वर्तते अदर्शित एव। तद्यथा मैत्रेयः —( अन्यं ब्राह्मणमिति पूर्वोक्तं पठित्वा ) अथवा, मयापि मैत्रेयेण परस्यामन्त्रणकानि समीहित-व्यानि' इत्यादिना 'एष आर्यचारुदत्तः सिद्धीकृतदेवकार्यो गृहदेवतानां वलि हरन्नित एवागच्छति इत्यन्तेन। अत्र नायकस्य प्रवेशः सूचित इति प्रवेशकस्य यथार्थता स्पष्टा ।

द्वितीयाङ्कस्य प्रवेशकोऽपि न दर्शितः । तद्यथा—

( प्रविश्य )

चेटी—मात्रार्यासकाशं सन्देशेन प्रेषितास्मि। तद्यावत् प्रविश्यार्या-सकाशं गच्छामि। एषार्या हृदयेन किमप्यालिखन्ती तिष्ठति। तद्यावदुपसर्पामि ।

तृतीयाङ्कस्यादर्शितः प्रवेशकोऽधोविधो वर्तते—

( ततः प्रविशति चेटः )

चेटी— **सुजनः खलु भृत्यानुकम्पकः**
**स्वामी निर्धनकोऽपि शोभते ।**
**पिशुनः पुनर्द्रव्यगर्वितो**
**दुष्करः खलु परिणामदारुणः ॥ ३.१**

---

१. वस्तुतः प्रवेशकस्यास्य यथानाम सार्थकता विद्यते। रामं प्रवेशयतीति प्रवेशकः।

इत्यारभ्य 'कापि वेलायंचारुदत्तस्य गान्धर्वं श्रोतुं गतस्य। अति-क्रामत्यर्धरजनी। अद्यापि नागच्छति। तद्यावद् बहिर्द्वारशालां गत्वा स्वप्स्यामि इति यावत्।

चतुर्थाङ्कस्यादर्शितः प्रवेशको द्वितीयाङ्कस्य प्रवेशकं शब्दशो-ऽप्यनुहरति।

षष्ठाङ्कस्यादर्शितः प्रवेशकोऽधोविध एव—

चैटी—कथमद्याप्यार्या न विबुध्यते। भवतु प्रविश्य बोधयिष्यामि।
इति नाट्येन परिक्रामति।

नवमाङ्कस्य प्रवेशको न दर्शितः। सोऽयं शोधनकेन पात्रेण संविहितः। तद्यथा—

'अरे शोधनक, व्यवहारमण्डपं गत्वासनानि सज्जीकुरु'। इत्यारभ्य 'कथमेष राष्ट्रियश्यालो दुष्टदुर्जन मनुष्य इत एवागच्छति। तद्दृष्टिपथं परिहृत्य गमिष्यामि' इति यावत्।

## मुद्राराक्षसे

मुद्राराक्षसस्य द्वितीयाङ्कस्य प्रवेशको न सङ्केतितः। तत्राहितुण्डिक एकमेव पात्रं राक्षसगृहं समेत्याकाशभाषितेन प्राकृतभाषया स्वात्म-कथां प्रश्नोत्तरद्वारेण प्रस्तौति। पश्चात् संस्कृतमाश्रित्य स्वगतं सूचयति। तद्यथा—

अहो, आश्चर्यम्। चाणक्यमतिपरिगृहीतं चन्द्रगुप्तमवलोक्य विफल-मिव राक्षसप्रयत्नमवगच्छामि। इत्यारभ्य तद्यावद्राक्षसं पश्यामीति यावत्।

तृतीयाङ्कस्य विष्कम्भके कञ्चुकी एकाकी वर्तते। स आत्मकथां विवृत्य चन्द्रगुप्तस्याज्ञां सूचयति। तत्राकाशभाषितद्वारा कौमुदीमहोत्सव-प्रतिषेधं सूचयति चन्द्रगुप्तस्य राज्यधूर्वहनस्य निर्णयं च सूचयति'। नायमंशो विष्कम्भक इति निर्दिष्टः।

चतुर्थाङ्कस्य प्रवेशकोऽसङ्केतित एव। अस्मिन् प्रवेशके करभको द्वारपालश्च राक्षसस्य दुःस्थितिं मन्येते।

सप्तमाङ्कस्य प्रवेशको न तथा संकेतितः। अस्मिन् प्रवेशके चाण्डालश्चन्दनदासस्य वधयोजनां सूचयति। किमिदानीं युष्माकमत्र प्रतिकारविचारमात्रेण। प्रवेशकात् पश्चात् ततः प्रविशति द्वितीयश्चाण्डालानुगतो वध्यवेशधारी शूलं स्कन्धेनादाय कुटुम्बिन्या पुत्रेण चानुगम्यमानश्चन्दनदासः।

## कालिदासीय-नाटकेषु

अभिज्ञानशाकुन्तलस्य द्वितीयाङ्कस्यैकाकिविदूषकवचनं प्रवेशक इति न निर्दिष्टं पुस्तकेषु। तद्यथा—

विदूषकः—( निःश्वस्य ) भोः कष्टम्। एतस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि' इत्यारभ्य 'भवतु, अङ्गविकल इव भूत्वा स्थास्यामि। यद्येवमपि नाम विश्रमं लभेय' इति यावत्।

पश्चाद्राजा प्रविशति।

चतुर्थाङ्कस्य भूमिका प्रथमेन विष्कम्भकेण, ( अनसूया-प्रियंवदयोः संवादेन), द्वितीयेन विष्कम्भकेण ( शिष्यस्यैकोक्त्या ), तृतीयेन विष्कम्भकेण च ( अनुसूया-प्रियंवदयोः संवादेन ) प्रस्तूयते। एतेषु त्रिषु विष्कम्भकेषु केवलं प्रथम एव साधारणतः पुस्तकेषु संकेतितः।[1] द्वितीयस्तृतीयश्च विष्कम्भकौ न निर्दिष्टौ।

एवमेव षष्ठाङ्कात् प्राक् प्रथमः प्रवेशकः ( रक्षिणोर्मत्स्यबन्धस्य, श्यालस्य च प्रकरणम् ) द्वितीयो मिश्रविष्कम्भकः ( सानुमत्या वचनम्, चेट्योः संवादः, कञ्चुकिना सह तयोः संलापश्च ) स्तः। तयोः प्रथम एव पुस्तकेषु साधारणतः प्रवेशक इति संज्ञितो दर्शितः। द्वितीयस्तु षष्ठाङ्कस्य भाग एव प्रकाशितः।[2]

---

१. प्रो० रेवाप्रसाद द्विवेदिनः कालिदास-ग्रन्थावल्यां त्रयो विष्कम्भकाः साधु प्रदर्शिताः। किन्तु तत्रापीमे विष्कम्भकाः पृथक्-पृथक् न संज्ञिताः। विष्कम्भकत्रयं तत्र मिश्रविष्कम्भक इत्यपि न साधु प्रतिभाति, यतो हि तेषु कोऽप्यधमो नायको नास्ति।

२. प्रो० रेवाप्रसादद्विवेदी कालिदासग्रन्थावल्यां एतद्द्वयं पृथग्विदधातीति सम्यक् कृतम्। किन्तु तयोः सम्मिलिता संज्ञा मिश्रविष्कम्भकस्तेन कृतेति न साधु।

मालविकाग्निमित्रस्य पञ्चमाङ्कः प्रवेशकद्वयेन सहकृतः। प्रथमः प्रवेशकः उद्यानपालिकायाः सारसिकस्य, मधुकरिकायाश्च सवादेन समाप्यते। द्वितीयः प्रवेशकः प्रतिहार्या एकाकिभाषणेन सम्पद्यते। प्रकाशित-पुस्तकेषु प्रथम एव प्रवेशकस्तथा संज्ञितः, द्वितीयश्च पञ्चमाङ्कस्य भाग एव गृहीतः। नैतत्साधु।

## श्रीहर्षस्य रूपकेषु

नागानन्दे तृतीयाङ्कस्यारम्भे विटचेटचेटी-विदूषकाणां यः संलापो विद्यते, स वस्तुतः प्रवेशक एव, किन्तु नैवं सङ्केतितम्।[1] एतस्य प्रवेश-कस्यान्तिमे भागे विदूषकः कथयति—

एष प्रियवयस्योऽपि रुक्मिणीमिव हरिर्मलयवतीमवलम्ब्य इत एवागच्छति। तद् यावत् पार्श्ववर्ती भवामि।

नागानन्दस्य पञ्चमाङ्कस्यारम्भिकोंऽशो विष्कम्भक एव। तत्र प्रति-हार एक एव वक्ता वर्तते। स सूचयति– जीमूतवाहनो जलनिधिवेला-वलोकनकुतूहली निष्क्रान्तश्चिरयतीति दुःखमास्ते महाराजविश्वावसुः' इत्यारभ्य अयमसौ राजर्षिर्जीमूतवाहनस्य पिता जीमूतकेतुरुटजाङ्गने सह स्वधर्मचारिण्या राजपुत्र्या वध्वा च पर्युपास्यमानस्तिष्ठति। तथा हि—

**क्षौमे भङ्गवती तरङ्गितदशे फेनाम्बुतुल्ये वहन्**
**जाह्नव्येव विराजितः सुपयसा देव्या महापुण्यया।**
**धत्ते तोयनिधेरयं सुसदृशीं जीमूतकेतुः श्रियं**
**यस्यैषान्तिकवर्तिनी मलयवत्याभाति वेला यथा॥**

तद् यावदुपसर्पामीति यावत्।

---

१. अयमंशोऽङ्को नास्ति, यतो हि नाम एतस्मिन् भागे नास्ति नायक-नायिको-पनायकप्रतिनायकाश्च पात्राणि। न वा तत्राधिकारिककथावस्तुनो दृश्यं विवरणम्। आधिकारिकेतिवृत्तस्य नायकादिविषयकं सूच्यविवरणं यत्र तत्र वर्तत एव।

## भवभूते रूपकेषु

मालतीमाधवे प्रथमाङ्कस्य विष्कम्भकोऽवलोकिता-कामन्दक्योर्निष्क्रमणेन समाप्त एव। पश्चात् कलहंसो रंगं प्रविशति। एकाकी कलहंसो नायकस्य माधवस्य विषये यत्सूचयति तत् प्रवेशक एव। तद्यथा—

कलहंसः —क्वेदानीं तुलितमकरध्वजावलेपरूपविभ्रमाक्षिप्तमालतीहृदयमाहात्म्यं नाथं माधवं पश्यामि। ( परिक्रम्य ) यावदिहोद्याने मुहूर्तं विश्रम्य माधवं प्रेक्षिष्ये।

नायं प्रवेशकः सङ्केतितः प्रकाशितपुस्तकेषु।

मालतीमाधवस्य तृतीयोऽङ्कः प्रथमं बुद्धरक्षितावलोकितयोर्मालतीमाधवयोः प्रणय-प्रवृत्तिवर्धनविषयकेण सूच्येन सहकृतः। तयोर्निष्क्रमणानन्तरं कामन्दकी रंगपीठं प्रविशति। सा एकाकी एव मालती-माधवयोः प्रणयस्य संवर्धनार्थं स्वकार्याणि तत्र सफलतां च सूचयति। तद्यथा—

कामन्दकी--**तथा विनयनम्रापि मया मालत्युपायतः।**
**नीता कतिपयाहोभिः सखीविश्रम्भसेव्यताम्॥** ३.१

सम्प्रति हि—

**व्रजति विरहे वैचित्त्यं नः प्रसीदति सन्निधौ**
**रहसि रमते प्रीत्या वाचं ददात्यनुवर्तते।**
**गमनसमये कण्ठे लग्ना निरुध्य निरुध्य मां**
**सपदि शपथैः प्रत्यावृत्तिं प्रणम्य च याचते॥** ३.२

इदं च तत्र साधीयः प्रत्याशानिबन्धनम्।

**शाकुन्तलादीनितिहासवादान्**
**प्रस्तावितानन्यपरैर्वचोभिः ।**
**श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी**
**चिराय चिन्तास्तिमितत्वमेति॥**

तदद्य माधवसमक्षमुत्तरमुपक्रमिष्ये।

एतत् कामन्दकीवचनं सूच्यमेव विष्कम्भकः। नैतदङ्कांशः।

अस्य प्रकरणस्य षष्ठाङ्कः कपालकुण्डलाया एकोक्त्या सहकृतः।

सोऽयमंशः शुद्धविष्कम्भक इति सत्यमेव। अतः परं कलहंसो रंगं प्रविशति, कथयति च--

कलहंसः --आज्ञप्तोऽस्मि नगरदेवतागर्भगृहवर्तिना मकरन्दसनाथेन माधवेन—'जानीहि तावदितोमुखं प्रवृत्ता मालती नवेति। तद्यावदेनमानन्दयिष्यामि।

कलहंसस्येदं वचनं वस्तुतः प्रवेशक एव। किन्तु प्रकाशित-पुस्तकेषु अङ्कांश एव दर्शित इति व्यभिचरत्यङ्क-परिभाषाम्।

उत्तररामचरितस्य सप्तमाङ्को विष्कम्भकेण सहकृतः, किन्तु नासौ प्रवेशकः सङ्केतितः। अस्मिन् विष्कम्भके लक्ष्मण एव एकाकि पात्रमेवं वदति—

लक्ष्मणः—भोः, किं नु खलु भगवता वाल्मीकिना स ब्रह्मक्षत्रपौरजानपदाः प्रजाः सहास्माभिराहूय कृत्स्न एव सदेवासुरतिर्यङ्निकायः सचराचरो भूतग्रामः स्वप्रभावेण सन्निधापितः। आदिष्टश्चाहमार्येण—वत्सलक्ष्मण, भगवता वाल्मीकिना स्वकृतिमप्सरोभिः प्रयुज्यमानां द्रष्टुमुपनिमन्त्रिताः स्मः। गङ्गातीरमातोद्यस्थानमुपगम्य क्रियतां समाजसन्निवेशः' इति। कृतश्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानसन्निवेशो मया। अयं तु--

**राज्याश्रयनिवासोऽपि प्राप्तकष्टमुनिव्रतः।**
**वाल्मीकिगौरवादार्य इत एवाभिवर्तते॥**

( ततः प्रविशति रामः )

प्रवेशकोऽयं यथार्थनामा रामं प्रवेशयति। अस्मिन्नंशे केवलं सूच्यमेव वस्तु लक्ष्मणेन प्रस्तूयते।

अस्मिन् प्रसङ्गेऽवधेयं वर्तते यत् प्रवेशकविष्कम्भकान्ते सर्वेषां पात्राणां निष्क्रमणं तत्रैवावश्यकं यत्राङ्कस्य कथावस्तुनः कार्यस्थलं प्रवेशक-विष्कम्भकयोः कार्यस्थलाद्भिन्नमेव। यदि नाम प्रवेशक-विष्कम्भकयोरंकस्य च कार्यस्थलमभिन्नं स्यात्तदावश्यकतानुसारेण किमपि पात्रमागन्तृपात्रस्य प्रवेशसूचनां विधाय स्वयं तस्य पार्श्ववर्ति भवति। तस्य निष्क्रमणं नापेक्षितं तत्र।

# व्यभिचारि वृत्तम्

बहुविधप्रयोजनान्युद्दिश्य वृत्तं विभज्यते। तत्र नायकस्य फल-प्राप्तौ साक्षात् प्रवर्तित वृत्तमाधिकारिक भवति। फल-प्राप्तौ साह्यं विदधती कथा प्रासङ्गिकवृत्त भवति—पताका प्रकरी च। एतेभ्यो भिन्नमपि किञ्चिद् वृत्तमद्यावधि वृत्तविशेषदृष्ट्या न परिलक्षितम्। तदेवात्र समीक्ष्यते। तदेव गुणलक्षणानुसारेण व्यभिचारिवृत्तमिति मया संज्ञितमत्र विव्रियते।

पताकावृत्तस्य नायकः प्रधाननायकेनोपकृतः फलप्राप्तौ तस्मा उपकुरुते। प्रकरीवृत्तस्य नायकः प्रधान-नायकेनासम्पृक्तोऽपि फलप्राप्तौ तस्मा उपकुरुते। एतयोरुभयोः प्रधाननायकस्योपकार एव लक्षणम्। व्यभिचारिवृत्ते च प्रधाननायकायोपकारचर्चा नास्त्येव, प्रत्युत स एव सहायशीलः कस्यचिदुपकार्यस्य सहायार्थं तस्मिन्नुद्देशे गच्छति नीयते वा, यत्र दैववशात् तस्य कार्यसिद्धिर्भवति, अभीष्टं च पूर्यते। तथा हि—

उत्तररामचरितस्य विष्कम्भके शम्बूकस्य वृत्तं विद्यते।

आत्रेयी—अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारे सोरस्ताडमब्रह्मण्यमुद्घोषितम्। ततो न राजापचारमन्तरेण प्रजानामकालमृत्युः सञ्चरतीत्यात्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत्—

**शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः।**
**शीर्षच्छेद्यः स ते राम तं हत्वा जीवय द्विजम्॥**

इत्युपश्रुत्य कृपाणपाणिः पुष्पकमधिरुह्य सर्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः संचारं समारब्धवान्।

वासन्ती—शम्बूको नामाधोमुखो धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति। अपि नाम—

**रामभद्रः पुनरिदं वनमलं कुर्यात्।**[1]

[ ततः प्रविशति सदयोद्यतखड्गो रामभद्रः ]

---

१. दण्डकारण्योपवनम्।

**रामः—हे हस्तदक्षिण मृतस्य शिशोर्द्विजस्य**
**जीवातवे विसृज शूद्रमुनौ कृपाणम् ।**
**रामस्य बाहुरसि निर्भरगर्भखिन्न-**
**सीता-विवासनपटोः करुणा कुतस्ते ॥**

अत्रैव सा पञ्चवटी यत्र निवासेन विविधविस्रम्भातिप्रसङ्गसाक्षिणः प्रदेशाः प्रियायाः प्रियसखी च वासन्ती नाम वनदेवता ।

**एकः सम्प्रति नाशितप्रियतमस्तामेव रामः कथं ।**
**पापः पञ्चवटीं विलोकयतु वा गच्छत्वसंभाव्य वा ॥**

शम्बूकः—जयतु देवः । भगवानगस्त्यो मत्तः श्रुतसन्निधानस्त्वामाह·······
सम्भावयास्मान् ।

उत्तररामचरितस्य तृतीयाङ्के पुनः —

तमसा—इदानीं तु शम्बूकवृत्तान्तेनानेन सम्भावितजनस्थानं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी यदेव लोपामुद्रया स्नेहादभिशङ्कितं तदेवाभिशङ्क्य च सीतासमेता केनचिदिव गृहाचारव्यपदेशेन गोदावरीमुपगता ।

मुरला—·······कथं सीतया रामभद्रोऽयमाश्वसनीयः स्यात् ।

अनेन प्रकारेण तृतीयाङ्के गोदावरीह्रदपरिसरे सीतारामयोर्मिलनं भवतीति कार्यसिद्धिः ।

अस्मिन्नेवाङ्के करिकलभकवृत्तेन रामस्तस्मिन्नुद्देशे साक्षाद् गच्छति यत्र सीता स्वपुत्रकं करिकलभकं रक्षितुं राममाह्वयति—

सीता—आर्यपुत्र, परित्रायस्व मम पुत्रकम् ।

अस्मिन्नुद्देशे उत्तररामचरितस्य छायाङ्कः प्रवर्तते ।

अभिज्ञानशाकुन्तलेऽपि व्यभिचारिवृत्तं मातलिकथाद्वारेण प्रतीतम् । नायकः प्रथमं देवलोकं गच्छति, प्रत्यावर्तने च काश्यपाश्रमं गच्छति, तत्र शकुन्तलां पुनः प्राप्नोतीति कार्यसिद्धिः । प्रथमाङ्के पुनः दुष्यन्तस्य मृगया, कण्वस्य आश्रमदर्शनं च व्यभिचारिवृत्तं नायिका-प्राप्तयेऽपरिहार्यम् ।

तत्र रामस्य शम्बूकवृत्तं, करिकलभकवृत्तं दुष्यन्तस्येन्द्रसाह्यवृत्तं

च नायकानां चरितानि प्रकाशयन्ति। 'इमानि चरितानि न सन्ति-पताकावृत्तानि' पताकानायकाभावात्। नास्ति तेषु प्रकरीवृत्तं, यतो हि नाम न नायकः प्रकरीनायकेनोपक्रियते। अत्र तु नायकः स्वयमेवोपकरोति। एतेषां वृत्तानां द्वारेण नायकस्तमुद्देशं गच्छति यत्र कार्यसिद्धिर्भवतीति दैववशादेवेत्यूह्यते।

## कालानुयोगि व्यभिचारि वृत्तम्

अपरविधमेव कालानुयोगि व्यभिचारिवृत्तम्। कस्मिंश्चित् कार्ये-समाप्ते नायकेनान्यत्र गन्तव्यम्। किन्तु कस्मैचिदभीष्टायाभिनव-भावि-कार्याय यदि नायकोऽवरुध्यते, सोऽस्मिन्नन्तराले स्वाभीष्टमपि सम्पादयितुमवसरं प्राप्नोति। उदाहरणेनैतद् बोधनीयम्। अभिज्ञानशाकुन्तले दुष्यन्तो मृगयार्थं गतवान्। तत्र पुण्याश्रमदर्शनं तेन कृतम्, पश्चात्तेन राजधानी गन्तव्या। किन्तु स तत्र मुनिकुमाराभ्यामावेद्यते—

तत्र भवतः कुलपतेरसान्निध्याद् रक्षांसि नः इष्टिविघ्नमुत्पादयन्ति। तत् कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रमः।

अनेन व्यभिचारिवृत्तेन नायकः शकुन्तलया प्रणयव्यापारमग्रे प्रवर्तयितुं कालं लभते। ततोऽयं कालानुयोगि व्यभिचारि वृत्तम्।

# नायकानामुत्तमाधमत्वम्

वितर्कास्पदमेव नाटकीयनायकानामुत्तमादिकोटिनिर्धारणम् । साधारणतोऽवधारणा वर्तते यद्यानि पात्राणि प्राकृतं वदन्ति तान्यवश्यमेवाधमानि सन्ति । नैतत् सत्यम् । यतो हि नामाभिज्ञानशाकुन्तले भरतो मृच्छकटिके रोहसेनश्च प्राकृतं वदतः । न तावधमौ । उत्तररामचरिते सीता प्राकृतं वदति । न सा अधमा । अधमत्वं हि पात्रस्य विगर्हणीयतां प्रकटयति । किं न भरतः स्पष्टं व्यनक्ति—

रुक्षवाचोऽथ दुःशीला कुसत्त्वाः स्थूलबुद्धयः ।
क्रोधना घातकाश्चैव मित्रघ्नाश्छिद्रदर्शिनः ॥
पिशुनास्तूद्धतैर्वाक्यैरकृतज्ञास्तथालसाः ।
मान्यामान्यविशेषज्ञाः स्त्रीलोलाः कलहप्रियाः ॥
सूचकाः पापकर्माणः परद्रव्यापहारिणः ।
एभिर्दोषैस्तु सम्पन्ना भवन्तीहाधमा नराः ॥
अधमा प्रकृतिर्या तु पुरुषाणां प्रकीर्तिता ।
विज्ञेया सैव नारीणामधमानां समासतः ॥

ना. शा. २४.५-७,१२

न खलु सर्वे प्राकृतभाषिण ईदृशा हीनाचरणाः सन्ति । अत एव तेषामधमत्वनिर्धारणं मिथ्यैव वार्त्ता । सीता-शकुन्तलादयः प्राकृतभाषिण्योऽपि उत्तमाः ।[१]

भरतानुसारेण वेश्याः शिल्पकारिण्यश्च मध्यमकोटिका भवन्ति ।[२]

अन्यच्च मृच्छकटिके वसन्तसेना गद्यं प्राकृतेन, पद्यं च संस्कृतेन वदति । न सा क्षणे-क्षणे पात्रकोटिं परिवर्तयति । विश्वनाथानुसारेणो-

---

१. ध्वन्यालोके तृतीय उद्योते—उत्तमप्रकृतिभिर्नायिकादिभिः ।
ना. शा. ३४.२३६ ।

२. स्त्रिय उत्तममध्यमाधमा सन्ति । ना. शा. २१.१३७;२४.३,४;२२.२४१

त्तममध्यमकोटिकाः स्त्रियः शौरसेनी—प्राकृतं वदन्ति ।[१] भाषामात्रेण पात्रकोटिनिर्धारणं वितथ-प्रयासः ।

न खलु सर्वे संस्कृत-भाषिण उत्तमा मध्यमा वा भवन्ति । नाटकेषु विटस्तु प्रायः संस्कृतं वदति, किन्तु सोऽधम एव ।[२]

मृच्छकटिके शर्विलकश्चौरोऽधम एव । स संस्कृतं वदति । संस्कृत-भाषणमात्रेण स मध्यमकोटिं नार्हति । तथैव वैतालिकाः, सूतमागध-वन्दिनश्च सर्वेऽधमा एव । ते संस्कृतं वदन्ति । भिक्षुः पुनः प्राकृतं वदति । कथं नाम सोऽधमत्वमर्हति ?

भरतस्य परिभाषानुसारेण दोषसम्पन्ना एवाधमाः सन्तीति पूर्वं दृष्टमेव ।[३] नेयं परिभाषा सम्यग्रूपेण सर्वत्र घटते । अत एव त्रुटिपूर्णेयं प्रतिभाति मे ।

अभिनवगुप्तस्तु पात्राणां कोटिनिर्धारणे तेषां चेष्टितं बहु मन्यते ।[४] ये स्वामिनियोगेनास्थिरचित्ताः प्रेष्यादयस्ते विगर्हितमपि आचरन्ति । अत एव तेषामधमत्वम् । के ते सन्त्युत्तमादय इति विनिर्णये—

### उत्तमः

नाटकेषु नायकाः, नायिकाः, प्रतिनायकाः, पताकानायकाः, प्रकरी-नायकाः, फलाधिकारिनायकाः कार्यनायकाश्चेति सर्वे उत्तमकोटिकाः सन्ति । एतैः समाना जना विष्कम्भकेषु, प्रवेशकेषु वा गृह्यन्ते ।

### मध्यमः

पञ्चरात्रे—ब्राह्मणाः ( विष्कम्भके प्रथमाङ्कस्य )
ऊरुभङ्गे – भटाः ( विष्कम्भके )

---

१. साहित्यदर्पणे ६.१

२. शकारश्च विटश्चैव ये चान्येऽप्येवमादयः ।
सङ्कीर्णास्तेऽपि विज्ञेया ह्यधमा नाटके बुधैः ॥

३. एभिर्दोषैस्तु सम्पन्ना भवन्तीहाधमा नराः ॥   ना. शा. २४.७

४. उत्तममध्यमचेष्टितमाचरति संकीर्णः । ना. शा. २४.१३–१४ अधिकृत्य भारती ।

अभिषेकनाटके—ककुभः ( वानरेश्वरभृत्यः ) द्वितीयाङ्कस्य विष्कम्भके ।

काञ्चुकीयः, बलाध्यक्षश्च ( चतुर्थाङ्कस्य विष्कम्भके )

राक्षसः ( पञ्चमाङ्कस्य विष्कम्भके )

विद्याधराः ( षष्ठाङ्कस्य विष्कम्भके )

प्रतिमानाटके—वृद्धतापसौ ( षष्ठाङ्कस्य विष्कम्भके )

बालचरिते—नारदः ( प्रथमाङ्कस्य विष्कम्भके )[1]

प्रतिज्ञायौगन्धरायणे—काञ्चुकीयः ( द्वितीयाङ्कस्य विष्कम्भके )

अभिज्ञानशाकुन्तले—शिष्यः ( तृतीयाङ्कस्य विष्कम्भके ) । प्रियंवदानुसूये ( चतुर्थाङ्कस्य विष्कम्भके )

मालविकाग्निमित्रे—गणदासो नाट्याचार्यः ( प्रथमाङ्कस्य विष्कम्भके )

नागानन्दे—प्रतीहारः, कञ्चुकी च ( चतुर्थाङ्कस्य विष्कम्भके )

महावीरचरिते—प्रतीहारः ( द्वितीयाङ्कस्य विष्कम्भके ) जटायुः संपातिश्च ( पञ्चमाङ्कस्य विष्कम्भके )

उत्तररामचरिते—तापसी आत्रेयी, वनदेवता वासन्ती, ( द्वितीयाङ्कस्य विष्कम्भके ), मुरला, तमसा नद्यौ ( तृतीयाङ्कस्य विष्कम्भके ) शिष्यः सौधातकिः ( चतुर्थाङ्कस्य मिश्रविष्कम्भके )

मालतीमाधवे—कामन्दकी बौद्धसंन्यासिनी (प्रथमाङ्कस्य मिश्रविष्कम्भके)

कपालकुण्डला अघोरघण्टशिष्या ( पञ्चमाङ्कस्य विष्कम्भके ),

सौदामिनी कामन्दक्याः पूर्वशिष्या ( नवमाङ्कस्य शुद्धविष्कम्भके )

**अधमः**

पञ्चरात्रे—द्वितीयाङ्कस्य प्रवेशके वृद्धगोपालकः, गोमित्रकः, गोपदारकाः

बालचरिते—दामकः ( तृतीयाङ्कस्य प्रवेशके )

१. प्रकाशितपुस्तकेऽयमंशो विष्कम्भक इति न निर्दिष्टम् ।

अविमारके—चेटी, विदूषकः (द्वितीयाङ्कस्य प्रवेशके), परिजनाः (चतुर्थाङ्कस्य प्रवेशके) धात्री (षष्ठाङ्कस्य प्रवेशके)

प्रतिमानाटके—सुधाकारः भटः (तृतीयाङ्कस्य प्रवेशके), चेटयः (चतुर्थाङ्कस्य प्रवेशके)

प्रतिज्ञायौगन्धरायणे—गात्रसेवकः (चतुर्थाङ्कस्य प्रवेशके)

स्वप्नवासवदत्ते—विदूषकः, चेटी (चतुर्थाङ्कस्य प्रवेशके) प्रतिहारी (षष्ठाङ्कस्य विष्कम्भके)

मुद्राराक्षसे—क्षपणकः (पञ्चमाङ्कस्य प्रवेशके)

अभिज्ञानशाकुन्तले—रक्षी, मत्स्यजीवी, राजश्यालः (षष्ठाङ्कस्य प्रवेशके)

विक्रमोर्वशीये—पेलवः (तृतीयाङ्कस्य मिश्रविष्कम्भके), चित्रलेखा, सहजन्या[1] च (चतुर्थाङ्कस्य प्रवेशके)

मालविकाग्निमित्रे—मधुकरिका उद्यानपालिका (तृतीयाङ्कस्य प्रवेशके)

रत्नावल्याम्—सुसंगतानिपुणिके चेटीद्वयम् (द्वितीयाङ्कस्य प्रवेशके)

वेणीसंहारे—राक्षसी राक्षसश्च (तृतीयाङ्कस्य प्रवेशके)

वीरचरिते—त्रिजटा (षष्ठाङ्कस्य विष्कम्भके)

उत्तररामचरिते—शिष्यो दाण्डायनः (चतुर्थाङ्कस्य मिश्रविष्कम्भके)

विद्याधरी (पञ्चमाङ्कस्य मिश्रविष्कम्भके)

मालतीमाधवे—शिष्यावलोकिता (प्रथमाङ्कस्य मिश्रविष्कम्भके)

बुद्धरक्षिता कामन्दक्याः सखी (तृतीयाङ्कस्य प्रवेशके)

पात्राणां कोटिमधिकृत्य कतिपयप्रश्ना उद्यन्ति। तथाहि—कुन्दमालायास्तृतीयाङ्कात् प्राक् प्रवेशक एकमेव पात्रं तापसः कथमधमत्वमर्हति। नाटके भिक्षवस्तु प्राकृतं वदन्ति मुद्राराक्षसे, मृच्छकटिके च। किं तेऽधमाः। तापसा भिक्षुभिः समा एव। किन्तु तेषामधमकोटौ गणनाभारतीयसंस्कृतेर्विरुद्धा वार्ता।

१. अप्सराः

अस्मिन्नेव नाटके चतुर्थाङ्कात् प्राक् प्रवेशके तापसीद्वयं कथमधमत्वमर्हतीति वितर्कास्पदमेव। उत्तररामचरिते तापसीनां मध्यमकोटिर्दृश्यते।

नागानन्दस्य चतुर्थाङ्कस्य विष्कम्भके संस्कृतवादी प्रतिहारो मध्यमकोटिकोऽस्ति। कथं नाम प्रतिहारी तर्हि अधमेति कल्पनीया। पत्नीपतिस्त्रीपुरुषयोरेकैव कोटिर्मन्तव्येति मे मतिः।

महावीरचरिते माल्यवान् मध्यमकोटिक इति मिश्रविष्कम्भकेण प्रतिभाति। सोऽयं राक्षसः कुटिलमतिः कथमधमत्वं नार्हति। स तत्र संस्कृतं वदति।

मालतीमाधवस्य पञ्चमाङ्कस्य षष्ठाङ्कस्य च शुद्धविष्कम्भके कपालकुण्डला ( संस्कृतवादिनी ) विलसति। सा अघोरघण्टस्य कापालिकस्य शिष्या अधमकर्मसु नित्यं व्यापृता कथं नाम मध्यमकोटौ स्थानमर्हति।[1] तस्या मध्यमकोटिः कवेस्त्रुटिः प्रतिभाति। सा स्वकर्मभिः पतिता प्रतिभाति।

अस्मिन्नेव नाटके शुद्धाचार-प्रवीणा बुद्धरक्षिता प्राकृतवादिनी सप्तमाङ्कस्य प्रवेशके पात्रमस्ति। सा अधमकोटिकेति कथं भवेत्। तत्रैवाष्टमाङ्कस्य प्रवेशकेऽवलोकितायाः अधमत्वं नोचितम्। सा कामन्दक्याः सखी एव।

**निष्कर्षः**

१. यदि पुरुषः कश्चिदुत्तमो मध्यमोऽधमो वा, तस्य पत्नी तस्यैवकोटौ गणनीया।

२. उत्तमाचारा एव जना उत्तमा इति कल्पनीयम्। आचारे तु भाषा, व्यवहारः, प्रकृतिः, आत्मगुणाश्च ग्रहणीयाः।

---

१. कपालकुण्डला स्वात्मानं वर्णयति—

शान्तिः कुतस्तस्य भुजङ्गशत्रा—
यस्मिन्निबद्धानुशया सदैव।
जागर्ति दंशाय निशातदंष्ट्रा—
कोटिर्विषोद्गारगुरुर्भुजङ्गी ॥ ६.१

३. अधमवृत्तिका एवाधमा भवन्तु नाम।

४. पुरातनावधारणानुसारेण जीविकासाधनमपि पात्राणां कोटि-निर्धारणे विचार्यते स्म। अभिज्ञानशाकुन्तलस्य मत्स्यग्राहोऽशुद्धाजीवेनाधमो गणित इति नोचितम्। एवमेव सामाजिकी प्रतिष्ठा कोटिनिर्धारणस्याधार आसीत्।

रूपकेषूत्तममध्यमाधमपात्राणां पुनरवधारणमावश्यकमेव। तदनुसृत्य प्रवेशक-विष्कम्भकयोः पुनर्नामकरणमपेक्षितम्।

# अंकस्य मध्येऽपि प्रवेशकः

[ नाटयशास्त्रीय-ग्रन्थकाराणां मतानुसारेण प्रवेशको द्वयोरङ्कयोर्मध्य एव भवेत् । नैतत् पूर्णं तथ्यं व्यनक्ति यतो हि नामाङ्कस्य मध्येऽपि प्रवेशकः सम्भवतीति प्रदर्श्यतेऽत्र । अत एव द्विविधः प्रवेशको विज्ञेयः ]

भरतानुसारेणाङ्कस्यान्तिमे भागे बिन्दुर्भवति । तं बिन्दुमाश्रित्य प्रवेशको प्रवर्तते । प्रवेशकोऽङ्कभागेऽवर्णितानां कथांशानामुपक्षेपणं करोति । किन्तु नाटकेषु क्वचिदेवेयं व्यवस्था दृश्यते । तत्र बिन्दुरङ्कान्ते ततोऽनुसृत्य प्रवेशकश्च न स्तः । तयोः कार्यं क्वचिदेकोक्त्या, क्वचित्कंचुकिनो भाषणेन विन्यस्यते ।

भरतस्य नाटयशास्त्रे प्रवेशक इति पदं त्रिविधं प्रयुक्तम् ।

१. प्रवेशक इति प्रवेशकः, विष्कम्भकः, चूलिका, अङ्कास्यमङ्कावतारश्चेति अर्थोपक्षेपकाः । इदं प्रवेशकस्य महासामान्यवचनम् ।

२ प्रवेशक इति विष्कम्भकः प्रवेशकश्चेति मध्यम-सामान्यवचनम् ।

३. प्रवेशकस्तु प्रवेशक एवेति विशिष्टं वचनम् ।

एतेषां पञ्चानामर्थोपक्षेपकाणां भेदकौ वक्ता विषयश्च भवतः ।[१]

इमे अर्थोपक्षेपका अंकेषु नाटकीयकथाधारां विच्छिद्य निवेश्यन्ते । चूलिका, अङ्कास्यमङ्कावतारश्चेति त्रीणि अङ्कमध्येऽपि प्रायशो दृश्यन्त एवेति लक्षणग्रन्थकारैर्दर्शितमेव । न तथा प्रवेशकः । स तु द्वयोरङ्कयोरन्तराल एव विनिवेशनीय इति प्रवदन्ति नाटयमनीषिणः । तद्यथा—

**१. दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम् ।**
**अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधातव्यम् ॥**

ना. शा. १८.२६

२. **अङ्कान्त--सन्धिषु प्रवेशकः** ॥ ना. शा. १८.२९

३. **अङ्कान्तराल--विहितः प्रवेशः** ॥ ना. शा. १८.५६

४. प्रवेशकोऽङ्कान्तर--सन्धिषु कर्तव्यः । न तु मध्यान्तयोः । नाटकलक्षणरत्नकोशे ।

---

१. एतद्भेदविवरणमभिनवभारत्याः प्रवेशकप्रकरणमाश्रित्य संदृब्धम् ।

५. प्रवेशोऽङ्कद्वयस्यान्तः । दशरूपके १.६१

६. अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशकः । रसार्णवसुधाकरे ।

लक्ष्यग्रन्थानुशीलनेन प्रतिभाति यत् प्रवेशको न केवलं द्वयोरङ्कयोर्मध्येऽपितु कस्यचिदङ्कस्य मध्येऽपि सन्निवेशितः । तद्यथा मृच्छकटिकस्य नवमाङ्क ऊनविंशश्लोकात् पश्चात्

( ततः प्रविशति गृहीताभरणो विदूषकः )

विदूषकः—प्रेषितोऽस्मि आर्यचारुदत्तेन वसन्तसेनासकाशम्, तत्रालंकरणानि गृहीत्वा, यथा—'आर्यमैत्रेय ! वसन्तसेनया वत्सो रोहसेन आत्मनोऽलङ्कारेणालंकृत्य जननी-सकाशं प्रेषितः । अस्या आभरणं दातव्यम् । न पुनर्ग्रहीतव्यम् । तत्समर्पय' इति । तद्यावद् वसन्तसेनासकाशमेव गच्छामि । ( परिक्रम्यावलोक्य चाकाशे—कथ भावरेभिलः । भो भावरेभिल ! किं निमित्तं त्वमुद्विग्न इव लक्ष्यसे ? ( आकर्ण्य ) कि भणसि—'प्रियवयस्यश्चारुदत्तोऽधिकरणमण्डप आहूतः' इति । तन्न स्वल्पेन कार्येण भवितव्यम् । तत्पश्चात् वसन्तसेनासकाशं गमिष्यामि । अधिकरण-मण्डपं तावद् गमिष्यामि ।

अयं गद्यांशो दृश्यं कथावस्तु नो प्रस्तौति । अत एवार्थोपक्षेपक एव । तत्रापि अधमपात्रेण विदूषकेण प्रोक्तत्वात् नास्त्ययं विष्कम्भकः । न च चूलिकायम् । सूतमागधवन्दिनश्चूलिकाया वक्तारो भवेयुः । तत्राङ्कास्याङ्कावतारयोः कथैव नास्ति । नायमाकाशे वचनं, एकोक्तिर्वा । वस्तुतो गद्यांशोऽयं प्रवेशक एव सूच्यश्च ।

प्रवेशकेनोक्तं सूच्यं केवलं रङ्गपीठे वर्त्तमानानामधमकोटिकपात्राणां कृते भवति । प्रेक्षकाणा विज्ञापनार्थं तु भवत्येव । अत्र न कश्चिदन्यो मध्यमकोटिकमुत्तमकोटिकं वा पात्रं प्रवेशकेन सूच्यं तथ्यं विजानाति । प्रवेशकस्येदं परमावश्यकं लक्षणं तु पूर्वोक्ते गद्यांशे दृश्यत एव । तत्कथं निर्वाहितम् ?

नाटयशास्त्र-कक्ष्या—विभागप्रकरणानुसारेणैकस्मिन् काले कस्मिंश्चिद्रङ्गपीठे परस्परं सुदूरस्थानि स्थानानि प्रकल्पितानि बभूवुः । अत एव कस्यचिदेकस्य भागस्य पात्रमन्येषु भागेषु स्थितानां पात्राणां

श्रवणपरिधिबाह्यमभवत् ।[1] अस्यां स्थितौ पूर्वोक्तगद्यांशोऽधिकरणाधिष्ठातृभिर्न श्रुतम् । तदेव स्पष्टयितुं कविना लिखितम्—( परिक्रम्यावलोक्य च ) इदमधिकरणमण्डपम् । तद्यावत् प्रविशामि । ( प्रविश्य ) । इदं प्रविश्येतिपदमधिकरणमण्डपस्य पार्थक्यं प्रकटीकरोति ।

वस्तुतः प्रवेशकोऽयमङ्कमध्ये नवीनं दृश्यम् ( Scene ) इति ।

मालविकाग्निमित्रस्य प्रथमेऽङ्के बाह्यकक्ष्यां प्रविश्य विदूषको ब्रूते—आज्ञप्तोऽस्मि तत्रभवता राज्ञा - गौतम चिन्तय तावदुपायम्, यथा मे यदृच्छादृष्टप्रतिकृतिमालविका प्रत्यक्षदर्शना भवतीति । मया च तत्तथाकृतम् । तावदस्मै निवेदयामि । ( परिक्रामति )

अयं गद्यांशोऽङ्कमध्ये प्रवेशक एव ।

प्रस्तावनामध्येऽपि विष्कम्भकस्य समावेशो दृश्यते । तथा हि—उत्तररामचरितस्य प्रस्तावनायाम्—

सूत्रधारः —एषोऽस्मि कार्यवशादायाध्यकस्तदानींतनश्च संवृत्तः । ( समन्तादवलोक्य ) भो भोः यदा तावदत्रभवतः पौलस्त्यकुलधूमकेतोर्महाराजरामस्याय पट्टाभिषेकसमयो रात्रिंदिवमसंहृतनान्दीकाः । तत्किमिदानीं विश्रान्तचारचरणानि चत्वरस्थानानि ।

नटः ( प्रविश्य )—भाव, प्रेषिता हि स्वगृहान्महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गमराक्षसाः सभाजनोपस्थायिनश्च नानादिगन्तपावना ब्रह्मर्षयो राजर्षयश्च, यत्समाराधनायैतावतो दिवसान् प्रमोद आसीत् ।

सूत्रधारः—आ, अस्त्येतन्निमित्तम् !

नटः —अन्यच्च

**वसिष्ठाधिष्ठिता देव्यो गता रामस्य मातरः ।**
**अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम् ॥ ३**

सूत्रधारः —'वैदेशिकोऽस्मि' इति पृच्छामि । कः पुनर्जामाता ।

नटः — **कन्यां दशरथो राजा शान्ता नाम व्यजीजनत् ।**
**अपत्यकृतिकां राज्ञे रोमपादाय तां ददौ ॥ ४**

---

१. बाह्यकक्ष्यायां स्थितो विदूषक इमं प्रवेशकं वक्ति ।

विभाण्डकसुतस्तामृष्यशृङ्गमुपयेमे । तेन द्वादशवार्षिकं सत्रमारब्धम् । तदनुरोधात् कठोरगर्भामपि जानकीं विमुच्य गुरुजनस्तत्र यातः ।

एतस्य संवादांशस्य विष्कम्भकता प्रतिपापयन् वीरराघवः स्वोपज्ञायामुत्तररामचरितटीकायां ब्रूते—

..........सूत्रधारस्यैव काव्यकथाघटकदेशकालसम्बन्धमङ्गीकृत्य विष्कम्भकवर्ण्यकथोपन्यासः सूत्रधारत्वापरित्यागाच्च प्रस्तावनात्वाहानिरिति कवेर्मतम् ।

## अङ्कस्यान्तिमे भागे विष्कम्भकः

बालचरितस्य द्वितीयेऽङ्केऽङ्कान्तप्रायदेशेऽधोविधो विष्कम्भको न्यस्तः

( ततः प्रविशति कात्यायनी सपरिवारा )

कात्यायनी—शुम्भं निशुम्भं महिषं च हत्वा कृत्वा सुरांस्तान् हतशत्रुपक्षान् ।
अहं प्रसूता वसुदेववंशे कात्यायनी कंसकुलक्षयाय ॥२.२०

कुण्डोदरः— कुण्डोदरोऽहमजितो रणचण्डकर्मा
देव्याः प्रसूतिजनितोग्रमहानिनादः ।
शीघ्रं प्रयामि गगनादवनिं विशालां
दृप्तान् जिघांसुरसुरानतिवीर्यदर्पान् ॥ २.२१

इत्यारभ्य

कात्यायनी—कुण्डोदर, शङ्कुकर्ण, महानील, मनोजव, तदागम्यताम् । भगवतो विष्णोर्बालचरितमनुभवितुं गोपालवेषप्रच्छन्नघोषमेवावतरिष्यामः ।

सर्वे—यदाज्ञापयति भगवती । ( निष्क्रान्ता सपरिवारा कात्यायनी )

इति यावत् विष्कम्भकः । अतः परं पुनरंकः प्रतन्यते ।

राजा—अये प्रभाता रजनी ।

**अतः प्रविश्य शान्त्यर्थं शान्तिकर्मोचितं गृहम् ।**
**करोमि विपुलां शान्तिं मम शान्तिर्भविष्यति ॥ २.२५**

अत्र रंगपीठस्यैकभागे विष्कम्भकोऽपरभागे चाङ्कोचितकंसचरितमभिनीतमिति विबोधनीयम् ।

# जनान्तिकापवारितक-स्वगत-विमर्शः

संस्कृतनाटकेषु रहस्य-निगूहनं तु कला-सौष्ठवार्थं बहुविधं निष्पादितम्। इदं निगूहनं त्रिविधं भवति—(१) पात्रविषयकम् (२) घटनाविषयकम् (३) भावविषयकञ्च। पात्रविषयकनिगूहनस्योदाहरणं स्वप्नवासवदत्ते वासवदत्ता प्रस्तौति।[१] घटना-विषयकं निगूहनं तु अभिज्ञानशाकुन्तले दुर्वाससः शापस्य पात्रद्वयेनैव ज्ञानम्। भावनिगूहनं तु मालविकाग्निमित्रे द्वितीयस्याङ्कस्यारम्भेऽग्निमित्रस्य विदितमेव। अत्र भावनिगूहनस्योपाया विधिविधानं च व्याख्यायन्ते। एतानि स्वगतं, जनान्तिकम्, अपवारितकं च सन्ति। भरतानुसारेणैतानि 'गूढार्थयुक्तानि-वचनानि' सन्ति।

रङ्गपीठे बहूनि पात्राणि युगपद् वर्तन्ते। नाट्याभिनयकाले प्रायशस्तेषु कस्यापि वचनं सर्वाणि शेषाणि पात्राणि शृण्वन्ति। एतादृशं वचनं प्रकाशं वा सर्वश्राव्यं वेति संज्ञितम्। अपरञ्च क्वचिदेकमपि पात्रं वक्तुर्वचनं न शृणोतीति तस्य मन्दस्वरभाषणेन दर्श्यत इत्यश्राव्यं, स्वगतमात्मगतं वा सुविदितमेव। किमपि पात्रं न शृणोतीति त्रिपताककरेण यदा दर्श्यते तदापवारितकं भवति।[२] तद्यथाभिज्ञानशाकुन्तलस्य सप्तमाङ्के—

राजा—( अपवार्य ) हन्त द्वितीयमिदमाशाजननम्। मालविकाग्निमित्रस्य तृतीयेऽङ्के

विदूषकः —( अपवार्य ) छिन्नहस्ते मत्स्ये पलायिते निर्विण्णो धीवरो भणति—गच्छ धर्मो मे भविष्यतीति। कथन्नामैतत् स्वगतमिति कृत्वा न दर्शितमित्यग्रे वक्ष्यामः। अत एव स्वगतमपवारितकं चोभे अश्राव्यमिति।

---

१. वस्तुतः राज्ञी सा तपस्विनो भगिनीति निगूह्यते।

२. धनञ्जयोऽश्राव्यं स्वगतं मतमिति परिभाषते। किन्तु नैतत्पारमार्थिकं सत्यम्। अपवारितकमपि क्वचिदश्राव्यं भवति, किन्तु तन्नियतश्राव्यमपि भवतीति अग्रे व्याख्यास्यामः। ना० शा० २५.९१

## अपवारितकम्

**नाटकेष्वपवार्येति संकेतेनापवारितकं द्योत्यते ।**

कतिपयस्थलेषु अनाहूत एव विशेषविज्ञानबलेन कश्चित् पुरुषोऽप-वारितकेन किञ्चिन्मनोनुकूलं रहस्यमन्यं प्रति कथयति । तथा हि अभि-ज्ञानशाकुन्तलस्य द्वितीयाङ्के--

उभौ ( ऋषिकुमारकौ )--तत्र भवतः कुलपतेरसांनिध्याद् रक्षांसि नः इष्टि-विघ्नमुत्पादयन्ति । तत् कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

राजा--अनुगृहीतोऽस्मि ।

विदूषकः --( अपवार्य ) अयमिदानीमनुकूलस्ते गलहस्तः ।

राजा--( स्मितं कृत्वा ) रैवतक इत्यादि । ईदृशमपवारितकं विदूष-कस्यातीतघटनावृत्तानां विशेषज्ञानेनैव सम्भवति, नान्यथेति सुधियां प्रतीतमेव ।

अत्रापवारितकस्य प्रवर्तनं पात्रद्वयेन विदूषकेण राज्ञा च भवति । मालविकाग्निमित्र ईदृशमपवारितकं प्रथमाङ्कस्यान्ते प्रवर्तते । तद्यथा—

विदूषकः — ( अपवार्य ) भो धीरं गच्छ । तत्र भवतो धारिणी विसंवादयिष्यति ।

अपरविधमपवारितकं क्वचिज्जनान्तिकस्य पूर्वभावमपेक्षते । प्रथमं जनान्तिकेन विधिना कश्चित् पुरुषः स्वहृदयस्थं भावं प्रकटयति । ततः परं तेन पुरस्कृतो बाधो वितर्कः पृच्छा वापवारितकेन समाधीयते । तथा हि मालविकाग्निमित्रे---

राजा--( जनान्तिकम् ), वयस्य

**नेपथ्यपरिगतायाश्चक्षुर्दर्शन समुत्सुकं तस्याः ।**
**संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम् ॥** २.१

विदूषकः --( अपवार्य ) उपस्थितं नयनमधु । सन्निहितमक्षिकं च । तदप्रमत्त इदानीं प्रेक्षस्व ।

( ततः प्रविशत्याचार्यप्रत्यवेक्षमाणाङ्गसौष्ठवा मालविका )

अपरं च

विदूषकः ---( जनान्तिकम् ) प्रेक्षतां भवान् । न खल्वस्याः प्रति-च्छन्दात् परिहीयते मधुरता ।

राजा---( अपवार्य ) वयस्य

**चित्रगतायामस्यां कान्तिविसंवादशंकि मे हृदयम् ।**
**सम्प्रतिशिथिलसमाधिं मन्ये येनेयमालिखिता ॥ २.२**

पूर्वोक्तैरुदाहरणैः स्पष्टं भवति यदपवारितकं सूचनात्मकं वोपदे-शात्मकं वा भवति । यद्यपि तस्योत्तरवचनं नापेक्षितं किन्तु तदाश्रित्यो-त्तरवचनं क्वचिद् भवेन्नाम । तद्यथा मालविकाग्निमित्रे---

विदूषकः---( अपवार्य ) भो धीरं गच्छ । तत्र भवती धारिणी विसंवादयिष्यति ।

राजा---**धैर्यावलम्बिनमपि त्वरयति मां मुरजवाद्यरागोऽयम् ।**
**अवतरतः सिद्धिपथं शब्दः स्वमनोरथस्येव ॥**
१.२२

## जनान्तिकम्

जनान्तिकं तूत्तररूपेण कस्यचित् संशयावच्छेदकस्य समर्थक वाक्यस्य परभावं साधारणतोऽन्वीक्षते । तत्र जनान्तिकवचनस्य श्रोता कश्चिद् भवेदेव[1] । अपवारितकस्य श्रोता क्वचिद् भवेत्, किन्तु स नास्ति अपरिहार्यः । अत एव जनान्तिकं द्वयोस्त्रयाणामपि वार्तालापो भवति । त्रयाणां वार्तां यथाभिज्ञानशाकुन्तले—

सख्यौ—( उभयोराकारं विदित्वा, जनान्तिकम् ) हला शकुन्तले, यद्यत्राद्य तातः संनिहितो भवेत् ।

शकुन्तला—( सरोषमिव ) ततः किं भवेत् ?

सख्यौ—इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं करिष्यति ।

---

१. श्रोतुः प्रतिवचनं जनान्तिके प्रायो भवति, किन्तु सर्वत्र न भवति । क्वचि-ज्जनान्तिकं यं प्रत्युच्यते, स जनान्तिकवचनमनवधानान्न शृणोति । तद्यथा-वेणीसंहारस्य प्रथमाङ्के द्रौपदी जनान्तिकं वदति भीमं प्रति, किन्तु भीमो न शृणोति ।

शकुन्तला—( सकृतककोपम् ) युवामपेतम्। किमपि हृदये कृत्वा मन्त्रयेथे। न युवयोर्वचनं श्रोष्यामि[1]।

अस्मिन्नुदाहरणे जनान्तिकेनैव प्रश्न उत्तरश्चोभे भवतः। केवलमेको राजैव न शृणोतीति त्रिपताककरेण संकेत्यते।

कतिपयेषु जनान्तिकेषु द्वावपि न शृणुतः जनान्तिकवार्ताम्। तद्यथा—

प्रियंवदा—( जनान्तिकम् )-अनसूये को नु खल्वेष चतुरगभीराकृतिश्चतुरं प्रियमालपन् प्रभाववानिव लक्ष्यते।

अनसूया—सखि, ममाप्यस्ति कौतूहलम्। पृच्छामि तावदेनम्।

इयं जनान्तिकवार्ता द्वाभ्यां ( शकुन्तलया राज्ञा च ) न श्रूयते। अत एवाभिनवगुप्तस्य 'जनान्तिकस्य निगूहनमेकस्यैव भवतीत्यवधारणं न सत्य प्रतिभाति।[2] विदूषकेण राज्ञा च प्रोक्तानि जनान्तिकानि धारिण्या, परिव्राजिकया मालविकया च न श्रूयन्ते। मालविकाग्निमित्रे पुनः जनान्तिकेन यत्कथ्यते तस्यापरेण केनचित् समर्थनं प्रायो दृश्यते।[3] तथाहि—

प्रियंवदा—( जनान्तिकम् ) अनसूये, दूरगतमन्मथाक्षमेयं कालहरणस्य। यस्मिन् बद्धभावैषा स ललामभूतः पौरवाणाम्। तद् युक्तमस्या अभिलाषोऽभिनन्दितुम्।

अनसूया—सखि, तथा यथा भणसि।

---

१. अत्र शकुन्तलाया जनान्तिकोक्तिरनुसूयाप्रियंवदे इति द्वयं प्रति वर्तते।

२. अभिनवगुप्तो नाटचशास्त्रस्य २५.८९ कारिकामधिकृत्य व्याख्याति— जनान्तिकमैकान्तिकत्वं चैकस्यैव निगूह्यत इति विशेषः। उदाहरणैः प्रतीयते यज्जनान्तिकमनैकान्तिकमपि भवति तथा चानेकेषामपि निगूह्यते। अत एव निगूहनीयपुरुषाणां संख्यया जनान्तिकापवारितकयोर्भेदनिर्धारणं मिथ्याप्रत्ययः।

३. क्वचिच्छ्रोत्रा विरोधोऽपि भवति। मालविकाग्निमित्रे धारिण्या जनान्तिकस्याभिप्रेतं गणदासेन न समर्थितम्।

जनान्तिकेन यो वितर्कः प्रस्तूयते, तस्य समाधानं क्वचित् 'प्रकाशम्' इत्युक्त्या अपरस्यासंबद्धजनस्योत्तरेण भवति, अन्यत्र चापवारितकेन श्रोतुर्वचनेन भवति।[1]

जनान्तिकेनाभिनवैव विचारसरणिः प्रस्तूयते, न तथापवारितकेन। एतस्याः पूर्वविचारसरण्या सगमनेन नवैव काचिद्विचारधारा क्वचित् प्रवतते। किन्तु नेदमावश्यकम्।

## नवीनविचारसरणेः प्रस्तावना प्रवर्तनं च

अभिज्ञानशाकुन्तलस्य प्रथमाङ्के—

प्रियंवदा – ( जनान्तिकम् ) अनसूये को नु खल्वेष चतुरगम्भीराकृतिश्चतुरः प्रभाववानिव लक्ष्यते। इत्यनेन नायकयोः परिचय-प्रकरणमारभ्यते। तेन तयोः प्रणयावतारः प्रवर्धते।

अन्यत्र जनान्तिकेन केवलं नवीन-विचार-सरणेः प्रस्तावनैव भवति। सा पुनर्नोद्भिद्यते। तथाहि—अभिज्ञानस्य चतुर्थाङ्के शकुन्तलानुसूयां प्रति जनान्तिकं वक्ति—

हला, पश्य, नलिनीपत्रान्तरितमपि सहचरमपश्यन्ती आतुरा चक्रवाकी आरौति इत्यादि। पूर्वतनविचारधारायां द्वीपमिवेदं जनान्तिकं प्रतिभाति यतो हि नामातः परं पूर्वविचारसरणिः पुनः प्रवर्तते।

---

१. अनुयुक्तस्य प्रकाशमित्युक्त्या जनान्तिकेऽनुयोक्तुः समाधानमभिज्ञानशाकुन्तलस्य तृतीयेऽङ्के शकुन्तलाया अधोवचनेन भवति—सखि, कस्य वान्यस्य कथयिष्यामि। यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः इत्यादि।

अपवारितकेन पुनरभिज्ञानशाकुन्तले—

शकुन्तला—( जनान्तिकम् ) हला प्रेक्षस्व, नलिनीपत्रान्तरितमपि······ इत्यादि।

अनसूया—( अपवार्य ) सखि मैवं मन्त्रय—एषापि प्रियेण··············· इत्यादि। ४.१६

**जनान्तिकापवारितकयोरन्तरम्**

१. रङ्गपीठे जनान्तिकवचनमपरं कमपि सन्निहितं कृत्वैवोच्यते[1] अपरस्य तस्य पुरुषस्य तत्र प्रतिवचनमपि स्यात् । अपवारितकस्य क्वचित् कोऽपि श्रोता न स्यात् । यथा प्रागेव दर्शितम् ।

२. जनान्तिकात् पश्चादपवारितकं क्वचिद् भवेत्, किन्तु अपवारिकात् पश्चाज्जनान्तिकस्यावसरो नास्ति ।

३. अपवारितकं पूर्वानुभवज्ञानादिजन्यं समाधानदिशि वक्तव्यं भवति । तत्र काचित् सूचना वा कश्चिदुपदेशो वा भवति । नैतदावश्यकं जनान्तिके ।[2]

४. अपवारितकस्य कारणमपरस्य कस्यचिद् वचनं भवति । जनान्तिकस्य एतद्विधं कारणमावश्यक नास्ति । विशेषस्थितेरनुभवेन यथा स्वगतं क्वचित् भवेत् तथैव जनान्तिकमपि भवेत् ।

## स्वगतापवारितकयोर्भेदाभेदौ

स्वगतं तु केनापि पात्रेण न श्रूयते । तत्र वक्ता साभिनयं न वदति शनकैर्वदति वाचिकादीनामभिनयानां सर्वथा अभावो भवति । नानुभावः कश्चित् प्रकटयते पात्रेण । एतस्माद्विपरीतमेवानया दृशापवारितकं भवति । तत्र पात्रं साभिनयं तारस्वरेण ब्रूते वाचिकादीनामभिनयानां सातत्यं भवति । तदनुसारिणाऽनुभावाः सम्यक् प्रकटयन्ते ।[3]

अपरञ्चापवारितकं वचनं कतिपयपात्राणि न शृण्वन्तीति त्रिपताकेन द्योत्यते । न तु स्वगते त्रिपताकस्यावश्यकता ।

---

१. जनान्तिके श्रोतुः कर्णान्तिकगोचरत्वं नापेक्षितम् । वक्ता श्रोतारं विलोकयतीतिमात्रमावश्यकम् । यथामालविकाग्निमित्रे देव्या गणदासं प्रति जनान्तिकम् ।

२. जनान्तिकेऽपि क्वचिदुपदेशः स्यात् । तद्यथा—अभिज्ञानशाकुन्तले सेनापतेर्जनान्तिकवचने—सखे, स्थिरप्रतिबन्धो भव ।' मृच्छकटिकस्य प्रथमाङ्के विटो जनान्तिकेन वसन्तसेनामाभूषणादिकमपनेतुं निर्दिशति किन्तु जनान्तिक इदमादेशात्मकंतत्त्वमावश्यकं नास्ति ।

३. अनेनेदं स्पष्टमेव यत् स्वगतेऽलंकृतभाषायाः तावती आवश्यकता नास्ति यावती अपवारितके ।

पूर्ववचनमनपेक्ष्यापि स्थितिमनुप्रेक्ष्यैव क्वचित् किञ्चित् पात्रं स्वगतं ब्रवीति। अपवारितकेऽपि क्वचित् पूर्ववचनमनपेक्षितं स्यात्। तद्यथा मालविकाग्निमित्रे—

विदूषकः—( अपवार्य ) भो धीरं गच्छ। तत्रभवती धारिणी विसंवादयिष्यति।

हृदयस्थो भावोऽपवारितकेन, स्वगतेन जनान्तिकेन च पात्रेभ्यो निगूह्यते इति तेषां साम्यमंशत एव।

स्वगतमश्राव्यमेव भवति। अपवारितकं तु क्वचिदश्राव्यमन्यत्र नियतश्राव्यं भवति।

## जनान्तिकापवारितक-स्वगतानां विशेषोपलब्धयः

नाट्येन रस एव परमोपलब्धिः। सोऽयं रसो नायकानामनुभावमेव सविशेषमाश्रयते। अनुभावास्तु प्रचुरमेव रहस्यविवरणेषु विलसन्ति। रहस्य-विवरणार्थं केवलं पात्रद्वयस्य हृदयस्थो वार्तालापः 'प्रकाशम्' इति विधानेन सम्यक् समर्थः। प्रायो राजा विदूषकश्च, नायिका तस्याः सखी च द्वयमेव प्रकाशं रहस्यात्मकं विवरणं विशेषतः शृङ्गाररस्य निष्पत्तये प्रतन्वन्ति। किन्तु नैषा एकान्तिकस्थितिः सर्वत्र वर्तते। यत्र बहूनि पात्राणि रङ्गपीठस्थानि भवन्ति, तत्र रहस्यात्मकं-प्रणयवृत्त—प्रवर्धनं जनान्तिकेनापवारितकेन स्वगतेन च क्रियते। मालविकाग्नि-मित्रस्य द्वितीयाङ्कस्य प्रारम्भे राज्ञो विदूषकस्य च जनान्तिकापवारितक-वार्तालापोऽमु विषयं स्पष्टयति।

प्रधानेतिवृत्तस्यैका मुख्या धाराद्यन्तं प्रवर्तते। तत्रानुषङ्गिककथा-धारा सविशेषं रुचिरा भवति। सा तु क्वचित् स्वगतेनान्यत्र जनान्तिकेना-पवारितकेन वा सम्भाव्यते। अभिज्ञानशाकुन्तलस्य चतुर्थाङ्कस्यान्तिमे भागे चक्रवाकी-विषयिणो शकुन्तलानुसूययोर्जनान्तिकवार्तास्य प्रयोजनस्य स्पष्टमुदाहरणं प्रस्तौति।

स्वगतेन, जनान्तिकेनापवारितकेन च यत्किञ्चिदुच्यते तत् भावाति-रेकप्रभाविनजनानामेव विशेषकथनमित्यवधारणीयम्।

## 'प्रकाशम्' इत्युक्त्या सम्बन्धः

स्वगतोक्तेः पश्चात् 'प्रकाशम्' प्रायो दृश्यत एव। अपवारितकात् पश्चादपि 'प्रकाशम्' क्वचिदनुसन्धीयते। तद्यथापवारितकप्रकरणे विक्रमोर्वशीयस्योदाहरणे दृश्यते—'छिन्नहस्ते मत्स्ये पलायिते'—इत्यादि अपवारितकम्, तदनु प्रकाशम् भवति, किं तादृशस्ते प्रियस्तत्रभवान्।[1] जनान्तिकात् पश्चादपि 'प्रकाशम्' क्वचिद् भवत्येव। यथा अभिज्ञान-शाकुन्तलस्य द्वितीयाङ्के सेनापतिः प्रथमं जनान्तिकेन विदूषकं किञ्चिदन्य द् बोधयति, पश्चात्तस्मिन्नेव क्षणेऽनुक्रमेण 'प्रकाशम्' इत्यनेन राजानं प्रति विपरीतं भावं प्रकटयति। तथैव मालविकाग्निमित्रे देव्या जनान्तिकं प्रथमाङ्के गणदासं प्रति पूर्वापरमुभयथापि प्रकाशं विना स्वगतादीनि सम्भवन्ति।[2] स्वगतात् पश्चात् प्रायः प्रकाशमिति वचनं भवति, ततः प्रागपि भवति।[3] किन्तु जनान्तिकमपवारितक च प्रकाशमित्युक्तेः पश्चात् न भवतः।

उपर्युक्तव्याख्यानस्य मूलमधोलिखितासु भारतीयकारिकासु विनिवेशितम्—

**स्वगतम्**

> **हृदयस्य वचो यत्तु तदात्मगतमिष्यते॥** २५.८८
> **सवितर्कं च तद्योज्यं प्रायशो नाटकादिषु।**

---

१. विक्रमोर्वशीयस्य तृतीयाङ्के।

२. जनान्तिकमपवारितकं च प्रकाशं विना मालविकाग्निमित्रस्य द्वितीयाङ्के राज्ञा विदूषकेण च प्रोक्ते। स्वगतं तु प्रकाशं विना स्वप्नवासवदत्ते वासवदत्तायाः ---राजदारिकेति श्रुत्वा भगिनिकास्नेहोऽपि मेऽत्र सम्पद्यते। मुद्राराक्षसे ५.१४, १५।

३. उत्तररामचरितस्य षष्ठांके राम एकविंशं श्लोकं प्रकाशमुक्त्वा द्वाविंशं स्वगतं ब्रवीति। अभिज्ञानशाकुन्तलस्य प्रथमांके नायकः प्रकाशं वदति—मानुषीषु कथं वा स्यादित्यादि। पुनश्च तदनु स्वगतमेव त्मगतं वदति--लब्धावकाशो कोमनोरथः।

**अपवारितकम्**

**निगूढभावसंयुक्तमपवारितकं स्मृतम् ॥ २५.८९**

**जनान्तिकम्**

**कार्यवशादश्रवणं पार्श्वगतैर्यज्जनान्तिकं तत् स्यात् ॥**
**२५.९०**

**इति गूढार्थयुक्तानि वचनानीह नाटके ॥ २५.९१**

एतानि त्रीणि गूढार्थयुक्तानि भवन्ति । अर्थात् रंगस्थेभ्यः पात्रेभ्यः सर्वेभ्यः कतिपयेभ्यो वा गोप्यानि सन्ति ।

एताः कारिका अनुसृत्य स्वगतं तत्र भवति यत्र किंचिद् वचनं तस्मै कथनीयं विद्यते यस्य हृदयं समानं विद्यते । ईदृशः पुरुषो यदि रंगपीठे नास्ति, तर्हि तद्वचनं हृदय एव रक्ष्यते । इदं वचनमात्मगतं स्वगतं वा प्रोच्यते ।[1] स्वभावतो महत्त्वपूर्णमिदं वचनं मन्दस्वरेण प्रोक्तं प्रेक्षकै-गृह्यते । यत्र बाधो, रहस्यं वा गूढं वर्तते तत्र तर्कद्वारेण रहस्यार्थस्य स्पष्टीकरणाय यत् प्रोच्यते तदपवारितकम् । केवलं सहृदयाय सुहृदयायच रहस्यार्थस्यानावरणं भवेत्, न सर्वेषां कृत इत्यस्मै प्रयोजनाय त्रिपताक-करेणानभिप्रेता जनाः तिरस्क्रियन्ते ।

यदि नाम वक्ता स्वप्रयोजनमभिलक्ष्य किमपि रहस्यं रङ्गपीठे स्थितान् कतिपयजनान् तिरस्कृत्यैव वदति तद्ज्जनान्तिकं भवति । रहस्यमिदं कार्यार्थमुपाययोजनाविषयकं भवति । अत एव पृच्छा-प्रधानं बाधक-साधकतत्त्वापेक्षकं च जनान्तिक प्रायो भवति । तदनु अपवारितकेन समाधानं प्रायः प्रस्तूयते ।

श्रोतुर्वा वक्तुर्वा नायकस्य वाभिलाषमयी आशापवारितकेन पूर्यत एवेत्येकं प्रधानं लक्षणमपवारितकस्य ।

मुद्रितपुस्तकेषु प्रायोऽपवारितकानां, जनान्तिकानां च यथास्थानं निवेशनं न कृतम् । तयोः स्थाने स्वगतमेव निर्दिष्टम् । तद्यथोत्तरराम चरितस्य षष्ठाङ्के—

---

१. आत्मन्येव गतं वचनमात्मगतं भवति ।

**अहो प्रश्रययोगेऽपि गतिस्थित्यासनादयः ।**
**साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च** ॥ ६.२३

इत्यारभ्य ( रुदित्वा ) तत्किमेतौ पृच्छामि केनचिदुपायेनेति पर्यन्तमपवारितकम् । किन्तु मुद्रितपुस्तकेषु स्वगतमितिदर्शितम् ।

केवलं कालिदासीयेषु नाटकेषु एतयोर्विनिवेशनं सम्यगवधारितम् । अन्येषु नाटकेषु तयोरभाव एव प्रायो दृश्यते ।



# संस्कृत-नाटकेषु चरित्र-चित्रणकला

नायकस्य चारित्रिकौदात्त्यमवश्यमेव वर्णनीयम्, यतो हि नामौदात्त्येन नायकस्यालम्बनविभावत्वं रसनिष्पत्तौ सार्थकतां याति। विशेषतोऽङ्गिरसस्यालम्बनविभावो भवति फलनायकः, कार्यनायको वा। तस्य चारित्रिकौदात्त्यानुकर्षी महिमा बहुभिरुपायैः कविभिर्नाटकेषूपादीयते। कविर्विविधोपायानवलम्ब्य नायक प्रस्तौतीति तस्य कलोत्कर्षं प्रकटयति।

नायकस्य प्रथमप्रकर्षस्तस्य मनसा, वाचा, कायेन च संकल्पितेन, प्रोक्तेन, सम्पादितेन च कर्मणा क्रमशो भवति। तथाहि

**मनसा**

अभिज्ञान-शाकुन्तले दुष्यन्तस्य प्रजया तादात्म्यं तस्य मानसिकसंकल्पस्योद्घोषेण भवति—किमनेन सन्ततिरस्ति नास्तीति।

> **येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।**
> **स स पापादृते तासां दुष्यन्त इति घुष्यताम्॥**

अन्यच्च द्वितीयाङ्के—

> **किं सीकरैः क्लमविनोदिभिरार्द्रवातैः।** ३.१८

इत्यनेन नायकस्य प्रणयप्रवणता प्रतीयते।

**वाचा**

अभिज्ञानशाकुन्तले दुष्यन्तः कथयति—

> **भवतीनां सुनृतयैव गिरा कृतमातिथ्यम्।**

**शरीरेण**

दुष्यन्तस्तपोवने कण्वावश्रमस्य यज्ञादिधर्माचरणं राक्षसानां विघ्नमपवार्य रक्षतीति तस्योदग्रकर्तव्यपरायणतां व्यनक्ति।

कालनेमिप्रसूतेर्दुर्जयस्योच्छेदनमनन्यसाधारणं कर्म दुष्यन्तस्य पौरुषगुणानतिशाययति। तद्यथा वर्णयति मातलिः—

**सख्युस्ते स किलशतक्रतोरवध्यः ।**
**तस्य त्वं रणशिरसि स्मृतो निहन्ता ॥**

ऊर्जस्वलोऽयं दुष्यन्त इत्यनेन प्रतीयते। नायकस्य वास्तविकं विश्वसनीयं च चारित्रिकवैशद्यं क्वचित् स्वजनानामेकोक्तिद्वारेण प्रस्तूयते। एतेषु लोकेषु कञ्चुकीयस्य वक्तव्यं सविशेषं महत्त्वमर्हति। तद्यथा—कंचुकी--एष देवः

**प्रजाः प्रजाः स्वा इव तन्त्रयित्वा निषेवतेऽशान्तमना विविक्तम् ।**
**यूथानि संचार्य रविप्रतप्तः शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ ५.५**

प्रतीहार्या आत्मगतं निवेदनमप्येतद्विषयकं निष्पक्षं चारित्रिक-मूल्याकनं प्रस्तौति। तद्यथाभिज्ञाने--

अहो धर्मविक्षिता भर्तुः। ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो-विचारयति।

दुष्यन्तस्य वत्सलता स्वगतोक्त्या विशदीकृता। तथा हि—

**अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रेषु सुखं ममैवम् ।**
**कां निर्वृतिं चेतसि तस्य कुर्याद् यस्यायमङ्कात् कृतिनः प्ररूढः ॥**

**आत्मचर्चया**

दुष्यन्त आत्मचर्चासु चारित्रिकादर्शान् विशदीकरोति। तथाहि—

**अहन्यहन्यात्मन एव तावज्ज्ञातुं प्रमादस्खलितं न शक्यम् ।**
**प्रजासु कः केन पथा प्रयातीत्यशेषतः को नु विदांकरोति ॥ ६.२६**

**स्वोक्त्यापि महात्मनाम्**

यद्यपि कस्यचित् साधारणपात्रस्यात्मविषयकोक्तिभिस्तस्य चारित्रिको-त्कर्षोऽसन्दिग्धं न प्रमाण्यते तथापि महतामात्मविषयकोक्तिभिस्तेषां चारित्रिकविशेषो व्यज्यत एव। तद्यथाभिज्ञानशकुन्तले कण्वस्य—

**यास्यत्यद्यशकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया**
**कण्ठः स्तम्भितवाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।**
**वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः**
**पीडयन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ४.६**

दुष्यन्तस्य वत्सलता तस्योक्त्या प्रमाण्यते। तथा हि—स्पृहयामि खलु दुर्ललितायास्मै ( भरताय )

**आलक्ष्यदन्तमुकुलाननिमित्तहासै-**
**रव्यक्तवर्णरमणीयवचःप्रवृत्तीन्।**
**अङ्काश्रय-प्रणयिनस्तनयान् वहन्तो**
**धन्यास्तदङ्गरजसा मलिनीभवन्ति॥ ७.१७**

**राजाश्रितानां प्रशंसावादेन**

वैतालिकादयो नायकं भूयः प्रशंसन्ति। तेषां। वचांसि चारित्रिक-प्रवृत्तिं निर्दिशन्ति। किन्तु गौणत एव प्रकरणेन सम्बद्धत्वात् न तानि भूयः प्रभवन्ति। अन्यच्च ते राजाश्रिता जनाः प्रशंसायै नियुक्ता भवन्ति। अस्मात्कारणादपि तेषां वचांसि चरित्रसमीक्षणदिशि न पारं गमयन्ति। तथापि भूयसी स्पष्टता साक्षात् प्राञ्जलता च तेषां वक्तव्यस्य काव्यार्थ-सर्जने महत्त्वमधिकुरुतः। तद्यथाभिज्ञानस्य—

**प्रथमो वैतालिकः**

**स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः**
**प्रतिदिनमथवा ते वृत्तिरेवं विधैव।**
**अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं**
**शमयति परितापं छायया संश्रितानाम्॥ ५.७**

**द्वितीयो वैतालिकः**

**नियमयसि कुमार्गप्रस्थितानात्तदण्डः**
**प्रशमयसि विवादं कल्पसे रक्षणाय।**
**अतनुषु विभवेषु ज्ञातयः सन्तु नाम**
**त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम्॥ ५.८**

चरित्रचित्रणकला-दृष्ट्या नायकानामात्मविषयकं परविषयकं वा स्वगतम्, एकोक्तिः, आकाशेऽवलोक्य वचनं च सविशेषं महत्त्वमर्हन्ति।

**स्वगतवचनेन**

अभिज्ञानशाकुन्तले दुष्यन्तस्य स्वगतवचनैस्तस्य कामः परिष्कृत इति प्रतीयते। तथाहि—

**असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।**
**सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ १.२०**
**भव हृदय साभिलाषं सम्प्रति सन्देहनिर्णयो जातः ।**
**आशङ्कसे यदग्नि तदिदं स्पर्शक्षमं रत्नम् ॥ १.२५**

प्रतिहार्याः स्वगतवचनं दुष्यन्तस्य चरित्रमुत्थापयति । तद्यथा—अहो धर्मापेक्षिता भर्तुः । ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्या विचारयति । स्वभावत एव स्वगतवचनेनालोचकस्यालोचितस्य च चरित्रचित्रणं सम्यक् प्रकल्प्यते ।

**एकोक्त्या**

दुष्यन्तस्य प्रणयव्यापारप्रवणत्वं तस्याधोविधैकोक्त्या प्रतीयते—

'न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्तयितुम् । मम हि—

**गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।**
**चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ १.३१**

अन्यत्रापि दुष्यन्तस्यैकोक्तयस्तस्य चरितं विशदयन्ति ।[१] अपरेषां पात्राणामप्यैकोक्तिश्चरित्रचित्रण उपयोगितां भजते । अभिज्ञानशाकुन्तलस्य द्वितीयाङ्के विदूषकस्याधोविधैकोक्त्या दुष्यन्तस्य शृङ्गारपरायणता विशदीकृता—

ह्यः किलास्मास्ववहीनेषु तत्र भवतो मृगानुसारेणाश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला ममाधन्यतया दृष्टा । साम्प्रतं नगरगमनस्य मनः कथमपि न करोति । अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत्'

तथैव तृतीयाङ्कस्य विष्कम्भके शिष्यस्यैकोक्तिर्दुष्यन्तस्य वीरोचितौदात्त्यं प्रकर्षयति । तद्यथा—

**का कथा बाणसन्धाने ज्याशब्देनैव दूरतः ।**
**हुंकारेणैव धनुषः स हि विघ्नानपोहति ॥ १.१**

---

१. औत्सुक्यमात्रमवसाययति प्रतिष्ठा । ६.१ इत्यनेन दुष्यन्तस्य प्रजापालनवृत्तिर्व्यज्यते ।

स्वगतेन समानैवैकोक्तिः सफला चरित्रचित्रणदिशि अनुत्तमैव ।

**महतां सम्भावनया**

महद्भिः सच्चरित्राणामेव सम्भावना क्रियते। शकुन्तलायाः चारित्रिकौदात्त्यं वानस्पतिकवनदेवताभिः तस्यै क्षौमलाक्षारसाभरणादिदानेन कल्पितम्। षष्ठाङ्के इन्द्रस्य सम्भावनया दुष्यन्तोऽनुगृहीतोऽस्ति।[1]

सहायानन्तरं दुष्यन्तस्येन्द्रेण सम्भावनमधोविधं निर्दशितम्—

राजा—मातले, मा मैवम्। स खलु मनोरथानामप्यभूमिर्विसर्जनावसर-सत्कारः। मम हि दिवौकसां समक्षमर्धासनोपवेशितस्य।

**अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन।**
**आमृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला हरिणा पिनद्धा॥ ७.२**

**शिष्टाचारेण**

दुष्यन्तस्य चरित्रं तस्य शिष्टाचारेण भूयो व्यज्यते। तथा हि प्रथमाङ्के—

दुष्यन्तः—सूत, विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम।

द्वितीयाङ्के ऋषिकुमारयोः सत्काराय स राजासनादुत्तिष्ठति। तयोः प्रस्थानकाले पुनः प्रणमति च। प्रञ्चमाङ्के पुनः तपस्विनां सत्काराय स कञ्चुकिनं ब्रूते—अमुना (सोमरातेन) आश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हति। अहमप्यत्र तपस्विदर्शनोचिते प्रदेशे स्थितः प्रतिपालयामि। पञ्चमाङ्के पुनः—

राजा—अभिवादये वः ( कण्वशिष्यादयः )

शिष्यौ—इष्टेन युज्यस्व।

राजा—अपि निर्विघ्नतपसो मुनयः।

शिष्यौ—कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि। इत्यादि।

५.१४

---

१. राजा—अनुगृहीतोऽहमनया मघवतः सम्भावनया।

अपि च शिष्टाचारेण कार्याकार्यविमर्शनाय पात्राणामपेक्षितः परस्पराश्वासः समुत्पद्यते। सप्तमाङ्के मारीचाश्रमस्य दर्शनमवश्यमेव करणीयमिति दुष्यन्तो निवेदयति—तेव ह्यनतिक्रमणीयानि श्रेयांसि। प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि।

शिष्टाचार-विषयकमादर्श दुष्यन्तः समुत्थापयत्यधोवचनेन—

**'अनार्यः परदारपृच्छाव्यवहारः'** इति

**साधन-द्वारेण**

अप्रत्यक्षरूपेण नायकादीनां साधनोत्कर्षस्तस्य महिमानं प्रकटयति। तथा हि—

**क्व च निशित-निपाता वज्रसाराः शरास्ते ॥ १.१०**
**आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥ १.११**

अत्र शराः, शस्त्रं च नायकस्य साधनत्वेन वज्रसार-विशेषण, आर्तत्राणहेतुभूतत्वेन च दुष्यन्तं विभावदृष्ट्या विशेषयन्ति।

तथैव राज्ञो भुजविशेषेण—

**ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति। १.१३**

चतुर्थाङ्केऽशरीरिणी वाणी नायकस्य तेजो भुवो भूतये इति—

**दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः।**
**अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ४.४**

**सम्बन्धेन**

महतां सम्बन्धेन क्वचिच्चारित्रिकसम्पत्तिः प्रकटति। अभिज्ञानशाकुन्तलस्य द्वितीयाङ्के द्वितीय ऋषिकुमारो दुष्यन्तं विशेषयति—अयं स बलभित्सखो दुष्यन्त इति। अत्र दुष्यन्तो नास्ति इन्द्रसखोऽपितु बलभित्सखः। अनेन सख्येन दुष्यन्तस्य वीरोचितपराक्रमशालिता प्रशस्यते। स एव ऋषिकुमारः पुनः कथयति—

**आशंसन्ते सुरयुवतयो बद्धवैरा हि दैत्यै-**
**रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ २.१६**

कवीनां दर्शने पारिवारिकसदस्या एव लतावृक्षपशु पक्षिणः[1]। तेषां सम्बन्धो नायकस्य चारित्रिकपेशलत्तां विशदयति। तद्यथाभिज्ञान-शाकुन्तले—

कण्वः —भो भोः सन्निहितास्तपोवनतरवः।
सेयं यातिशकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ४.९

( कोकिलरवं सूचयित्वा )

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः।
परभृतविरुतं कलं यथा प्रतिवचनीकृतमेभिरीदृशम् ॥ ४.१०

( आकाशे )

रम्यान्तरः कमलिनीहरितैः सरोभि-
च्छायाद्रुमैर्नियमितार्कमयूखतापः
भूयात् कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ ४.११

प्रियंवदा समर्थयति—

न केवलं तपोवनविरहकातरा सख्येव, त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत्समवस्था दृश्यते।

उद्गलित दर्भकवला मृग्यः परित्यक्तनर्तनमयूराः।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥ ४.१२

शकुन्तला ( स्मृत्वा )—तात, लताभगिनीं वनज्योत्स्नां तावदा-मन्त्रयिष्ये।

काश्यपः —अवैमि ते तस्यां सोदर-स्नेहम्। इयं सा दक्षिणेन।

शकुन्तला—( लतामुपेत्यालिङ्ग्य ) वनज्योत्स्ने चूतसंगतापि मां प्रत्यालिङ्ग इतो गताभिः शाखाबाहाभिः। अद्यप्रभृति दूरपरिवर्तिनी भविष्यामि।

---

१. अस्मिन् प्रकरणे गौतम्या शकुन्तलां प्रति साधु प्रोक्तम्—ज्ञातिजनस्निग्धा-भिरनुज्ञातासि तपोवनदेवताभिः। प्रणम भगवतीः इत्यनेन पारिवारिक-सम्बन्धो व्यक्तः।

अपरत्र उटजपर्यन्तचारिणीगर्भमन्थरामृगवधूप्रकरणम्, पुत्रकृतक-मृगशावक-प्रकरणं च शकुन्तलाया निसर्गोत्कर्ष-प्रणयसम्भावनं व्यक्तः ।

निसर्गसम्बन्धेन नैसर्गिक-गुणातिशायिनी चारित्रिकसम्पत्तिर्विजृम्भते ।

सर्वेष्वात्मनो दर्शनमेव सर्वोत्कृष्टश्चारित्रिकोदयः । सोऽयं दृश्यते दुष्यन्तस्य चरित्रचित्रणे । स धनमित्रस्य विपत्तिं श्रुत्वा तस्य सन्तानाभावं च परिज्ञायात्मानं लोकबन्धुरूपेणोच्छ्रयते । स कथयति—

**येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।**
**स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥** ६.२३ ॥

पितृभिः सम्बन्धेन दुष्यन्तस्य धर्मपरायणता व्यज्यते । तद्यथा—

**अस्मात् परं वत यथाश्रुति सम्भृतानि**
**को नः कुले निवपनानि नियच्छतीति ।**
**नूनं प्रसूतिविकलेन मया प्रसिक्तं**
**धौताश्रुसेकमुदकं पितरः पिबन्ति ॥** ६.२५ ॥

**वंशोल्लेखेन**

कुलगौरवानुरूपमेवार्य जन आचरतीति वंशोल्लेखस्य महत्त्वं प्रतिपादयति । दुष्यन्तस्य चारित्रिक-महिमानं प्रदर्शयितुं कालिदासस्तस्य पुरुवंशमितिहास-प्रसिद्धमवदानेन प्रगुणयत्यधोविधम्—

वैखानसः —**सदृशमेतत् पुरुवंश-प्रदीपस्य**
**जन्म यस्य पोरवंशे युक्तरूपमिदं तव ।** १.१२

शकुन्तलायाश्चरित्रचित्रणेऽपि कविस्तस्या उत्पत्तिकथां पित्रोरुल्लेखेन समर्थयति । तथा हि—

दुष्यन्तः —परस्ताज्ज्ञायत एव । सर्वथा अप्सरःसम्भवैषा ।

**मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः ।**
**न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥** १.२३

द्वितीयेऽङ्केऽपि पुनः स चर्चति – स्वयं दुष्यन्तोऽपि स्वकीयं पौरवत्वेन वैशिष्ट्यं विपुलयति । तथा हि—

न च परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते।
सुरयुवतिसम्भवं किल मुनेरपत्यं तदुज्झिताधिगतम्।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिका-कुसुमम्॥ २.९

विनिपातः पौरवैर्लभ्यत इति अश्रद्धेयमेतत्।

षष्ठाङ्के—ममाप्यन्ते पुरुवंशश्रीरेवं वृत्ता।

कालिदासो हि सततमानुवंशिकमौदात्त्यमनुमनुते। तस्यर्षिकुमारकौ दुष्यन्तं प्रबोधयन्ति—

अनुपकारिणि पूर्वेषां युक्तरूपमिदं त्वयि।
आपन्नाभयसत्त्वेषु दीक्षिताः खलु पौरवाः॥ २.१७

तृतीयाङ्के—प्रियंवदा कथयति—यस्मिन् बद्धभावैषा स ललामभूतः पौरवाणाम्।

दुष्यन्तस्तापस्यौ भरतविषये पृच्छति—

अथ कोऽस्य व्यपदेश इति

ताप०—पुरुवंशः।

राजा—(आत्मगतम्)—कथमेकान्वयो मम। अस्त्येतत् पौरवाणां कुलव्रतम्—

भवनेषु रसाधिकेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम्।
नियतैकयतिव्रतानि पश्चात्
तरुमूलानि गृहीभवन्ति तेषाम्॥ ७.२०

**पौनःपुन्येन निर्वर्णनेन**

नायकस्य काचित्प्रवृत्तिस्तस्याः पौनःपुन्येन निर्वर्णनेन गाम्भीर्यं प्रतिपद्यते। तथा हि दुष्यन्तस्य शकुन्तलाविषयक-प्रणय-प्रवृत्तिः प्रथमाङ्के प्ररोचितैव। द्वितीयाङ्कस्यारम्भ एव विदूषक एकोक्त्या तां प्रगाढां प्रवृत्तिं स्पष्टं वर्णयति। पुनश्च द्वितीयाङ्के स्वयमेव दुष्यन्तः स्वकीयमभिनवप्रणयव्यापारं विदूषकं प्रति ब्रूते।[1] तथैव तृतीयाङ्कस्या-

१. राजा—माधव्य, अनवाप्तचक्षुःफलोऽसि येन त्वया द्रष्टव्यानां परं न दृष्टम् इत्यारभ्य सखे, तपस्विभिः कैश्चित् परिज्ञातोऽस्मि। चिन्तय तावत् केनापदेशेन सकृदप्याश्रमे गच्छाम।

रम्भ एकाकी दुष्यन्तः (मदनबाधां निरूप्य) भगवन् कुसुमायुध, त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजनसार्थमित्यारभ्याङ्कान्तं यावत् । पुनरपि षष्ठाङ्के विदूषकेण सह तमेव प्रणयव्यापारं भृशं विशदयति[१] इत्यनेन महतो साधनसम्पत्तिरालम्बनविभावस्योदग्रतया समुपस्थापिता । शृङ्गाररसस्याङ्गित्वं प्रभावयितुमेव एतत्सर्वं कल्पितम् । षष्ठेऽङ्के दुष्यन्तः पुनः शकुन्तलाप्रणयाविष्टो वर्तते स । कथयति—

**प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।**
**अनुशयदुःखायेदं हतहृदयं सम्प्रति विबुद्धम् ॥** ६.७

षष्ठाङ्कस्य पूर्वार्धं शकुन्तलायाः प्राक्तनप्रणयस्योद्गारैः निर्भरम् । तद्यथा—

**एकैकमत्रदिवसे मदीयम्**—इत्यादि ६.१२
**कथं नु तं बन्धुरकोमलाङ्गुलिम्**—इत्यादि ६.१३

अकारणपरित्यागानुशयदग्धहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन ।

**स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः ॥**
इत्यादि ६.१५

धिङ् मामुपस्थितश्रेयोऽवमानिनम्—
**साक्षात् प्रियामुपगतामपहाय पूर्वम्**—इत्यादि ६.१६
**अक्लिष्टबालतरुपल्लवलोभनीयम**—इत्यादि ६.२०

**उपलब्ध्या**

भूतकाले वर्त्तमाने वा नायकेनाधिगतोपलब्धयश्चरित्र-चित्रणाय वर्ण्यन्ते । अभिज्ञानशाकुन्तले शार्ङ्गरवः सकेतयति दुष्यन्तस्योपलब्धिम्—

**न कश्चिद् वर्णानामपथमपकृष्टोऽपि भजते ।** ५.१०

सप्तमाङ्के मातलिर्दुष्यन्तं विशेषयति—

---

१. राजा–वयस्य ।
**स्वप्नो नु माया नु मतिभ्रमो नु क्लृप्तं नु तावत् फलमेव पुण्यम् ।**
**असन्निवृत्त्यै तदतीतमेव मनोरथानामतटप्रपाताः ॥** ६.१०
इत्यारभ्य दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन'
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्तेति यावत् ।

**सुखपरस्य हरेरुभयं कृतं**
**त्रिदिवमुद्धृतदानवकण्टकम् ।**
**तव शरैरधुना नतपर्वभिः**
**पुरुषकेसरिणश्च पुरानखैः ॥ ७.३**

**नियोगेन**

वीरोचितनियोगेन महतामूर्जस्विता व्यज्यते। अभिज्ञानशाकुन्तले मातलिर्दुष्यन्तं दानवगणस्य प्रशमनायेन्द्रसन्देशं श्रावयति—

**सख्युस्ते स किल शतक्रतोरवध्यः**
**तस्य त्वं रणशिरसि स्मृतो निहन्ता ।**
**उच्छेत्तुं प्रभवति यन्न सप्तसप्तिः**
**तन्नैशं तिमिरमपाकरोति चन्द्रः ॥ ६.३०**

मातलिस्तदेव पुनः समर्थयति—

**प्रथमोपकृतं मरुत्वतः प्रतिपत्त्या लघु मन्यते भवान् ।**
**गणयत्यवदानविस्मितो भवतः सोऽपि न सत्क्रियागुणान् ॥ ७.१**

**अनन्यसाधारणाभिज्ञानेन**

नायकस्योदात्तविचारविमर्शादिकं तस्यासाधारणाभिज्ञानेन लक्ष्यते। तथा हि—

राजा—(समन्तादवलोक्य) सूत, अकथितोऽपि ज्ञायत एव यथा यमाभोगस्तपोवनस्येति।

सूतः—कथमिव ?

राजा—किं न पश्यति भवान् ? इह हि—

**नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः**
**प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।**
**विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-**
**स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥ १.१४**

दुष्यन्तस्य सूक्ष्मेक्षणाभिज्ञानादीनामधोलिखितैः श्लोकैरपराण्युदाहरणानि प्रतीयन्ते—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ १.१८

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥ १.१९

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीम्—इत्यादि १.२१

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणाद्—इत्यादि १.२७

वाचं न मिश्रयति यद्यपि मद्वचोभिः । १.२८

तृतीयाङ्के नायकः शकुन्तलामदृष्ट्वापि तया सनाथायमानो लता-मण्डप इति संवेत्ति । तथा हि—

(परिक्रम्यावलोक्य च) अस्मिन् वेतसपरिक्षिप्ते लतामण्डपे भवितव्यं तया । तथा हि

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपंक्तिर्दृश्यते अभिनवा ॥ ३.६

शकुन्तला मह्यं स्पृहयतीति सम्यगनुमीयते दुष्यन्तेन । तथा हि—

अभिमुखे मयि संहृतमीक्षणं हसितमन्यनिमित्त-कृतोदयम् ।
विनयवारितवृत्तिरतस्तया न मदनो विवृतो न च संवृतः ॥ २.१२

पञ्चमाङ्के पुनः दुष्यन्तस्याभिज्ञानोत्कर्षो निदर्शितोऽधोविधम्—

राजा—(शकुन्तलां दृष्ट्वा) अथात्रभवती—

का स्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥ ५.१३

षष्ठाङ्के दुष्यन्तो नैसर्गिकप्रणयाचारं सूक्ष्मतया पश्यति । तद्यथा—

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालंबितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ ६.१७

**कृतं न कर्णार्पितबन्धनं सखे शिरीषमागण्डविलम्बिकेसरम् ।**
**न वा शरच्चन्द्रमरीचिकोमलं मृणालसूत्रं रचितं स्तनान्तरे ॥ ६.१८**

पावनस्थलीषु किं किं पश्यति दुष्यन्त इति तस्यासाधारणं पुण्य-प्रकर्षं व्यनक्ति। सप्तमाङ्केऽभिज्ञानशाकुन्तलस्य स प्रथयति ऋषीणां तपोभूमिम्—

**'प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने'**—इत्यादि ७.१२

परिपूतदृशैव द्रष्टुं शक्यते। सप्तमाङ्के दुष्यन्तो भरतं बालमृगेन्द्रेण सह सूक्ष्मदृशा पश्यति—

**अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।**
**प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ ७.१४**

अन्यच्च—

**प्रलोभ्य वस्तुप्रणयप्रसारितो विभाति जालग्रथिताङ्गुलिः करः ।**
**अलक्ष्यपत्रान्तरमिद्धरागया नवोषसा भिन्नमिवैकपङ्कजम् ॥ ७.१६**

**सूक्ति-सम्पत्त्या**

नायकस्य चरित्रं यथास्थानं प्रोक्ताभिः सूक्तिभिर्भृशं विशदीक्रियते : तथा हि शाकुन्तले दुष्यन्तस्य सूक्तिभिः —

**शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः ।**
**स्पर्शानुकूला अपि सूर्यकान्तास्तेजोऽन्यतेजोऽभिभवाद् वमन्ति ॥ २.७**

**अलङ्कार-योजनया**

सूतो दुष्यन्तं धनुर्धरं वर्णयति—

**मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनम् ॥**

अत्र पिनाकी उपमान उपमेयस्य दुष्यन्तस्य महिमानं द्विगुणयति वीररसनिष्पत्तये।

**चरित्रचित्रणेऽग्रहणीयानि**

विषमस्थितौ पतितानां पात्राणां वचांसि चरित्रचित्रणे नोल्लेखनीयानि भवन्ति। अभिज्ञानशाकुन्तलस्य पञ्चमाङ्के शापवशाद् दुष्यन्तः शकुन्तलां पत्नीरूपेण ग्रहीतुं नोत्सहते। शापवृत्तमजानन्तो जनाः परस्पर-

माक्षिपन्ति। न तेषामपकृष्टा आक्षेपाश्चरित्र-समीक्षार्थं प्रमाणं प्रस्तु-वन्ति। तद्यथा—

शाङ्र्गरवो दुष्यन्त-विषये कथयति।

**मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु।** ५.१८
**पात्रीकृतो दस्युरिवासि येन।** ५.२०

दुष्यन्तः शकुन्तलामाक्षिपति—

**व्यपदेशमाविलयितुं समीहसे जनमिमं च पातयितुम्।**
**कूलंकषेव सिन्धुः प्रसन्नमम्भः तटतरुं च॥** ५.२१

पुनश्चगौतमी विषये

इदं तत् प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते। स शकुन्तलां मिथ्या-वादिनी असि' इत्याक्षिपति—

शकुन्तला—(सरोषम्) अनार्य, आत्मनो हृदयानुमानेन पश्यसि। क इदानीमन्यो धर्मकञ्चुकप्रवेशिनः तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रति-पत्स्यते। सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि, याहमस्य पुरुवंश-प्रत्ययेन मुखमधोर्हृदयविषस्य हस्ताभ्याशमुपगता। कथमनेन कितवेन विप्रलब्धास्मि।

शार्ङ्गरवः शकुन्तलामाक्षिपति सरोषम्—

**किं पुरोभागे, स्वातन्त्र्यमवलम्बसे।**

# आमन्त्रणीयानां वैचित्र्यम्

'नाट्यमेव रसाः। रससमुदायो हि नाट्यम्। रस एव नाट्यम्। चित्तवृत्तिप्रधानं चेदं नाट्यम्। रसाश्च नाट्यस्य प्राणाः।' इति नाट्यशास्त्रीयं मतमभिनवगुप्तेन प्रख्यापितम्। एतादृशे नाट्यप्रयोगेऽचेतनादीनां पशुपक्षिलतावृक्षादीनां चामन्त्रणेनास्ति कश्चिदपूर्व एव भावगाम्भीर्यनिर्भेद इति सहृदय-हृदयमेव प्रमाणम्।

रूपकेषु साधारणतः संवाद उत्तरप्रत्युत्तरापेक्षया समक्षभूतेष् वागोवत्सु लोकेषु प्रयोज्यते। एतस्माद् भिन्न एव स संवादो विलसति नातिन्यूनं यस्मिन्—

(१) उत्तर-प्रत्युत्तरापेक्षा नास्ति।[1]

(२) आमन्त्रणीयो जनः समक्षं नास्ति, मृतत्वाद् दूरस्थत्वाद्वा।

(३) पात्रत्वयोग्यताविरहिता वा वाणीहीना वामन्त्रणीयाः सन्ति।

(४) अचेतनाः सम्भाव्यन्ते।

## पशु-पक्षिणः

अभिज्ञानशाकुन्तलस्य चतुर्थेऽङ्के नेपथ्यात् काचिच्छकुन्तलायाः सखी तां सन्दिशति व्याजेन—

चक्रवाकवधूः, आमन्त्रयस्व सहचरम्। उपस्थिता रजनी। अत्र चक्रवाकवधूव्याजेन शकुन्तलैव सन्दिश्यते। तेन शकुन्तले प्रियमापृच्छस्वेति प्रकृतो गम्योऽर्थः।[2]

---

१. उत्तरप्रत्युत्तरापेक्षा तु चूलिकायामाकाशवाण्यां नेपथ्योक्तौ, क्वचिदपवारितके, स्वगते, एकोक्तावपि च न स्यात्। किन्त्वेतेषु आमन्त्रणीय-वैचित्र्यं नास्ति। प्रकरणेऽस्मिन् त एव संवादा उद्दिष्टा येषु आमन्त्रणीयस्यासामर्थ्यविशिष्टवैचित्र्यादेवोत्तरप्रत्युत्तरं न प्रवर्तते।

२. इयमप्रस्तुतप्रशंसा। तद्द्वारेणान्योक्तिसूचकं पताकास्थानकं विलसति।

प्रथमेऽङ्के पुनरस्य नाटकस्य मधुकरः सस्पृहं वर्णितः। यथा,

**चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं**
**रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।**
**करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं**
**वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती॥ १.२१**

श्लोकेऽस्मिन् मधुकरस्तु नायक एव। किन्तु न स प्रत्युत्तरयति वाणीरहितत्वात्।[1]

पञ्चमाङ्कस्यारम्भ एव हंसपदिका मधुकरस्योपालम्भव्याजेन नायकं पूर्वप्रणयान् स्मारयति। तद्यथा—

**अहिणवमहुलोलुवो भव तह परिचुम्बिअ चूअमञ्जरिं।**
**कमलवसइमेत्तणिव्वुदो महुअर विम्हरिओ सि णं कहं॥ ५.१**

नायं मधुकरोऽग्रेऽपि विस्मृतः! षष्ठाङ्केऽनुत्तममेव दुष्यन्तस्य मधुकरं प्रति सस्पर्धं वचः—

राजा—युज्यते। अयि भोः कुसुमलताप्रियातिथे, किमत्र परिपतनखेदमनुभवसि?

**एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता।**
**प्रतिपालयति मधुकरी न खलु मधु त्वया विना पिबति॥**

एवं भोः, न मे शासने तिष्ठसि? श्रूयतां तर्हि सम्प्रति—

**अक्लिष्टबालतरुपल्लवलोभनीयं**
**पीतं मया सदयमेव रतोत्सवेषु।**
**बिम्बाधरं स्पृशसि चेद् भ्रमर प्रियाया-**
**स्त्वां कारयामि कमलोदरबन्धनस्थम्॥ ६.२०**

शकुन्तला कण्वाश्रमात् प्रस्थानकाले मृगपोतकं सम्भावयति—वत्स किं सहवासपरित्यागिनी मामनुसरसि? अचिरप्रसूतया जनन्या विना वर्धितोऽसि। इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति। निवर्तस्व वत्स निवर्तस्व।

१. शकुन्तलापि तत्रैव कथयति—कथमितोऽप्यागच्छसि? हला, परित्रायेथां मामनेन दुर्विनीतेन दुष्टमधुकरेण।

अभिज्ञानशाकुन्तले भरतः सिंहशावकमामन्त्रयति जृम्भस्व, रे सिंह-शावक जृम्भस्व। दन्तांस्ते गणयिष्यामि।

विदूषको स्वानुरूपं पिङ्गलवानरं मालविकाग्निमित्रेऽधोविधं सम्भावयति--

साधु पिङ्गलवानर साधु। परित्रातस्त्वया स्वपक्षः।

उत्तररामचरितस्य तृतीयाङ्के रामो युवानं गजराजं सम्भावयति--

विजयतामायुष्मानिति।

सीता--अवियुक्त इदानी दीर्घायुरनया सौम्यदर्शनया भवतु।

रामः --सखि वासन्तिके, पश्य पश्य। कान्तानुवृत्तिचातुर्यमपि शिक्षितं वत्सेन।

तथैव गिरिमयूरः सम्भावितः। तद्यथा--

वासन्ती--इतोऽपि देवः पश्यतु।

**अनुदिवसमवर्धयत् प्रिया ते यमचिरनिर्यतमुग्धलोलबर्हम्।**
**मणिमुकुट इवोच्छ्रितः कदम्बे नदति स एष वधूसखः शिखण्डी॥**

—उ० रा० ३.१८

रामः —मोदस्व वत्स। वयमद्य वर्धामहे।

**भ्रमिषु कृतपुटान्तमण्डलावृत्ति चक्षु**
**प्रचलितचटुलभ्रूताण्डवैर्मण्डयन्त्या।**
**करकिसलयतालैर्मुग्धया नर्त्यमानं**
**सुतमिव मनसा त्वां वत्सलेन स्मरामि॥**—उ० रा० ३.१९

हन्त तिर्यञ्चोऽपि परिचयमनुरुन्धन्ते

**कतिपयकुसुमोद्गमः कदम्बः**
**प्रियतमया परिवर्धितोऽयमासीत्।**
**स्मरति गिरिमयूर एष देव्याः**
**स्वजन इवात्र यतः प्रमोदमेति॥**—उ० रा० ३.२०

भवभूतिरेतस्याः सम्भावनायाः कारणमपि वर्णयति यत् ते पशु-पक्षिणः रामं सम्भावयन्ति। तद्यथा—

**ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः**
**स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः।**
**कलमविरलं रज्यत्कण्ठाः क्वणन्तु शकुन्तयः**
**पुनरिदमयं देवो रामः स्वयं वनमागतः॥**—उ० रा० ३.२४

## लतावृक्षादयः

चतुर्थेऽङ्के कण्वाश्रमात् प्रस्थानकाले शकुन्तला पितरं निवेदयति—तात, लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये।

सा लतामुपेत्यालिंग्य कथयति च—वनज्योत्स्ने, चूतसंगतापि मां प्रत्यालिंग इतोगताभिः शाखाबाहाभिः अद्य प्रभृति दूरपरिवर्तिनी भविष्यामि।

कण्वोऽपि शकुन्तलां नवमालिकां च समं सम्मानयति कथयति च—

**संकल्पितं प्रथममेव मया त्वदर्थे**
**भर्तारमात्मसदृशं सुकृतैर्गता त्वम्।**
**चूतेन संश्रितवती नवमालिकेय-**
**मस्यामहं त्वयि च सम्प्रति वीतचिन्तः॥ ४.१३**

प्रणयपथे लतानां सहायेनोपकृता नायिकास्ताः सम्भावयन्ति। विक्रमोर्वशीये नायिका लतां कथयति—

**प्रियमाचरितं लते त्वया मे गमनेऽस्याः क्षणविघ्नमाचरन्त्या।**
**यदियं पुनरप्यपाङ्गनेत्रा परिवृत्तार्धमुखी मया हि दृष्टा॥ १.१८**

अभिज्ञानशाकुन्तले नायिका शकुन्तला चतुर्थस्याङ्कस्यान्ते कथयति-लतावलय सन्तापहारक, आमन्त्रये त्वां भूयोऽपि परिभोगाय।

अत्र लतावलयस्यामन्त्रणं किंचिदपूर्वमेव भावं व्यनक्ति, किन्तु तद्द्वारेण लतावलये सन्तापहारको नायक एवामन्त्रित इति ध्वनिः सहृदयमनोऽनुरञ्जयतीति भूयिष्ठमभिप्रेतं कवेः। राघवभट्टो विवृणोति—अथ च लतागृह-सन्तापहारकेत्येकयोक्त्या दुष्यन्तलतागृहयोः सम्बोधनम्। वलयशब्देनाच्छादकत्वसाधर्म्येण गृहं लक्षयता गुप्ततरत्वमनोहरत्वादि ध्वनितम्। आमन्त्रये त्वा भूयोऽपि परिभोगाय सुखाय सम्भोगाय च। अनेन मनोरथो नाम भूषणमुपक्षिप्तम्।[१]

कण्वस्तपोवनतरूणामनुज्ञानं शकुन्तलाप्रस्थानाय कामयते। प्रियंवदा तपोवनस्य शकुन्तलायाः प्रस्थानकाले समवस्थां पश्यति—

**उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तनमयूराः।**
**अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः॥ ४.१२**

---

१. मनोरथस्तु व्याजेन विवक्षितनिवेदनम्।

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ४.९

षष्ठाङ्कात्पूर्वं द्वितीये विष्कम्भके चेटी परभृतिका ऋतुमङ्गल इति चूतकोरकमामन्त्रयति—

आताम्र हरितपाण्डुर जीवितसर्वं वसन्तमासस्य ।
दृष्टोऽसि चूतकोरक ऋतुमंगल त्वां प्रसादयामि ॥ ६.२

द्वितीया चेटी मधुकरिका च गायति—

त्वमसि मया चूताङ्कुर दत्तः कामाय गृहीतचापाय ।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव ॥

मालविकाग्निमित्रेऽशोको राज्ञामन्त्र्यते—

अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन सम्भावितः ।
अशोक यदि सद्य एव मुकुलैर्न सम्पत्स्यसे
वृथा वहसि दोहदं ललितकामिसाधारणम् ॥ ३.१७

अन्यच्च नायकवचनमशोकं प्रति—

नायं देव्या भाजनत्वं न नेयः
सत्काराणामीदृशानामशोकः ।
यः सावज्ञो माधवश्रीनियोगे
पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥—माल० ५.८

उत्तररामचरिते रामः पञ्चवटीं सम्भावयति द्वितीयाङ्के—

रामः—भगवति पंचवटि, गुरुजनादेशोपरोधात् क्षणं क्षम्यतामतिक्रमो रामस्य ।

## देवाः

देवाः साधारणतो जनैः सह संवादं न कुर्वन्ति किन्तु विपत्तिग्रस्ता जनास्तानामन्त्रयन्ति । तद्यथाभिज्ञानशाकुन्तले शकुन्तला दुष्यन्तेन प्रत्याख्याता पृथ्वीदेवीमेवं वदति—

भगवति वसुधे देहि मे विवरम् ।

वेणीसंहारे षष्ठेऽङ्के चेटी लोकपालान् समाह्वयति—हा भगवन्तो-लोकपालाः, परित्रायध्वं परित्रायध्वम्—इत्यादि ।

मृच्छकटिक इन्द्र एव सम्बोधितः ----

**किं ते ह्यहं पूर्वरतिप्रसक्ता यत्त्वं नदस्यम्बुदसिंहनादैः ।**
**न युक्तमेतत् प्रियकांक्षिताया मार्गं निरोद्धुं मम वर्षपातैः ॥ ५.२९**
**यद्वदहल्याहेतोर्मृषा वदसि शक्र गौतमोऽस्मीति ।**
**तद्वन्ममापि दुःखं निरपेक्ष निवार्यतां जलदः ॥ ५.३०**
**गर्ज वा वर्ष वा शक्र मुञ्च वा शतशोऽशनिम् । ५.३१**

## अनुपस्थिता लोकाः

उत्तररामचरिते सीता पञ्चत्वं गतं जटायुं सम्बोधयति तृतीयाङ्के—हा तात जटायो, शून्यं त्वया विनेदं जनस्थानम् ।

वेणीसंहारस्य तृतीयेऽङ्के द्रोणे मृते तस्य शोकाविष्टः पुत्रः कथयति हा तात, हा सुत वत्सल, हा लोकत्रयैकधनुर्धर, हा जामदग्न्यास्त्र-सर्वस्वप्रतिग्रहप्रणयिन् क्वासि । प्रयच्छ मे प्रतिवचनम् इति ।[1] अश्वत्थामा पुनः पुनः स्वर्गतं पितरं सम्बोधयति ।

तृतीयेऽङ्केऽश्वत्थामा दूरस्थं श्रवणपरिधेर्बाह्यम् युधिष्ठिरं 'आकाशे' इति विधिना सम्बोधयति—'युधिष्ठिर, युधिष्ठिर'

**आ जन्मनो न वितथं भवता किलोक्तं**
**न द्वेष्टि यज्जनमतस्त्वमजातशत्रुः ।**
**ताते गुरौ द्विजवरे मम भाग्यदोषात्**
**सर्वं तदेकपद एव कथं निरस्तम् ॥ ३.१५**

पुनः स दूरस्थान् युधिष्ठिरमर्जुनं सात्यकिं वृकोदरं, माधवं च सम्बोधयति—

युक्तं नाम भवतां सुरासुरमनुजलोकैकधनुर्धरस्य द्विजन्मनः इत्यादि ।

---

१. कर्णे मृते दुर्योधनस्तं सम्बोधयति—
अयि कर्ण कर्णसुखदां प्रयच्छ मे
गिरमुद्गिरन्निव मुदं मयि स्थिराम् । इत्यादि ५.१४

युधिष्ठिरो वेणीसंहारस्य षष्ठेऽङ्के शृणोति यद् भीमो हतः। तदा स दूरस्थां श्रवणपरिधेर्बाह्या मातरं पृथामामन्त्रयति[1]—

अम्ब पृथे, श्रुतोऽयं तव पुत्रस्य समुदाचारो मामेकमनाथं विलपन्तमुत्सृज्य क्वापि गतः। तथैव स दूरस्थं बलराममामन्त्रयति—

भगवन् कामपाल, कृष्णाग्रज, सुभद्राभ्रातः

**ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो**
**रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन।**
**तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः**
**कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम्॥**

स मृतं भीमं सहतर्पणाय समाह्वयति—

**एकं क्षणं विरम वत्स पिपासितोऽपि**
**पातुं त्वया सह जवादयमागतोऽस्मि॥ ६.३०**

तत्रैव द्रौपदी—नाथ भीमसेन परिजनोपनीतमुदकं स्वर्गतस्य ते पादोदकं भवतु।

युधिष्ठिरः—फाल्गुनाग्रज।

**असमाप्तप्रतिज्ञेऽपि याते त्वयि महाभुजे।**
**मुक्तकश्यैव दत्तस्ते प्रियया सलिलाञ्जलिः॥ ६.३३**

तत्रैव कञ्चुकी अनुपस्थिता कुन्तीमामन्त्रयति—

**भ्रातुस्ते तनयेन शौरिगुरुणा श्यालेन गाण्डीविन-**
**स्तस्यैवाखिलधार्तराष्ट्रनलिनीव्यालोलने दन्तिनः।**
**आचार्येण वृकोदरस्य हलिनोन्मत्तेन मत्तेन वा**
**दग्धं त्वत्सुतकाननं ननु मही यस्याश्रयाच्छीतला॥ ६.२७**

वेणीसंहारस्य षष्ठेऽङ्के 'भीमो हतः' इति श्रुत्वापि युधिष्ठिरस्तं पुनः-पुनः सम्बोधयति—

---

१. नायका दूरस्थान् जनान् प्रायशः दूतद्वारा सन्देशप्रेषणेन सम्बोधयन्ति। यथा वेणीसंहारे षष्ठेऽङ्के द्रौपदी—हला बुद्धिमतिके, मम मम वचनेन प्रियसखीं सुभद्राम्—वत्साया उत्तरायाश्चतुर्थो मासः प्रतिपन्नस्य गर्भस्य। तदेनं कुलप्रतिष्ठापकं सावधानं रक्षेत्यादि।

**निर्लज्जस्य दुरोदरव्यसनिनो वत्स त्वया सा तदा**
**भक्त्या मे समृदद्विपायुतबलेनाङ्गीकृता दासता ।**
**किं नामापकृतं मया तदधिकं त्वय्यद्य यद्गम्यते**
**त्यक्त्वा नाथमबान्धवं सपदि मां प्रीतिः क्व ते साधुना ॥ ६.१८**

तत्रैव द्रौपद्यपि भीमसेनमामन्त्रयति—(आकाशे दत्तदृष्टिः) नाथ भीमसेन, त्वया किल मे केशाः संयमितव्याः । न युक्तं वीरस्य क्षत्रियस्य प्रतिज्ञातं शिथिलयितुम् । तत् प्रतिपालय मा यावदुपसर्पामि ।

प्रायः शोकाविष्टा जना एवानुपस्थितान् दूरस्थतान् वा मृतान् वा समाह्वयन्ति ।

## शरीराङ्गानि

अभिज्ञानशाकुन्तलस्य प्रथमाङ्के हृदयमधोविधमामन्त्रितम्—

**भव हृदय साभिलाषं सम्प्रति सन्देहनिर्णयो जातः ।**
**आशङ्कसे यदग्नि तदिदं स्पर्शक्षमं रत्नम् ॥ १.२५**

मालविकाग्निमित्रे पुनः नायिका हृदयमामन्त्रयति तृतीयाङ्के—

हृदय, अलं सुखितया । उपस्थितोऽयं विभवः इत्यादि । उत्तररामचरिते हस्तः सम्बोधितोऽधोविधम्—

**रे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य**
**जीवातवे विसृज शूद्रमुनौ कृपाणम् ।**
**रामस्य बाहुरसि निर्भरगर्भखिन्न-**
**सीता-विवासन पटोः करुणा कुतस्ते ॥ २.१०**

**भावाः**

मृच्छकटिके विदूषकः प्रथमाङ्के स्वकीयां दैन्यावस्थां सम्बोधयति—हा अवस्थे तुलयसि इत्यादि । चारुदत्तो दारिद्र्यं सम्बोधयति मृच्छकटिके—

**दारिद्र्य शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा ।**
**विपन्नदेहे मयि मन्दभाग्ये ममेति चिन्ता क्व गमिष्यसि त्वम् ॥१.३८**

**चन्द्रः**

विक्रमोर्वशीयस्य तृतीयाङ्के चन्द्रो नायकेन सम्भावितः। तद्यथा—भगवन् क्षपानाथ,

**रविमावसते सतां क्रियायै सुधया तर्पयते सुरान् पितृंश्च।**
**तमसां निशि मूर्च्छतां निहन्त्रे हरचूडानिहितात्मने नमस्ते ॥**

अस्मिन्नेवाङ्के देवी रोहिणी मृगलाञ्छनं साक्षीकरोति।

**निशा**

मृच्छकटिके निशा सपत्नीव सम्बोधिता। तद्यथा—

**मूढे निरन्तरपयोधरया मयैव**
**कान्तः सहाभिरमते यदि किं तवात्र।**
**मां गर्जितैरपि मुहुर्विनिवारयन्ती**
**मार्गं रुणद्धि कुपितेव निशा सपत्नी ॥ ५.१५**

**दक्षिणवायुः**

विक्रमोर्वशीये नायको दक्षिणवायुं सम्भावयति—भगवन्, वसन्तप्रिय दक्षिणवायो

**वासार्थं हर सम्भृतं सुरभिणा पौष्पं रजो वीरुधां**
**किं मिथ्या भवतो हृतेन दयितास्नेह-स्वहस्तेन मे।**
**जानात्येव मनोविनोदनशतैरेवं विधैर्धारितं**
**कामार्तं जनमङ्गनां प्रति भवानालक्षितप्रार्थनः ॥ २.१९**

**अङ्गुलीयकम्**

अभिज्ञानशाकुन्तलस्य षष्ठेऽङ्के दुष्यन्तोऽभिज्ञानकारणमङ्गुलीयमामन्त्रयति—

**तव सुचरितमङ्गुलीय नूनं प्रतनु ममेव विभाव्यते फलेन।**
**अरुणनखमनोहरासु तस्याश्च्युतमसि लब्धपदं यदङ्गुलीषु ॥**

**कथं नु तं बन्धुरकोमलाङ्गुलिं करं विहायासि निमग्नमम्भसि।**
**अचेतनं नाम गुणं न लक्षयेन्मयैव कस्मादवधीरिता प्रिया ॥**

**दण्डकाष्ठम्**

विदूषकोऽभिज्ञानशाकुन्तले स्वकीयं दण्डकाष्ठमेवोपालम्भते—कथमृजुकस्य मे कुटिलं त्वमसि।

# अंकवृत्तस्य कार्यकालस्य संकेतः

नाटकेषु कस्मिंश्चिदङ्क एकस्य दिनस्यैव कथा वितन्यते। तत्रापि दिनस्य कस्मिन् भागे कस्यचिदङ्कस्यामुकांशः सम्पद्यत इत्यपि सूचना पूर्वमेवावश्यकी। कालसूचना साधारणतो गौणरीत्या कार्यते।

अभिज्ञानशाकुन्तले

**वैखानसौ—राजन् समिदाहरणाय प्रस्थिता वयम्।**

इत्यनेन अपराह्णः सूच्यते, यतोहि नामाग्नौ समिदाधानं प्रातः सायं क्रियते। अत्र सायाह्नसमिदाधानमेव विविक्षितम्। एतस्मा अपराह्णे वैखानसौ समिदाहरणाय गतौ।

प्रथमाङ्कस्य कार्यततीनामन्तः सन्ध्यायां भवति। तद्धि निम्नाङ्कितेन श्लोकेन सूचितम्—

**तुरगखुरहतस्तथा हि रेणुर्विटपविषक्तजलार्द्रवल्कलेषु।**
**पतति परिणतारुणप्रकाशः शलभसमूह इवाश्रमेषु॥ १,२८**

द्वितीयाङ्कः दिनस्य प्रथमचरणे आरभ्यते इति विदूषकवचनेन प्रकटति। विदूषकः प्रवेशके कथयति—

**अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत्। का गतिः। यावत्तं कृताचारपरिक्रमं पश्यामि।**[1]

तृतीयाङ्कस्यारम्भो मध्याह्ने भवतीति राज्ञोऽधोवचनेन सूचितम्—

( सूर्यमवलोक्य ) **इमामुग्रामातपवेलां प्रायेणलतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति। तत्रैव तावद् गच्छामि।**

---

१. कृत आचारस्य स्नानादेः परितः क्रमो येन तं पश्यामि।

तृतीयाङ्कस्यान्तः सायं भवतीति **चक्रवाकवधू: आमन्त्रयस्व सहचरम् । उपस्थिता रजनीति** पताकास्थानकेन भवति। अपरं च तत्रैव गौतमी कथयति—

( शकुन्तलामभ्युक्ष्य ) **'वत्से परिणतो दिवसः ।'** इत्यादि

चतुर्थाङ्कस्यारम्भः प्रभातवेलायां भवतीति अनसूया-वचनेन भवति—

**ननु प्रभाता रजनी। तत् लघु प्रतिबुध्ये ।**

प्रियंवदा—**(प्रविश्य सहर्षम्) सखि त्वरस्व । शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम् ।**

प्रियंवदा—**एषा सूर्योदय एव शिखामज्जिता प्रतिष्ठितनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । उपसर्पाव एनाम् ।**

पञ्चमाङ्कस्यारम्भो मध्याह्ने भवति, यदा राजा धर्मकार्याणि सम्पाद्य धर्मासनादुत्थितः। वैतालिकवचसापि मध्याह्नः सूचितः । तद्यथा—

अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
**शमयति परितापं छायया संश्रितानाम् ॥** ५.७

षष्ठाङ्कस्यारम्भः प्रभात एव भवतीति तत्र सानुमत्या अधोवचनेन प्रतिभाति—

**निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यं यावत् साधुजनस्याभिषेककाल इति साम्प्रतमस्य राजर्षेरुदन्तं प्रत्यक्षीकरिष्यामि ।**

सप्तमाङ्कस्य घटना-स्थले लौकिककालक्रमस्य दिवारात्रादेः, प्रातः-मध्याह्न-सायाह्नादेश्च कलना नाभवत् । तद्यथा मातलिना वर्णितम्—

**त्रिस्रोतसं वहति यो गगनप्रतिष्ठां**
**ज्योतींषि वर्तयति च प्रविभक्तरश्मिः ।**
**तस्य द्वितीयहरिविक्रमनिस्तमस्कं**
**वायोरिमं परिवहस्य वदन्ति मार्गम् ॥** ७.६

द्वितीयहरिविक्रमपदंमघोविधं व्याख्यातं ज्योतिर्विद्भिर्वामनपुराणे—

**महीं महीध्रैः सहितां महार्णवाञ्**
**जहार रत्नाकरपत्तनैर्युताम् ॥**
**भुवं सनाकं त्रिदशाधिवासं**
**सोमार्कऋक्षैरभिनन्दितं नभः ।**
**देवो द्वितीयेन जहारवेगात्**
**क्रमेण देवप्रियमोप्सुरीश्वरः ॥**

एतत्सर्वं निस्तमस्कमिति पदेन स्पष्टमेव । नासोत्तमस्तत्र । अतएव कालिदासेन कालगत्यऽनिर्भिन्ने लोके यच्चरितं तस्य कालज्ञापनं विनैव नाट्यायितमभिज्ञानशाकुन्तले ।

## विक्रमोर्वशीये

प्रथमाङ्कस्य घटना प्रातःकाले भवतीति तत्र राज्ञोऽधोवचनेन प्रतीयते—

**अलमाक्रन्दितेन । सूर्योपस्थाननिवृत्तं पुरूरवसं मामेत्य कथ्यताम्'** इत्यादि । सूर्योपस्थानं प्रातःकाले सम्पाद्यते ।[1]

द्वितीयाङ्कस्य घटनापराह्णे भवतीति तस्मात्पूर्वं प्रवेशके विदूषक-वचनेन ज्ञायते । तद्यथा—एष पुनः प्रियवयस्यो धर्मासनसमुत्थित इत एवागच्छति ।

धर्मासनं राज्ञा दिनस्य द्वितीये यामेऽधिष्ठितम् । अङ्कान्तो मध्याह्ने भवति ।

तृतीयाङ्कस्य समारम्भो दिवसावसाने भवतीति विष्कम्भके कञ्चुकि-वचनेन ज्ञायते—

आदिष्टोऽस्मि सनियमया काशिराजपुत्र्या व्रतसम्पादनार्थं मया मानमुत्सृज्य निपुणिकामुखेन पूर्वं याचितो महाराजः । तदेव त्वं मद्-वचनाद् विज्ञापय इति । यावदहमिदानीम् 'अवसितसन्ध्याजप्यं महाराजं

---

१. चतुर्थाङ्कात् पूर्वं प्रवेशके सहजन्या कथयति—उदयोन्मुखस्य भगवतः सूर्यस्योपस्थानं कुर्मः ।

पश्यामि।' (परिक्रम्यावलोक्य च) रमणीयः खलु 'दिवसावसानवृत्तान्तो राजवेश्मनः। इह हि—

**उत्कीर्णा इव वासयष्टिषु निशानिद्रालसा बर्हिणो**
**धूपैर्जालविनिःसृतैर्वलभयः सन्दिग्धपारावताः।**
**आचारप्रयतः सपुष्पबलिषु स्थानेषु चार्चिष्मतीः**
**सन्ध्यामङ्गलदीपिका विभजते शुद्धान्तवृद्धो जनः॥**

( नेपथ्याभिमुखमवलोक्य )

**परिजनवनिताकरार्पिताभिः**
**परिवृत एष विभाति दीपिकाभिः।**
**गिरिरिव गतिमानपक्षसादाद्**
**अनुतटपुष्पितकर्णिकारयष्टिः॥**

तृतीयाङ्कस्यारम्भेऽपि राजा घटना-कालं सूचयत्यधोविधिना—

**कार्यान्तरितोत्कण्ठं दिनं मया नीतमनतिकृच्छ्रेण।**
**अविनोददीर्घयामा कथं नु रात्रिर्गमयितव्या॥३.४**

तदनु कञ्चुकी राजानमुपसृत्य निवेदयति—

**जयतु जयतु देवः। देव देवी विज्ञापयति—मणिहर्म्यपृष्ठे सुदर्शनश्चन्द्रः। तत्र सन्निहितेन देवेन प्रतिपालयितुमिच्छामि यावद् रोहिणी-संयोगः।**

तृतीयाङ्कस्य चरितचरणं सम्पूर्णं रात्रिं यावत् प्रसरति। तद्यथाङ्कान्ते राजोर्वशीं प्रतिवक्ति—

**अनुपनतमनोरथस्य पूर्वं शतगुणितेव गता मम त्रियामा।**
**यदि तु तव समागमे तथैव प्रसरति सुभ्रु, ततः कृती भवेयम्॥ ३.२२**

चतुर्थाङ्कस्य घटनाक्रमोऽहोरात्रं प्रसरतीति तस्य प्रवेशके चित्रलेखाया वचनेन प्रतिभाति। तद्यथा—

सोऽपि तस्मिन्नेव कानने प्रियतमां विचिन्वन् **अहोरात्रानतिवाहयति।** तत्र दिवा प्रियासहायश्चक्रवाकस्तेन दृश्यते। स तं पृच्छति—

**सरसि नलिनीपत्रेणापि त्वमावृतविग्रहां**
**ननु सहचरीं दूरे मत्वा विरौषि समुत्सुकः ।**
**इति च भवतो जायास्नेहात्पृथक्स्थितिभीरुता**
**मयि च विधुरे भावः कान्ताप्रवृत्तिपराङ्मुखः ॥ ४.२०**

पञ्चमाङ्कः प्रभाते प्रारभ्यत इति प्रवेशके विदूषकस्याधोवचनेन ज्ञायते—

**अद्य तिथिविशेष इति भगवत्योर्गङ्गायमुनयोः सङ्गमे देवीभिः सह कृताभिषेकः साम्प्रतमुपकार्यां प्रविष्टः ।**

तद्यावत् तत्रभवतोऽलंक्रियमाणस्यानुलेपमाल्येऽग्रभागी भवामि ।

## मालविकाग्निमित्रे

प्रथमाङ्कस्य समारम्भो दिनस्य प्रथमे भागे भवति, यदा राजा धर्मासने तिष्ठतीति तस्यामात्येन विदूषकेण च सह **कार्यवार्तया** प्रतीयते। द्वितीयाङ्कः प्रथमाङ्कस्य सातत्येन प्रवर्तते । **अत एव** तत्रापि चरित-चरणं दिनस्य प्रथमे भाग एव भवतीति ज्ञायते । तृतीयाङ्कस्य कार्यकालो राज्ञोऽधोवचनेन तत्रैव भवति—'**अथेमं दिवसशेषमुचितव्यापारविमुखेन चेतसा क्व नु खलु यापयामि**' इत्यनेन सायं यावत् कार्यप्रसृतिरनुमीयते ।

चतुर्थाङ्कस्य वृत्तकालः दिनस्य प्रथमो यामो यदा राजा विदूषकं मालविकावृत्तान्तज्ञानाय प्रेषितवान् ।[१]

पञ्चमाङ्कस्य कथावृत्तं प्रतिहार्या अधोवचनेन प्रवेशके भवति '**तद् यावद् धर्मासनागतं देवं प्रतिपालयामि ।**' अनेन मध्याह्नोत्तरकालः संकेतितः घटनाक्रमस्य चरणाय ।

यथा कालिदासीयेषु नाटकेषु प्रायशोऽङ्कारम्भे तत्सम्बन्धिकार्यव्यापारस्य कालः संकेतितस्तथैवान्येषु श्रेष्ठनाटकेषु कविकौशलप्ररोचितः कालसङ्केतो प्रगुणविधिना प्रेक्षकाणां विज्ञानाय समीहितः ।

---

१. पूर्वेद्युर्मालविकाकृतेऽस्य निद्रा नाभवत् । नायिका-विषये नायकस्योत्कण्ठा प्रातःकाले संजातेति निश्चितम् ।

# लक्षणालंकारयोर्भेदः

भरतो लक्षणस्य महत्त्वं प्रतिपादयत्यत्रोविधम्

**काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विताः। १५.२२**

अभिनवगुप्तो विशदयति—**लक्षणान्येव हि प्रधानम्। तत्प्रसङ्गेन गुणालङ्कारा इति तात्पर्यम्।**[1]

अत्र बन्धस्तु प्रबन्ध एव। अयं काव्यबन्धो लक्षण विना न सम्भवति। अभिनवगुप्तोऽस्याः कारिकाया व्याख्यां प्रस्तौति। तदनुसारेण यदि नाम काव्यं प्रासादो मन्येत तर्हि

| **प्रासादे** | **काव्ये** |
|---|---|
| भूमिः | शब्दच्छन्दोविधिः |
| क्षेत्रपरिग्रहः | वृत्तम् |
| भित्तिः | लक्षणम् |
| चित्रकर्म | अलङ्कार-गुणादिकम् |
| गवाक्षवातायनम् | दशरूपकविभागः |
| उपयोग-निरूपणम् | काक्वादिप्लुतिः। |

एतेन लक्षणालङ्कारयोर्भेदः स्पष्ट एव यल्लक्षणमाश्रित्य गुणालङ्कारास्तथैव प्रवर्तन्ते यथा भित्तिमाश्रित्य चित्रकर्म प्रसज्यते।

अत एवाधोविधं परिणमति—

(१) यथा प्रासादो भवेत् क्वचिद् चित्रकर्महीनस्तथैव काव्यप्रबन्धोऽपि गुणालङ्कार-विहीनो भवेत्।

(२) लक्षणं विना काव्यप्रबन्धस्तथैव न भवति यथा भित्तिं विना प्रासादो न भवति।

---

१. अभिनवभारती द्वितीये भागे पृष्ठं २९८।

(३) अलङ्कारा गुणाश्च लक्षणानि आश्रित्यैव तथा भवेयुर्यथा चित्राणि भित्तिमाश्रित्यैव सम्भवन्ति।

अभिनवगुप्तस्येदं मतं तस्य गुरुणा भट्टतोतेन प्रागेव व्याख्यातम्। तद्यथा—

लक्षणबलादलङ्काराणां वैचित्र्यमागच्छति।

| | | | | |
|---|---|---|---|---|
| गुणानुवादनाम्ना | लक्षणेन | योगात् | | प्रशंसोपमा |
| अतिशय | ,, | ,, | ,, | अतिशयोक्तिः |
| मनोरथ | ,, | ,, | ,, | अप्रस्तुतप्रशंसा |
| मिथ्याध्यवसाय | ,, | ,, | | अपह्नुतिः |
| सिद्धि | ,, | ,, | ,, | तुल्ययोगिता |

एवमन्यदुत्प्रेक्ष्यम्।[१]

लक्षणानां च परस्पर-वैचित्र्यादप्यनन्तो विचित्रभावः। यथा प्रतिषेधमनोरथयोः सम्मेलनादाक्षेप इति।[२] अतः पूर्वभावो लक्षणानां पश्चाद्भावश्च गुणालङ्काराणां सिद्ध एव।

अत एव स्पष्टो भेदो लक्षणालङ्कारयोर्यत् प्रथमपदे कवेर्मानसे लक्षणानि प्रकटीभवन्ति। तदनु तेषामाश्रयेणालङ्काराः प्रसज्यन्ते।

किमिदं लक्षणं नामेति अभिनवगुप्तेन पुनः पुनर्विज्ञापितम्। तथा हि—

(क) काव्ये तावल्लक्षणं शरीरम्।[३]

(ख) कविव्यापार-बलाद्यर्थंजातं लौकिकात् स्वभावाद् विद्यमानं, तदेव लक्षणम्।[४]

(ग) तत्र शरीरकल्पस्यालङ्कारा अधुना वक्तव्याः।[५]

(घ) लक्षणं हि शरीरम्[६]

---

१. अभिनवभारती द्वितीये भागे पृष्ठम् ३२१।

२-५. तत्रैव

६. तत्रैव पृष्ठम् ३१७।

अत एव लक्षणं तु अधिकरणं वा आधार एव,[1] अलङ्काराः पुनः आधेयाः। अयमाधाराधेयभावो लक्षणालङ्कारयोर्भेदं स्पष्टयति।

अलङ्कारं विनापि काव्यं भवति, किन्तु न लक्षणं विनेति भारतीय-नाट्यशास्त्रस्य १६.६ कारिकां विशदयन्नभिनवगुप्त उदाहरति—

विस्रम्भादुत्तमाङ्गं प्लवगबलपतेः पादमक्षस्य हन्तुः
कृत्वोत्सङ्गे सलीलं त्वचि कनकमृगस्याङ्गमाधाय शेषम्।
बाणं रक्षःकुलघ्नं प्रगुणितमनुजेनादरात्तीक्ष्णमक्ष्णोः
कोणेनोद्वीक्षमाणस्त्वदनुजवदने दत्तकर्णोऽयमास्ते॥

अत्र चार्थस्यालङ्कार-घटनाप्रयासमन्तरेण सुन्दरत्वं लक्षणकृतमेव। इदमक्षरसंहतिनामकं लक्षणं प्रयुक्तम्। तथैव शोभानामकं लक्षणमपि अलंकारं विनैवदर्शितम्

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः॥

न चात्रालङ्कारः कश्चिदपि तु कविव्यापारेण यः शब्दार्थव्यापारा-देवार्थघटनात्मा तत्कृतं हृद्यं लक्षणमेव।[1] अत एवाभिनवगुप्तेन कथितम्—लक्षणं त्वलंकारशून्यमपि न निरर्थकम्[2] तथापि—अलङ्कारैर्लक्षणानां सहभावस्तु स्वाभाविक एवेति अभिनवगुप्तेनाधोविधं स्पष्टीकृतम्—

अलङ्काराणां वैचित्र्यं लक्षणकृतमेव। एत एव शिक्षितैरपि दण्डि-प्रभृतिभिर्ये निरूपिता उपमाभेदाः, तत्र यो भेदकोंऽशः—आचिख्यासा-संश्रय-निर्णयादिरर्थः, स तादृक् पृथगलङ्कारतया गणितः। गणनेऽपि वा संसृष्टिसङ्करापत्तिः। अर्थमात्रं तदिति चेत् तर्हि तदेव लक्षणम्। यथा हि राजता विभज्य विचार्यमाणा इत्थमवतिष्ठते—मुकुटाद्यलङ्कारः, शौर्यादि-गुणो, व्यूढोरस्कत्वादिलक्षणसमुदायः। राजालङ्कार्यश्च, गुणवांश्च लक्ष-णीयश्च तथा काव्यमपि। तेन गुणालङ्कारव्यतिरिक्ताः सर्वे लक्षणमिति

१. अभिनवभारती द्वितीये भागे पृष्ठम् ३०१।
२. तत्रैव पृष्ठ ३२२

**मन्तव्यम् ।**[१] **यथा राज्ञि तथैव काव्येऽलङ्कारगुणलक्षणानां सहभावः साहित्यं वा सुसिद्धम् ।**

लक्षणस्य स्वरूपमभिनवगुप्तात् प्राङ् नासीत् स्पष्टम् । तेन तद्विषयकाः प्रचलिता विकल्पा निर्दिष्टा अभिनवभारत्याम् । तद्यथा—

१. लक्षणानि तु न प्रसिद्धानि ।

२. शरीरनिष्ठमेव यत्पदं पृथक्सिद्धं तल्लक्षणम् येन शरीरस्य सौन्दर्य जायते ।

३. इतिवृत्तखण्डलकान्येव सन्ध्यङ्गकानि लक्षणानि ।

४, अभिनेयानां काव्यबन्धानां रूपकञ्चसमभिदध्यात्, कवेः स्वसामर्थ्याधानाय तावदभ्यासो निर्माणविधेयो लक्षणम् ।

५. प्रबन्धधर्मा लक्षणानि ।

६. कवेरभिप्रायविशेषो लक्षणम् ।

७. यथास्थानविशेषं यद्गुणालङ्कारयोजनं तल्लक्षणम् ।

८. अलंकारादिनिरपेक्षेणैव निसर्गसुन्दरो योऽभिनेयविशेषः काव्येषु दृश्यते, तत्सौन्दर्यहेतुर्यो धर्मः सलक्षणः स एव चार्थः, काव्यशरीरविशेषो लक्षणम् ।

लक्षणस्यालङ्काराद् भेदोऽभिनवगुप्तेनान्यथापि प्रदर्शितः । तद्यथा—

**उपमानशरीरस्योपमेयशरीरस्य वा वैचित्र्यं लक्षणानामेवव्यापारः । लक्षणं हि शरीरम् ।**[२]

अनेन स्पष्टं भवति यदुपमानवस्तुषु उपमेयवस्तुषु च कश्चिन्नैसर्गिकमेवान्तर्हितं तत्त्वं यस्य प्रभावेण तयोः साम्यं प्रतिफलति । एतस्य उपमेयगतरमणीयतत्त्वस्य महिमानं प्रगुणीकर्तुमेव कविरलङ्कार-व्यापारं समाश्रयते । इदमेव तत्त्वं लक्षणशरीरमुच्यते । एतदेव तेन प्रागेव कथितम्—

१. अभिनवभारती द्वितीये भागे पृष्ठम् ३०५ ।

२. ना० शा० १६.३४ अधिकृत्य भारती ।

**अलङ्कारैर्युक्तं काव्यं लक्षणैर्विना न शोभते ।**[1]

काव्यादर्शे दण्डिना प्रोक्तम्—

**यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे ।**
**व्यावर्णितमिदं चेष्टमलङ्कारतयैव नः ॥**

द्वितीये परिच्छेदे ३६७

नात्र लक्षणस्यालङ्कारस्य च पर्यायत्वमवधारितम् । यथा सन्ध्यङ्गानि अलङ्कारेभ्यो भिन्नानि सन्तीति सर्वेषामभिमतं तथैव लक्षणान्यपि अलङ्कारेभ्यो भिन्नानि सन्ति ।

दण्डिनोऽलङ्कारस्त्वत्र ब्रह्मेव वर्तते। यथा ब्रह्मणि जलं च स्थलं च वर्तेते, किन्तु भिन्नत्वं तयोर्न सन्दिह्यते तथैवालङ्कारे सन्ध्यङ्गानि, वृत्तयो लक्षणानि च भवेयुः सन्निविष्टानि, तथापि तेषां परस्परं नैकत्वं कल्पनीयम् । अत एव लक्षणानि नैवालङ्काराः ।

दण्डिनः पूर्वोक्तां सरणिमवलम्बमानो धनञ्जयोऽलंकारेषु संचारिभावेषु च लक्षणानामन्तर्भावं मन्यते । तथा हि—

**षट्त्रिंशद् भूषणादीनि सामादीन्येकविंशतिः ।**
**लक्ष्म सन्ध्यन्तराख्यानि सालंकारेषु तेषु च ॥ ४.८५**

इदं तु धनञ्जयस्य स्वपदादेव स्खलनम् । ग्रन्थारम्भे स कथयति—

**नमः सर्वविदे तस्मै विष्णवे भरताय च । १.२**
**तस्या (भरतस्य)र्थस्तत्पदैस्तेन संक्षिप्य क्रियतेऽञ्जसा । १.५**

ईदृशेनादरणीयेन भरतेन लक्षणानां वैचित्र्यं वर्णितम् । तेन स्वीये नाट्यशास्त्रे लक्षणानामलङ्कारेभ्यो भिन्नता प्रदर्शिता । तत्कथं नाम लक्षणानि अलङ्कारेषुअन्तर्भूतानीति धनञ्जयो निगदति । धनञ्जयस्येदं मतं सर्वथा निराधारं प्रतिभाति । भरत एव जयति ।

लक्षणानि स्वत एव महत्त्वपूर्णानि इति सागरनन्दी मन्यते । स तेषामन्तर्भावं नानुमनुते । स विशदयति—'तत्र षट्त्रिंशल्लक्षणोपेतं नाटकं नाट्यसिद्धिमधिरोहति, यथा लक्षणैरुपेतो राजा राज्यश्रियमिव । तच्च यथा—

---

१. अभिनवभारती द्वितीये भागे २९५ पृष्ठम् ।

**लक्षणैर्बहुविशेषहेतुभिर्नाटकं व्रजति नाट्यसम्पदम् ।**
**सद्गुणैरिव शुभानुबन्धिभिश्चक्रवर्तिपदवीं महीपतिः ॥ १.४५**

**लक्षणान्यप्यलङ्काराः कार्त्स्न्येनैकत्र दुर्लभाः ।**
**एतेषामप्यसाकल्यं शोभां सृजति नाटके ॥ १.८७**

**अङ्गानि सालंकृतिलक्षणादिकार्याणि कार्याणि हि नाटकेषु ।**
**अतोऽन्यथावृत्तिषु पण्डितेषु न दण्डमाकर्षति शास्त्रकारः ॥**

अन्यच्च स कथयति—

**लक्षणान्यभिधायालङ्काराः कथ्यन्ते । यदुक्तं सालकारं तु नाटकम्'** इति । यद्यप्युपमादय एव काव्यस्य शोभानुबन्धिनोऽलङ्काराः कथितास्तथाप्येते नाट्यालङ्कारा **नाट्यशोभां** जनयन्तोऽलंकारा इति व्यपदिश्यन्ते ।

सागरनन्द्यनुसारेण लक्षणानि नाटकस्य नाट्यसम्पदं प्रस्तुवन्ति, अलङ्काराश्च पुनः नाट्यशोभां जनयन्ति । अर्थात् यं विषयमधिकृत्य नाट्यं प्रवर्तते तस्यैवार्थराशिर्लक्षणैरुपस्थाप्यते । अलंकारास्तस्यार्थराशेः शोभां वर्धयन्तोत्येतयोरन्तरम् ।

पूर्वोक्तविवेचनेन प्रतिभाति यल्लक्षणानि कविदर्शनस्य वैशिष्ट्यं द्योतयन्ति, अथ चाल्लङ्काराः कवेर्वर्णननैपुण्यं प्रकटयन्ति ।



# अंकमध्ये पात्राणां सव्यपदेशं निष्क्रमणम्

रङ्गपीठे स्वल्पसंख्यकानि पात्राणि भवन्तु । अन्यानि पात्राणि किमपि प्रयोजनमुद्दिश्यान्यत्र प्रेष्याणि सन्ति, स्वयमेव वान्यत्र गच्छन्ति । एषा साधारणरीतिः । असाधारणरीतिस्तत्र वर्तते यत्र केनाप्यवास्तविकव्यपदेशेन पात्राणि निष्क्रामन्ति । रङ्गपीठं निर्मक्षिकं विधातुं व्यपदेश ऊह्यते ।[1] तद्यथाभिज्ञानशाकुन्तले द्वितीयाङ्के—

**राजा**—( परिजनान् विलोक्य ) **अपनयन्तु भवत्यो मृगयावेशम् । रैवतक त्वमपि स्वनियोगमशून्यं कुरु ।**

**परिजनाः**—**यद्देव आज्ञापयति** ( **निष्क्रान्ताः** ) ।

**विदूषकः**—**कृतं भवता निर्मक्षिकम् । साम्प्रतमेतस्यां पादपच्छायायां विरचितलतावितानदर्शनीयायामासने निषीदतु भवान् । यावदहमपि सुखासीनो भवामि ।**

राज्ञा सर्वाणि पात्राणि बहिः प्रेषितानि[2], केवलं राजा विदूषकश्च तत्रास्तामिति रहस्य-विधानं दृष्ट्वा विदूषकः कथयति—**कृतं भवता निर्मक्षिकमिति** । निर्मक्षिकमितिपदेन रहस्यवार्तायामनपेक्षितानां जनानां दूरीकरणमेव व्यज्यते । मक्षिका तु कार्यव्यापारे बाधिकेति कालिदासेन मालविकाग्निमित्रे प्रयुक्तम् । यथा—**उपस्थितं नयनमधु, सन्निहिता मक्षिका च ।**

कालिदासो निर्मक्षिकत्वं कथं विदधातीत्यग्रेऽपि दर्शनीयम् ।

कस्यचिदन्यकार्यस्य सम्पादनायान्यत्र गच्छन्नेव मार्गे रङ्गपीठस्थलीं प्रविश्य नायकः तत्र साम्प्रतिकं कार्यं विधाय पूर्वोद्दिष्टं कार्यं सम्पादयितुं निष्क्रामति । यथाभिज्ञानशाकुन्तले प्रथमाङ्के—

---

१. यत्कार्यमधिकृत्य व्यपदेश ऊह्यते, तत्कार्यं परतो न चर्च्यते । इदमेव व्यपदिष्ट कार्यलक्षणम् ।

२. राज्ञ उद्देश्यं तत्र तेनैव स्पष्टीकृतं विदूषकं प्रति स्ववचनेन—विश्रान्तेन भवता ममाप्यनायासे कर्मणि सहायेन भवितव्यम् ।

**वैखानसाः —राजन् समिदाहरणाय प्रस्थिता वयम्। इत्यनेन पूर्वोद्दिष्टं कार्यं निवेद्य साधयामस्तावदिति निष्क्रान्ताः।**

शकुन्तलया सह प्रणयसमारम्भः सूतस्योपस्थितौ न सम्भावितः। अत एव कविः सूतं निष्क्रामयति राज्ञो वचनेन। तद्यथा—

**'तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः'** इति।

**सूतः —तथा। ( निष्क्रान्तः )**

अभिज्ञानशाकुन्तलस्य द्वितीयाङ्के कथासौष्ठवविधानपथे मक्षिक इव विदूषको निष्क्राम्यते कविकृतव्यपदेशेन—**आगामिचतुर्थदिवसे पुत्र पिण्डपालनो** नाम प्रवृत्तपारणो मे उपवासो भविष्यति। तत्र दीर्घायुषा अवश्यं सम्भावयितव्येति राजमातुः सन्देशानुसारेण अतः परं विदूषकस्य निष्क्रमणं संसाधितं कविना। अस्माद्विना पञ्चमाङ्कं यावच्छाकुन्तलीया कथा न साधु प्रवर्तेतेति स्पष्टमेव।

षष्ठाङ्के शकुन्तलया राज्ञः प्रणयव्यापार-वर्णनमेव प्रथमं स्थानं भजते। एतादृशे प्रकरणे राज्ञो विश्वासभूमिर्विदूषको भवति। तत्राङ्कारम्भे समागतौ प्रतिहारी-कञ्चुकिनौ व्यपसारणीयौ बभूवतुः। प्रतीहारी अमात्यपिशुनस्यान्तिकं राज्ञा सन्देशकथनाय प्रेषिता, कञ्चुकी च **'स्वनियोगमशून्यं कुरु'** इति निष्क्रामितः।

कविकल्पित-व्यपदेशेन पात्राणामन्यत्रगमनस्य श्रेष्ठमुदाहरणमभिज्ञानस्य तृतीयाङ्केऽधोविधं वर्तते—

प्रियंवदा—( सदृष्टिक्षेपम् ) **अनसूये, यथैष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति। एहि संयोजयाव एनम्।**

तयोर्निष्क्रमणेन नायकयोः प्रणयव्यापारः सम्यक् प्रवर्तितः। अत्रापि प्रणयप्रदेशो निर्मक्षिकः कृतः।

भाविकार्यमपेक्ष्यापि पात्राणां निष्क्रमणं विधीयते। अभिज्ञानशाकुन्तले षष्ठाङ्के राज्ञा सह विदूषक आसीत्। स चित्रफलकस्य निगूहनार्थं द्रुतपदं निष्क्रान्तः। अनेन निष्क्रमणेनैव परवर्तिकार्यं सम्पद्यते, यतो हि स मेघप्रतिच्छन्दे प्रासादे मातलिना गृह्यते। विदूषकस्येदं निष्क्रमणं सप्रयोजनमेव। अत्र चित्रफलकस्य निगूहनं तु व्यपदेश एव। परवर्ति कार्यमेव महत्त्वं भजते।

अभिज्ञानशाकुन्तलस्य सप्तमाङ्के दुष्यन्तस्य पुत्रदर्शनं पुत्रस्याभिज्ञानं च महत्त्वपूर्णे। अस्मिन् प्रकरणे मातलेरुपस्थितिरवांछनीयेति विचार्य कालिदासस्तं **'त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामीति' व्यपदेशेन निष्क्रामयति।**

मालविकाग्निमित्रस्य द्वितीयाङ्के राज्ञो विदूषकेण सह प्रणय-रहस्यं संलपितुं हरदत्तं, देवीं, परिव्राजिकां च विदूषको भोजनवेलोपस्थितेति व्यपदेशेन निष्क्रामयति। ततः परं राजा विदूषकं कथयति—

**अव्याजसुन्दरीं तां विधानेन ललितेन योजयत।**
**परिकल्पितो विधात्रा बाणः कामस्य विषदिग्धः॥**

**किं बहुना, सखे चिन्तयितव्योऽस्मि।**

**कथमनातुरो भविष्यामि।**

**सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्य।**
**सा वामलोचना मे स्नेहस्यैकायनी भूता॥**

चतुर्थाङ्कस्यारम्भे राजा सह प्रतीहारी वर्तते। विदूषके समागते प्रणयवार्तायाः समारम्भार्थं निर्मक्षिकं भवेदिति मनसि कृत्वा राजा सव्यपदेशं प्रतीहारीमन्यत्र प्रेषयति। यथा—

**जयसेने जानीहि तावत्क्व देवी धारिणी सरुजचरणत्वाद् विनोद्यते।**

**प्रतीहारी—यद्देव आज्ञापयतीति। इति निष्क्रान्ता**

चतुर्थाङ्के पुनर्विदूषको वकुलावलिका च सव्यपदेशं हरिणस्य निवारणाय नायकौ एकान्ते त्यक्त्वान्यत्र गच्छतः। यथा—

**विदूषकः—वकुलावलिके, एष बालाशोकवृक्षस्य पल्लवानि लंघयति हरिणः। एहि निवारयाम एनम्।**

**बकुलावलिका—तथा ( इति प्रस्थिता )**

नाटकीय-संविधाने कतिपयपात्राणि नायकाभ्यां सह चरन्त्येव। यत्र तेषामपि निष्क्रमणमपेक्षितं भवति, तत्र कश्चिद् व्यपदेशः सृज्यते। इयमपूर्वा सृष्टिः कवेः प्रातिभंकर्म, काव्यकलामुत्कर्षयति।

**'केवलमनायकपुरुषस्त्वविच्छिन्न एवाङ्के निष्क्रामति'।**[1]

इति मतमभिनवगुप्तस्याङ्कमध्ये विदूषकादीनां सखीनां च निष्क्रमणं निषेधति। तेषामपि निष्क्रमणं कलासौष्ठवनिष्पत्तये विधीयत इति पूर्वमेव

१. अभिनवभारती द्वितीये भागे पृष्ठं ४२३।

दृष्टम् । न केवलमेतेषामपि तु नायकस्यापि निष्क्रमणं प्रयोजनवशाद् भवेदेवेति विक्रमोर्वशीयस्य प्रथमाङ्के दृश्यते । यथा,

राजा—(रथवेगं रूपयित्वा) साधु-साधु । **अनेन रथवेगेन पूर्वप्रस्थितं वैनतेयमप्यासादयेयम् । किं पुनस्तमपकारिणं मघोनः । मम—**

**अग्रे यान्ति रथस्य रेणुपदवीं चूर्णीभवन्तो घना-**
**श्चक्रभ्रान्तिररान्तरेषु वितनोत्यन्वायि वारावलीम् ।**
**चित्रारम्भविनिश्चलं हरिशिरस्यायामवच्चामरं**
**यन्मध्ये समवस्थितो ध्वजपटः प्रान्ते च वेगानिलात् ॥ १.५**

( निष्क्रान्तो रथेन राजा सूतश्च )

मालविकाग्निमित्रे नायिका मालविका द्वितीयाङ्कस्य मध्ये निष्क्रामतीतिपूर्वोक्तमभिनवगुप्तस्य मतं व्यभिचरति ।

कतिपयकार्याण्येकान्त एव सम्पादनीयानि सन्ति । तदर्थं रङ्गस्थानि शेषाणि पात्राणि निस्सार्यन्ते । तद्यथा दृश्यतऽविमारके पञ्चमेऽङ्के । कुरङ्गी आत्मानं हन्तुमेकान्तं स्थानं वाञ्छति । सा नलिनिकां कथयति—

नलिनिके गच्छ । **मागधिकामानयोपस्नानेन । सा तामुपश्लिष्य पुनः कथयति—**

**हन्त कृतः सखीप्रणयः । गच्छेदानीं त्वम् ।**

नलिनिका तत्पश्चान्निष्क्रान्ता ।

कुरङ्गी पश्चादागतां हरिणिकां भट्टिनी निजस्वास्थ्यं निवेदयितुं प्रेषयति—अद्य विगतरोगा स्वस्था भवतीति ।

अत्र नलिनिकाया निःसारणमभिनवेनाकाशतोयेन स्नानार्थं वासराआनयनस्य व्याजेनहरिणिकायाश्च निस्सारणं स्वास्थ्यनिवेदनस्य मिषेण सम्पादितम् । एकाकिनी सा नायकदर्शनं करोत्विति काव्यसौष्ठवं निष्पन्नमत्र ।

पञ्चमाङ्के पुनर्नायकयोरेकान्तसंगमनं निर्मक्षिकं विधातुं भोजनदानाय गोष्ठीजनेनागमनोपायस्य श्रवणाय च नलिनिका विदूषकेण सह निष्क्रामति । भोजनदानं उपायश्रवणं चात्र व्यपदेशौ ।

स्वप्नवासवदत्तस्य पञ्चमाङ्के विदूषको निष्क्रामति प्रावारकानयनव्याजेन । तस्य निर्गमनं विनास्य नाटकस्य सर्वोत्कृष्टमेव स्वप्नदृश्यं न समभविष्यत् ।

## नाटकेषु हास्ययोगः

हास्यस्य स्थानं नाटकं विहायान्यविधेषु काव्येषु स्वल्पमेव स्वीक्रियते। न तेषु काव्यानुरोधेन हास्यपरायणो विदूषको विलसति, अन्ये वा हास्यकारका नायका विधीयन्ते। नाटकानां मनोरञ्जनैकनिष्ठत्वात्, मनोरञ्जनस्य च हास्यमेव परं निधानत्वात् कवयो विविधोपायैस्तत्र हास्यं सृजन्ति। अस्थानेऽकालेऽज्ञानवशाद्वा यत् कृतं प्रोक्तं, धृतं वा तद् हास्यकारणं भवति। विदूषकस्तु तादृशीषु प्रवृत्तिषु परं निष्णातो बहुषु नाटकेषु परिचित एव। तं विहाय येऽन्ये नायका हास्यसर्जनाय विनियुज्यन्ते तानेवात्राधिकृत्य समीक्षामहे। प्रायशः नाटककविः कथागतिं बाधमानमपि हास्यकरं विवरणं सप्रपञ्चं प्रस्तौतीति नाटकेषु दृश्यते। तद्यथा मृच्छकटिके तृतीयेऽङ्के शर्विलकस्य चौर्य-प्रक्रिया—

मापयित्वा कर्म समारभे। (तथा कृत्वावलोक्य च) एकलोष्टावशेषोऽयं सन्धिः। धिक्कष्टम्, अहिना दष्टोऽस्मि। (यज्ञोपवीतेनाङ्गुली बद्ध्वा विषवेगं नाटयति। चिकित्सां कृत्वा) स्वस्थोऽस्मि। इत्यादि

### परस्परापरिचयात्

भासनाटकेषु हास्यं प्रचुरायते। तत्र नायकानां परस्पर-परिचयाभावादुच्चकोटिकं हास्यं बहुशः समीहितम्। यथा मध्यमव्यायोगे घटोत्कचो न जानाति यन्मे समक्षं मम पिता भीम एव वर्तते। तयोर्हास्यकारिणी वार्ताधोविधं प्रवर्तते—

**घटोत्कचः** —किं मा प्रत्यभिजानीते।

**भीमः** —मत्पुत्रः

**घटोत्कचः** —कथं, कथं तव पुत्रोऽहम्।

**भीमः** —कथं रुष्यति। मर्षयतु भवान्। सर्वाः प्रजाः क्षत्रियाणां पुत्रशब्देनाभिधीयन्ते। अत एव मयाभिहितम्।

**घटोत्कचः** —भीतानामायुधं गृहीतम्।

अन्यच्च—

**भीमः —**

**काञ्चनस्तम्भसदृशो रिपूणां निग्रहे रतः ।**
**अयं तु दक्षिणो बाहुरायुधं सहजं मम ।।४२**

**घटोत्कचः** —इदमुपपन्नं पितुर्मे भीमसेनस्य

**भीमः** —अथ कोऽयं भीमो नाम ।

**विश्वकर्ता शिवः कृष्णः शक्रः शक्तिधरो यमः ।**
**एतेषु कथ्यतां भद्र केन ते सदृशः पिता ।। ४३**

**घटोत्कचः** —सर्वैः ।

**भीमः** —धिगनृतमेतत् ।

**घटोत्कचः** —कथं कथमनृतमित्याह । क्षिपसि मे गुरुम् । भवत्विमं स्थूलं वृक्षमुत्पाट्य प्रहरामि ।

पञ्चरात्रे पुनर्भीमोऽज्ञात एवाभिमन्युनावमतो हास्यं सृजति । तत्राभिमन्युरज्ञातं पितृव्यं भीमं प्रति वदति—

**बाहुरक्षौहिणी यस्य निर्व्याजो यस्य विक्रमः ।**
**किं भवान् मध्यमस्तातस्तस्यैतत् सदृशं वचः ।।**

अत्रैवाभिमन्युरज्ञातं स्वपितरं बृहन्नलां तर्जयति—

**किं भवान् धर्मराजो मे भीमसेनो धनञ्जयः ।**
**यन्मां पितृवदाक्रम्य स्त्रीगतां पृच्छसे कथाम् ।।**

तत्रार्जुनादीनां हास्यं प्रभवतीति भासेनाभिमन्युमुखेनोपवर्णितम्—
अभिमन्युः —इहात्रभवन्तो मे पितरः । तेन खलु

**न रुष्यन्ति मया क्षिप्ता हसन्तश्च क्षिपन्ति माम् ।**
**दिष्टया गोग्रहणं स्वन्तं पितरो येन दर्शिताः ।। २.६७**

## प्रच्छन्नत्वेन

स्वप्नवासवदत्ते प्रच्छन्ननायकता बहुषु स्थलेषु महद्धास्यं सृजति । प्रथमाङ्क एवादौ यौगन्धरायणः परिव्राजकवेषो वासवदत्ता चावन्तिकावेषधारिणी प्रविशतः । नाचिरमेव प्रेक्षकैस्तावभिज्ञातौ वास्तविकरूपिणौ, यदा यौगन्धरायणः कथयति—

**पूर्वं त्वयाप्यभिमतं गतमेवमासी—**
**च्छलाघ्यं गमिष्यसि पुनर्विजयेन भर्तुः । १.४**

अतः परं तस्य मिथ्याचारा मृषोद्यानि च पुनः पुनः हास्यं जनयन्ति। तद्यथा—

**यौगन्धरायणः** –इयं मे स्वसा। प्रोषितभर्तृकामिमामिच्छाम्यत्रभवत्या कञ्चित्कालं परिपाल्यमानाम्।

लावाणकदाहवृत्तानि ब्रह्मचारिणः श्रुत्वा यदा वासवदत्ता रोदिति, तदा यौगन्धरायणः कथयति—

**प्रकृत्या सानुक्रोशा मे भगिनी।**

## कूटाचारेण

षष्ठाङ्कस्यान्तिमे भागे पुनरयं यौगन्धरायणः कूटनाटकं प्रस्तौति स्वीयेन मिथ्याचारेण हास्यमुन्सेचयति च। तद्यथा—

**यौगन्धरायणः** —( राजानं प्रति ) जयतु जयतु भवान्।

**राजा**—किं भवता स्वसा पद्मावत्या हस्ते न्यास इति निक्षिप्ता।

**यौगन्धरायणः** —अथ किम्।

**राजा**—तेन हि त्वर्यतामस्य भगिनिका।

**पद्मावती**—एष न्यासः।

**राजा**—निर्यातय पद्मावति। साक्षिमन्न्यासो निर्यातयितव्यः।

**पद्मावती**—आर्य नीयतामिदानीमार्या।

**धात्री**—( अवन्तिकां निर्वर्ण्य ) अम्मो, भर्तृदारिका वासवदत्ता।

**राजा**—कथं महासेनपुत्री। इत्यादि

इत्यनेन यौगन्धरायणं वासवदत्तां च पूर्वत एव विजानन्तः प्रेक्षका महती हास्यश्रियं प्रतिपद्यन्ते।

वासवदत्तायाः प्रच्छन्नत्वमपि प्रायो हास्यं सृजति। तृतीयाङ्के सा उदयनस्य सौन्दर्यवर्णनं चेटीमुखाच्छ्रुत्वा कथयति—

**अयुक्तं परपुरुषसंकीर्तनं श्रोतुम्।**

मालागुम्फनप्रकरणे सपत्नीमर्दनौषधगुम्फनेन स्वीया हानिरिति विचार्य कथयति—**इदं न गुम्फितव्यम्।**

**चेटी**—कस्मात्

**वासवदत्ता**—उपरता तस्य भार्या। तन्निष्प्रयोजनमपि।

अत्र मृषोद्येन प्रेक्षकाणां हास्यं स्वाभाविकमेव। पञ्चमेऽङ्केऽपि उदयनस्य वासवदत्ताविषयकप्रेमवर्णने तस्य कल्पितोत्तरं हास्यकारि प्रवर्तते।

### शकारीयवैषम्येण

शकारीयहास्यस्य परं निधानं तु मृच्छकटिकमेव राजते। शकारस्य ग्राम्यभाषा, ग्राम्यविचारसरणिरुद्दण्डोचितकार्यपद्धतिश्च प्रेक्षकान् हासयन्ति। प्रकरणेऽस्मिन् कविः शकारस्य मौर्ख्यपरं हास्यं भृशं बिभर्ति। एतस्य शकारीयहास्यस्य प्राग्रूपं भासस्य चारुदत्तमपि सम्यगुत्कर्षयति।

शकारो वसन्तसेनायाः प्रतिवचासि तयाऽसंकेतितेष्वर्थेषु बुद्ध्वाऽप्रासङ्गिकं बहु वदति। तद्यथाप्रासङ्गिकार्थग्रहणेन

**गणिका**—सन्तोसि ( शान्तोऽसि )।

**शकारः**—सुणाहि भावे। एशा वशन्तशेणिआ मं शन्तोशित्ति भणादि।

**( शृणु भाव। एषा वसन्तसेना मां श्रान्तोऽसीति भणति। )**

**विटः**—( आत्मगतम् ) आक्रुष्टमात्मानं न जानाति मूर्खः। ध्वंस इत्युक्ते श्रान्तः इत्यवगच्छति।[1]

अस्मिन् प्रसंगे विटमुखेन भासो हास्यस्याभिनवां धारा परिचाययति—

**अभिनयति वचांसि सर्वगात्रैः किमपि किमप्यनवेक्षितार्थमाह।**
**अनुचितगतिरप्रगल्भवाक्यः पुरुषमयस्य, पशोर्नवावतारः॥**

एतस्योदाहरणं शकारवचनेषु गर्भितम्। तद्यथा—

**शृणोमि गन्धं श्रवणाभ्याम्। अन्धकारपूरिताभ्यां नासापुटाभ्यां सुष्ठु न पश्यामि॥**

### वञ्चनाद् हास्यम्

वञ्चनया हास्य-प्रस्रवणं भासस्यानुत्तमा कला। चारुदत्ते शकारो विटेनोत्साहितश्चेटीं वसन्तसेनेति मत्वा गृह्णाति। तद्यथा—

**विटः**—( विलोक्यात्मगतम् ) भवनान्निर्गत्य काचिदियमागच्छति। भवतु, अनया वराकं बंचयामि। स प्रथमं स्वयमेव चेटीं गृहीत्वा शकारमादिशति गृह्यतां तावत्। शकारश्चेटीं गृह्णाति। पश्चाद् यदा शकारस्तस्याः स्वरसंयोगेन जानाति यन्नेयं वसन्तसेना तदा विटोऽसत्यमेव वदति शकारं वञ्चयितुम्—

---

१. प्रासंगिकमर्थमगृहीत्वा श्लिष्टमप्रासंगिकमर्थं शकारो मृच्छकटिकेऽपि गृह्णाति। तद्यथाष्टमेऽङ्के धन्य इति कोष्ठकार्थे।

**एषा रंगप्रवेशेन कलानां चैव शिक्षया।**
**स्वरान्तरेण दक्षा हि व्याहर्त्तुं तत्र मुच्यताम् ॥**

वस्तुस्थितिं परिज्ञाय शकारो वदति—**अहं तावद्वञ्चितः कूटकपटशीलयेति** । अत एव हास्यम् ।

मृच्छकटिकेऽयं शकारो हास्यनिर्झरी सातिशयं प्रस्तौति। तद्यथा तस्यासमञ्जसितापार्थकानि वचांसि—

**मम वशमनुयाता रावणस्येव कुन्ती** । १.२१
**द्रौपदीव पलायसे रामभीता** । १.२५
**यथा हनूमान् विश्वावसोर्भगिनीमिव तां सुभद्राम्** ॥ १.२५
**शूरो विक्रान्तः पाण्डवः श्वेतकेतुः**
**पुत्रो राधाया रावण इन्द्रदत्तः ।**
**आहो कुन्त्यास्तेन रामेण जातः**
**अश्वत्थामा धर्मपुत्रो जटायुः** ॥ १.४७
**केशवृन्दे परामृष्टा चाणक्येनेव द्रौपदी** ॥ १.४९

अप्रासंगिकवाक्यव्याहारेण हास्यं सृजति शकारः । तद्यथाष्टमेऽङ्के—

एतन्मम भगिनीपतिना सर्वोद्यानानां प्रवरं पुष्पकरण्डोद्यानं दत्तं, यत्र तावच्छुनकाः शृगालाः पानीयं पिबन्ति। अहमपि प्रवरपुरुषो मनुष्यको न स्नामि ।

ऐतिहासिकतथ्यानां व्यत्ययोऽपि शकारवचनेषु हास्यकारी भवति। तद्यथा—

**चाणक्येन यथा सीता मारिता भारते युगे ।**
**एवं त्वां मोटयिष्यामि जटायुरिव द्रौपदीम् ॥** ८.३५

शकारीयहास्यं न केवलं वचनवैपरीत्येनापि तु कार्यविधिवैपरीत्येनापि सम्भवति। मृच्छकटिकस्य प्रथमेऽङ्के स चेटदत्तमसिं विपरीतं गृह्णाति।[1]

---

१. कार्यविधिवैपरीत्येन हास्यस्य सर्जनं त्वन्येषां पात्राणामपि दृश्यते। तद्यथा मृच्छकटिके—

संवाहकः —तावदहं विपरीताभ्यां पादाभ्यामेतच्छून्यदेवकुलं प्रविश्य देवी भविष्यामि ।'

अत्र विपरीतं पदचरणं तु हास्यकारि ।

विटेन सम्यग्व्याख्यातैषा प्रवृत्तिः शकारस्याधोविधम्—

**शकारः**—तथा कर्दमं प्रक्षिपतु, यथा पानीयं पंकाविलं न भवति। अथवा पानीयं पुञ्जीकृत्य कर्दमे क्षिपतु।

**विटः**—अहो मूर्खता—

**विपर्यस्तमनश्चेष्टैः शिलाशकलवर्ष्मभिः।**
**मांसवृक्षैरियं मूर्खैर्भाराक्रान्ता वसुन्धरा॥** ८.६

कार्य-व्यत्ययव्याहारेणापि हास्यं जायते। अष्टमेऽङ्के शकारश्चेटं कथयति—तद्यदि राक्षसी तदोभावपि मुषितौ। अथ चौरः तदोभावपि खादितौ। तत्रैव पुनः शकारो वदति—कथं शृगाला उड्डीयन्ते। वायसा व्रजन्ति। तद्यावद्भावोऽक्षिभ्यां भक्ष्यते, दन्तैः प्रेक्ष्यते, तावदहं पलायिष्ये।

**पारुष्येण**

पारुष्यन्तु कारणं विनापि ताडनं रोषभाषणं वा। भासस्य कतिपय-नाटकेषु भटः स्वीयेनाभद्रव्यवहारेण मनोरञ्जनमुपस्थापयति। प्रतिमा-नाटके भटोऽकारणमेव सुधाकारं तृतीयाङ्कस्य प्रवेशके ताडयन् हास्यं प्रस्तौति। तद्यथा—

**भटः**—( चेटमुपगम्य ताडयित्वा ) अङ्घो। दास्याः पुत्र किमिदानीं कर्म न करोषि। ( ताडयति )

**सुधाकारः**—ताडय माम्। ताडय माम्।

**भटः**—ताडिते त्वं किं करिष्यसि

**सुधाकारः**—अन्यस्य मम कार्तवीर्यस्य बाहुसहस्रं नास्ति।

**भटः**—बाहुसहस्रेण किम् कार्यम्।

**सुधाकारः**—त्वां हनिष्यामि।

**भटः**—एहि दास्याः पुत्र मृते मोक्ष्यामि। ( पुनरपि ताडयति )

**सुधाकारः**—( रुदित्वा ) शक्यमिदानी भर्तः मेऽपराधं ज्ञातुम्।

अत्र रोषवचनस्य ताडनस्य च प्रयोजनं बालाना मनोरञ्जनं व्यतिरिच्य नास्ति किञ्चिदपरम्।

रौद्ररूपप्रदर्शनेन बालानां तु मनोरञ्जनं हास्यनिर्भरं भवत्येव। दूतघटोत्कचे तद्यथा घटोत्कचस्य—

**दष्टौष्ठो मुष्टिमुद्यम्य तिष्ठत्येष घटोत्कचः।**
**उत्तिष्ठतु पुमान् कश्चिद् गन्तुमिच्छेद्यमालयम् ॥**

मृच्छकटिके माथुरद्यूतकरौ संवाहकं बहुविधं द्वितीयेऽङ्के ताडयतः। तत्रैव दर्दुरकमाथुरयोः —

**दर्दुरकः** —परोक्षे खलीकर्तुं शक्यते। न ममाग्रतः खलीकर्तुम्।

(माथुरः संवाहकमाकृष्य घोणायां मुष्टिप्रहारं ददाति, संवाहकः सशोणितं मूर्च्छां नाटयन् भूमौ पतति। दर्दुरक उपसृत्यान्तरयति। माथुरो दर्दुरकं ताडयति। दर्दुरको विप्रतीपं ताडयति।)

**माथुरः** —( प्रसार्यं चक्षुषा ) एवं प्रेक्षिष्ये।

( दर्दुरको माथुरस्य पासुना चक्षुषी पूरयित्वा संवाहकस्यापक्रमितुं संज्ञां ददाति। माथुरोऽक्षिणी निगृह्य भूमौ पतति। )

मृच्छकटिके कर्णाटकलहः षष्ठेऽङ्के हास्यार्थं प्रवर्तित। तद्यथा—

**चन्दनकः** —त्वमात्मनो जातिं न स्मरसि।

**वीरकः** —अरे का मम जातिः।

**चन्दनकः** —( संज्ञां ददाति )।

**वीरकः** —अरे किन्विदम्।

**चन्दनकः** —

**शीर्णशिलातलहस्तः पुरुषाणां कूर्चग्रन्थि-संस्थापनः।**
**कर्तरीव्यापृतहस्तस्त्वमपि सेनापतिर्जातः ॥** ६.२२

अनेनाक्षेपेण वीरकस्य रोषणं भवत्येव। तदप्यत्र हास्यकारणम्।

परतस्तत्रैव पुनस्तयोः केशग्रहणं पादप्रहरणं च भवतः। अनया कलहदिशा हास्यमेवोद्दिष्टम्।

अष्टमेऽङ्के शकारोऽकारणमेव भिक्षुं ताडयति कथयति च—**तत्किमर्थं त्वं जातमात्र एव न प्रव्रजित इति**। वयस्कानां हास्यं मा भवेदत्र, किन्तु बालानां तु भवत्येव।

शकारस्तु ताडनशौण्ड एव चेटं ताडयति, यदाष्टमेऽङ्के स वसन्तसेनां न हन्ति।

विटोऽपि नैसर्गिकं स्वीयं शौर्यं दर्शयति यदा शकारः कथयति—तिष्ठ वसन्तसेने तिष्ठ त्वां मारयिष्यामि।

**विटः** —आः ममाग्रतो व्यापादयिष्यसि। ( इति गले गृह्णाति )

**शकारः**—( भूमौ पतति मोहं नाटयति चेतनां लब्ध्वा ) इत्यादि ।

मालविकाग्निमित्रे इरावती, राज्ञो मालविकाप्रणयं प्रतीत्य रसनामादाय राजानं ताडयितुमिच्छतीत्यभद्रव्यवहारेण सामाजिका हसन्त्येव ।[1] मनोरञ्जनं विहाय नास्ति अन्यत् किञ्चित् प्रयोजनं तत्र । तथैव वर्ततेऽभिज्ञानशाकुन्तलस्य षष्ठाङ्कात् प्राग् धीवरस्य रक्षिभ्यां ताडनम् तद्यथा—

(ततः प्रविशति नागरकः श्यालः पश्चाद्बद्धपुरुषमादाय रक्षिणौ च)

**रक्षिणौ**—(ताडयित्वा)—अरे कुम्भीलक, कथय कुत्र त्वया महारत्नभासुरमुत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् ।

**पुरुषः**—( भीतिनाटितकेन ) प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।

**रक्षिणौ**—तथा, गच्छ रे गण्डभेदक ।

**सूचकः**—जानुक, प्रस्फुरतो ममाग्रहस्तौ ( धीवरं निर्दिश्य ) अस्य ग्रन्थिच्छेदकस्य वधमुमनसः पिनद्धुम् ।

**जानुकः**—गृध्रबलिर्भविष्यसि, शुनो मुखं वा द्रक्ष्यसि ।

## नेपथ्य—वैरूप्यात्

मृच्छकटिके दर्दुरकः स्वपटेन हास्यमुत्पादयति । तद्यथा—

**अयं पटः सूत्रदरिद्रतां गतो ह्ययं पटश्छिद्रशतैरलंकृतः ।**
**अयं पटः प्रावरितुं न शक्यते ह्ययं पटः संवृत एव शोभते ॥** २.१०

पुनश्च शर्विलको यज्ञोपवीतस्योपयोगेन हासयति—

**एतेन मापयति भित्तिषु कर्ममार्गम् । इत्यादि** ३.१६

विदूषकादीनां वेषविकृत्या हास्यं समुपजायते । एतत्तु साधारणदृश्यम् । अन्येषां नायकपात्राणां नेपथ्य-वैरूप्यमत्र समीहितम् । प्रतिमानाटके सीतायां वल्कलधारण-प्रकरणे हास्यप्रिया अवदातिका चेटी परिहासनिमित्तं वल्कलं नेपथ्यगृहात् प्रागेव नेपथ्यपालिनीं विभ्रमयितुं तामपृष्ट्वोपनयति । इदं कर्म न केवलं तस्या अपि तु अपरासां चेटीनामपि परिहासो भवेदित्युद्दिश्य कृतम् ।[2]

---

१. इरावत्या सरोषताडनोद्योगोऽभद्र एव विशेषतस्तत्रैव विदूषकस्य वकुलावलिकायाश्च साक्षीभूतत्वात् ।

२. अवदातिका कथयति—हसितुमिवेच्छामि । न खल्वेकाकिन्या हसितव्यम् ।

अवदातिकाया अयं परिहासो न केवलं चेटीनां कृते समर्थोऽपितु सीतापि तमेव वल्कलं धारयतीति विरूपनेपथ्यधारणात् नेपथ्यजस्य हास्यस्य कारणं जायते। रामेण सीताया नेपथ्यवैरूप्यं दृष्ट्वा समीक्षितम्-

**हसितेन परिज्ञातं क्रीडेयं नियमस्पृहा। १९**

बालचरिते शापस्य हास्यकारि रूपमधोविधं वर्णितम्—

**राजा—**

**कोऽयं विनिष्पतति गर्भगृहं विगाह्य**
**उल्कां प्रगृह्य सहसाञ्जनराशिवर्णः।**
**भीमोग्रदंष्ट्रवदनो ह्यहिपिङ्गलाक्षः**
**क्रोधो महेश्वरमुखादिव गां प्रपन्नः॥ २.४**

**शापः —**

**श्मशानमध्यादहमागतोऽस्मि चण्डालवेषेण विरूपचण्डम्**
**कपालमालातिविचित्रवेषः कंसस्य राज्ञो हृदयं प्रवेष्टुम् ॥२.५**

## मिथ्याभियोगेन

मृच्छकटिकस्याष्टमेऽङ्के शकारो मिथ्याभियोगेन हासयति। स्वयं वसन्तसेनां मारयित्वा पापेभ्य आत्मानं रक्षितु स यत्र यत्र मिथ्या प्रपञ्चयति, तत्र तत्र प्रेक्षकाणां हास उत्पद्यते। तद्यथा

**शकारः —**

( विटं प्रति ) अरे वसन्तसेनां स्वयमेव मारयित्वा मां दूषयित्वा कुत्र पलायसे।

विटस्तं धिक्करोति।

## कालचक्रार्पितं हास्यम्

वैषम्यमेव हासयति कालचक्रोद्भावितम्। तद्यथोरुभङ्गे दुर्योधनस्य भीषणो भाग्यविपर्ययः —

**उद्यत् प्राञ्जलयो रथद्विपगताश्चापद्वितीयैः करै—**
**र्यस्यैकादशवाहिनीनृपतयस्तिष्ठन्ति वाक्योन्मुखाः।**
**भीष्मो रामशराबलीढकवचस्तातश्च योद्धा रणे**
**व्यक्तं निर्जित एव सोऽप्यतिरथः कालेन दुर्योधनः ॥५८**

अत्र लोकैश्वर्यं प्रति महाकालस्याट्टहासः।

## सोल्लुण्ठापवादेन

दूतवाक्ये दुर्योधनः कृष्णमपवदति सोल्लुण्ठम्। तथा हि—

**दुर्योधन.** —

वादरायण, आनीयतां स विहगवाहनमात्रविस्मितो दूतः ।

**( कृष्णं प्रति ) भो गोपालक, तृणान्तराभिभाष्यो भवान् ।**

**अवध्यां प्रमदां हत्वा हयं गोवृषमेव च ।**

**मल्लानपि मुनिर्लज्जो वक्तुमिच्छसि साधुभिः ॥ ३६**

**अभाष्यस्त्वम् ।**

वासुदेवोऽपि दुर्योधनमपवदति तद्यथा—

**शठबान्धव निःस्नेह काक केकर पिङ्गल**

**त्वदर्थात् कुरुवंशोऽयमचिरान्नाशमेष्यति ॥ ३.८**

दुर्योधनः प्रतिवदति—

**करितुरगनिहन्ता कंसहन्ता स कृष्णः**

**पशुकुलनिवासादानुजीव्यानभिज्ञः ॥ ३९**

**हयगजवृषभाणां पालनाज्जातदर्पः । ४०**

**साधु भो जम्भक साधु**

एते संवादांशा हास्यमुद्दिश्य कविना निर्मिताः ।

ऊरुभङ्गे दुर्योधनो मरणकाले कृष्णमेव स्वमृत्युकारणं प्रतिपादयन् तं सोल्लुण्ठमुपहस्य बलरामं ब्रूते—

**तीव्रां भीमगदां प्रविश्य सहसा निर्व्याजयुद्धप्रिय-**

**स्तेनाहं जगतः प्रियेण हरिणा मृत्योः प्रतिग्राहितः ॥ ३५**

अत्र निर्व्याजयुद्धप्रियः प्रसङ्गेऽस्मिन् सोल्लुण्ठं प्रोक्तं हास्यं जनयति ।

बालचरितस्य द्वितीयाङ्कस्यारम्भे चाण्डालयुवतीनां कंसं प्रति सोल्लुण्ठवचनं तं रोषयति । प्रेक्षकाणां हास एव कवेः परं प्रयोजनं प्रतिभाति तस्य प्रकरणस्य । तद्यथा—

**चण्डालयुवतयः** —आगच्छ भर्तः, आगच्छ । अस्माकं कन्यानां त्वया सह विवाहो भवतु ।

**राजा—**

**अहो धृष्टाः खल्वेताश्चाण्डालयुवतयः —**

**क्रोधेन नश्यति सदा मम शत्रुपक्षः**

**सूर्यः शशी हुतवहश्च वशे स्थिता मे ।**

**योऽहं यमस्य च यमो भयदो भयस्य**

**तं मापवादवचनैः परिधर्षयन्ति ॥ २३**

मृच्छकटिके संवाहकमाथुरयोः संवादः सापवादं प्रवर्तते। तद्यथा—

**संवाहकः** —कुतो दास्यामि।

**माथुरः** —पितरं विक्रीय प्रयच्छ।

**संवाहकः** —कुतो मे पिता।

**माथुरः** —मातरं विक्रीय प्रयच्छ।

**संवाहकः**—कुतो मे माता।

मालविकाग्निमित्रे इरावत्याः सोल्लुण्ठवचनं नायकं विषादयति किन्तु सामाजिकान् हासयत्येव। तद्यथा पूरय, पूरय। अशोकः कुसुमं न दर्शयति। अयं पुनः पुष्पत्येव।

अन्यत्रापीरावती सोल्लुण्ठवचनेन हासयति। तद्यथा चतुर्थेऽङ्के—

अस्थान इति सुष्ठु व्याहृतमार्यपुत्रेण। अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयम्, ततो नन्वहं हास्या भवेयम्।

### व्यावसायिकभाषया

द्यूतकारणां व्यावसायिकी विशेषभाषा प्रेक्षकान् हासयत्येव। तद्यथा मृच्छकटिके—

**नवबन्धनमुक्तयेव गर्दभ्या हा ताडितोऽस्मि गर्दभ्या** ॥२.२

'**अत्र गर्दभ्या ताडितोऽस्मि**, इति द्यूतकराणां बोधनीया भाषा। गर्दभी तु वराटिका नाम। गर्दभी पशुविशेष एवेति प्रेक्षका जानन्ति।

अन्यच्च तत्रैव

**कत्ता शब्दो निर्नाणकस्य हरति हृदयं मनुष्यस्य** २.५

तत्रैव द्यूतकर–माथुर–संवाहकानां प्रत्येकशः मम पाठे मम पाठे वचनं हास्यकारि।[1]

दर्दुरकस्यापि वचनं तथैव हास्यं जनयति—

**त्रेता हृतसर्वस्वः पावरपतनाच्च शोषितशरीरः।**<br>**नर्दितदर्शितमार्गः कटेन विनिपातितो यामि** ॥२.९

शर्विलकस्य चोरोचितनमस्कारा हास्याय सन्ति। तद्यथा—

नमो वरदाय कुमारकार्तिकेयाय, नमः कनकशक्तये ब्रह्मण्यदेवाय देवव्रताय, नमो भास्करनन्दिने, नमो योगाचार्याय, यस्याहं प्रथमशिष्यः।

भैक्षवभाषापि हासयति मृच्छकटिके। तथा हि–

---

1. पाठस्तु वार इति व्यावसायिकार्थे प्रयुक्तः।

**शिल मुडिदे तुड मुडिदे चित्त ण मुडिद कोश मुंडिदे ।**
**जाह उण अ चित्त मुडिदे शाहु शुट्ठु शिल ताह मुंडिदे ॥८.३**

## अयुक्तियुक्त-प्रलापेण

कुत्रचिदयुक्तियुक्तप्रलापेण कविर्नाटके हास्यं जनयति । मृच्छकटिके दर्दुरक एवं वदति—

**द्रव्यं लब्धं द्यूतेनैव दारा मित्रं द्यूतेनैव ।**
**दत्तं भुक्तं द्यूतेनैव सर्वं नष्टं द्यूतेनैव ॥ २.८**
**पादेनैकेन गगने द्वितीयेन च भूतले ।**
**तिष्ठाम्युल्लम्बितस्तावद्यावत्तिष्ठति भास्करः ॥ २.११**
**'यः स्तब्धं दिवसान्तमानतशिरा नास्ते समुल्लम्बितः**
इत्यादि २.१२

शकारस्यानर्गलप्रलापस्तु कुकविता-सम्मिश्रो भृशं हासयति । तद्यथा —

**विटः**—किमुच्यते । गन्धर्वो भवान् ।
**शकारः**—कथं गन्धर्वो न भविष्यामि ।

**हिंगूज्ज्वला जीरकभद्रमुस्ता**
**वचाया ग्रन्थिः सगुडा च शुण्ठी ।**
**एषा मया सेविता गन्धयुक्तिः**
**कथं नाहं मधुरस्वर इति ॥ ८.१३**

अन्यत्र—

**शकारः**—पुत्रक, स्थावरक चेट । आगतोऽसि ।
**चेटः**—अथ किम् ।
**शकारः**—प्रवहणमप्यागतम्
**चेटः**—अथ किम् ।
**शकारः**—गावा अप्यागतौ ।
**चेटः**—अथ किम् ।
**शकारः**—त्वमप्यागतः ।
**चेटः**—भट्टारक अहमप्यागतः ।

## वीरोऽपि हास्यः

नाम्ना तु महतो महीयान् किन्तु कर्मणा लघीयाञ्जनो भासेन हास्य

एव गणितः । दूतघटोत्कचे ईदृशो वीरः कर्ण एव । तमधिकृत्य धृतराष्ट्रः कथयति—

**धृतराष्ट्रः**—अहो हास्यः खलु तपस्वी कर्णः ।

**दुर्योधनः**—केन कारणेन

**धृतराष्ट्रः**—श्रूयताम्

**शक्रापनीतकवचोऽर्धरथः प्रमादी ।**
**व्याजोपलब्धविफलास्त्रबलो घृणावान् ।।** २३

ऊरुभङ्गेऽपि हास्य एवाश्वत्थामैवं वदति—

**युद्धोद्यतगरुडपृष्ठनिविष्टदेह—**
**मष्टार्धभीमभुजमुद्यतशार्ङ्गचक्रम् ।**
**कृष्णं सपाण्डुतनयं युधि शस्त्रजालैः**
**संकीर्णलेख्यमिव चित्रपटं क्षिपामि ।। ६० ।।**

अत्र कृष्णं सपाण्डुतनयं क्षिपामीति अश्वत्थामवचनं ह्रेषणमिव हासयति विकत्थनत्वात् । बालचरिते कालियो विकत्थनेन हासं संजनयति । यथा

**लोकालोकमहीधरेण भुवनाभोगं यथा मन्दरं**
**शैलं शर्वधनुर्गुणेन फणिना यद्वच्च यादोनिधौ ।**
**स्थूलाखण्डलहरितहस्तकठिनो भोगेन संवेष्टितम्**
**त्वामेव त्रिदशाधिवासमधुना सम्प्रेषयामि क्षणात् ।।** ४.७

**चतुःसागर पर्यन्ता ससप्तकुलपर्वताम् ।**
**दहेयं पृथिवीं कृत्स्नां किं भुजं न दहामि ते ।। ४.१० ।।**

अत्र कालियस्य' दामोदर-प्रेरण-प्रस्तावः कीटस्य पर्वतक्षेपणमिव हास्यास्पदम् ।

## वृद्धानां नृत्येन

पञ्चरात्रे पाञ्चालेषु विराटेश्वरस्य वर्षवर्धनदिवसे गोपाला नृत्यन्ति । तत्र वृद्धगोपालस्य गानं, नृत्यञ्चोभे हास्यकारिणी स्तः । युवतियुवकानां नृत्येन हास्यं न भवेत् किन्तु वृद्धाना नृत्येन हास्यं भवतीति नित्यं लोके दृश्यते ।

## स्वपराक्रमस्यान्यस्मिन्निक्षेपेण

स्थितिविशेषेषु कश्चिन्महावीरः स्वयंकृतान् पराक्रमानपरस्मिन्न वरकोटिके वीरे निक्षिपति । प्रेक्षकाः तस्य महावीरस्येमं मृषावादं विजानन्तो हास्ये नरे भूयिष्ठमनुरज्यन्ते । तद्यथा पञ्चरात्रेबृहन्नलीभूतोऽर्जुनो विराटे-

श्वरस्य गा हर्तुकामान् कौरवान् स्वयं पराजित्योत्तरं विजयेन विशेषयति । तद्यथा—

**उत्तरः** — अथ किम् । अत्रभवता ( धनञ्जयेन )

> श्मशानाद्धनुरादाय तूणी चाक्षयसायके ।
> नृपा भीष्मादयो भग्ना वयं च परिरक्षिता ॥ २.६१

**राजा**– एवमेतत्

**बृहन्नला**—प्रसीदतु प्रसीदतु महाराजः ।

> अयं बाल्यात्तु सम्भ्रान्तो न वेत्ति प्रहरन्नपि ॥
> कृत्स्नं कर्म स्वयं कृत्वा परस्येत्यवगच्छति ॥ २.६१

**उत्तरः** — व्यपनयतु भवाञ्छङ्काम् । इदमाख्यास्यते,

> प्रकोष्ठान्तरसंगूढं गाण्डीवज्याहतं किणम् ।
> यत्तद्दा दशवर्षान्ते नैव याति सवर्णताम् ॥ २.६३ ॥

**बृहन्नला**—

> एतन्मे परिहार्याणां व्यावतनकृतं किणम् ।[1]
> सन्निरोधविवर्णत्वाद् गोधास्थानमिहागतम् ॥ २.६४ ॥

अन्यस्य पराक्रमस्यापरस्मिन्निक्षेपेणापि हासोत्कर्षोऽस्मिन्नेव नाटके दृश्यते । तद्यथा—

**राजा**—किं कृतं कुमारेण—

**भटः**—कृता नीला नागाः शरशतनिपातेन कपिला

> हयो वा योधो वा न वहति न कश्चिच्छरशतम् ।
> शरैः स्तम्भीभूताः शरपरिकराः स्यन्दनवराः
> शरैश्छन्ना मार्गाः स्रवति धनुरुग्रां शरनदीम् ॥ २.२२ ॥

**राजा**—मा मा भवानेवम्—

> भीष्मं रामशरैरभिन्नकवचं द्रोणं च मन्त्रायुधं
> कृत्वा कर्णजयद्रथौ च विमुखो शेषांश्च तांस्तान् नृपान् ।
> सौभद्रं स्वशरैर्न घर्षयति किं भीतः पितुः प्रत्ययात्
> संसृष्टोऽपि वयस्यभावसदृशं तुल्यं वयो रक्षति ॥ २.२ ॥

इत्यनेन महती-हास्यश्रीभाजनीभूताः सामाजिकाः ।

---

१. अत्रात्मगूहनेन हासः समुपजायते ।

## रोषणेन

अपूर्वैव रीतिर्विलसति नाटकेषु रोषणेन हास्य-जननस्य[1]। पञ्चरात्रे न केवलमभिमन्योः पितरस्तं रोषयन्त्यपि तु विराटेश्वरोऽपि तस्य रोषणेन रमते। तद्यथा—

**राजा**—पुत्रकोऽयं मध्यमो नाम ?

**अभिमन्युः**—श्रूयताम् । येन

> **योक्त्रयित्वा जरासन्धं कण्ठश्लिष्टेन बाहुना ।**
> **असह्यं कर्म तत् कृत्वा नीतः कृष्णोऽतदर्हताम्** ॥ २.५७ ॥

**राजा**—

> **न ते क्षेपेण रुष्यामि रुष्यता भवता रमे ।**
> **किमुक्त्वा नापराद्धोऽहं कथं तिष्ठति यात्विति** ॥ २.५८ ॥

मालविकाग्निमित्रे कालिदासो बकुलावलिकया मालविकां रोषयति क्रीडार्थम् । तद्यथा—

**मालविका**—सखि, अदक्षिण इव भर्ता मे प्रतिभाति यः सर्वं देवीजनमुज्झित्वैकस्य मुखे बद्धलक्ष्यः ।

**बकुलावलिका**—( आत्मगतम् ) चित्रगतं भर्तरि परमार्थतः संकल्प्यासूयति । भवतु क्रीडिष्यामि तावदेतया । ( प्रकाशम् ) सखि भर्तुर्वल्लभैषा ।

**मालविका**—ततः किमिदानीमात्मानमायासयिष्यामि । ( इति सासूयं परावर्तते ।)

इत्यनेन क्रीडार्थं परिहासेन सामाजिकानां हास्यं सम्भवति ।

विक्रमोर्वशीयस्य तृतीयेऽङ्के चित्रलेखा मिथ्यैव नायकस्यान्यया प्रियतमया सह सुखानुभवनं सूचयित्वोर्वशीं विषादयति ।[2]

---

१. भासेन क्षेपेण रोषणाद्धास्यस्य निर्वर्णनमभिमन्युमुखेन कृतम् । तद्यथा—

**अभिमन्युः**—इहात्रभवतो मे पितरः तेन खलु ।

> न रुष्यन्ति मयाक्षिप्ता हसन्तश्च क्षिपन्ति माम् ।
> दिष्ट्या गोग्रहणं स्वन्तं पितरो येन दर्शिताः ॥२.६७॥

२. चित्रलेखा—भवतु । क्रीडिष्यामि तावदेतया । हला दृष्टो मया एष मनोरथलब्धप्रियासमागमनसुखमनुभवन्नुपभोगक्षमेऽवकाशे तिष्ठति ।

## बालानां वचनेन

बालानां वचनेन हास्यं स्वाभाविकमेव क्वचित्तस्य तर्कविहीनत्वात्। तद्यथा ऊरुभङ्गे—

**दुर्योधनः** —गच्छ पुत्र। नाहमागन्तु समर्थः।

**दुर्जयः** —अहं त्वां नेष्यामि।

**राजाः** —बालस्तावदसि पुत्र।

अत्र बालो दुर्जयो पितरं दुर्योधनं नेतुमुद्यत इत्यनेन सकरुणमपि हास्यम्।

श्रेष्ठबालानां भाविमहापराक्रमोचितानि वचांसि आलौकिकत्वेन हास्यं जनयन्ति। तद्यथा बालचरिते संकर्षणस्य वचनम्—

**प्रविश्य रङ्गं कृतलोहमुष्टि तं मुष्टिना मुष्टिकमद्य रुष्टम्।**
**हत्वा चरिष्याम्यनिलप्रचण्ड : प्रलम्बमम्भोदमिवान्तरिक्षे ॥ ५.७ ॥**

**भटः** —एष महाराज। उपसर्पेता भवन्तौ।

**उभौ** —आः कस्य महाराजः।

**भटः** —सर्वस्य जगतोऽस्माकं च।

**दामोदरः** —अद्यप्रभृति न भविष्यति।

## नाम्नैव

क्वचन नाम्नैव हास्यं जन्यते। तद्यथा मृच्छकटिके द्वितीयेऽङ्के दर्दुरक इति नाम। दर्दुरस्तु मण्डूकः। इदं पात्रमात्मानं प्रस्तावयति—

धूर्तस्य माथुरस्य दुराग्रहं श्रुत्वा नन्वयं दर्दुरो मोचयति (संवाहकम्)। पञ्चमाङ्के चेटस्य कुम्भीलक इति नाम हास्यार्थं प्रयुक्तम्।

मृच्छकटिकस्याष्टमेऽङ्के विटो वृद्धश्रृगाल इति शकारेणाभिहितः।

## साहंकारपराक्षेपेण विकत्थनेन

आत्मस्तुत्या सह पराक्षेपेणात्मविकत्थनं प्रतीयते। तदपि हासयति। तद्यथाभिषेके—

**रावणः** — ( सहसोत्थाय ) कासौ कासौ ( असिमुद्यम्य )

**वज्रेभकुम्भतटभेदकठोरधारः**
**क्रोधोपहारमसिरेष विधास्यति त्वाम्।**
**सम्प्रत्यवन्त्वनिमिषा इह मत्करस्थः**
**क्षुद्र क्व यास्यसि कुतापस तिष्ठ तिष्ठ ॥ ५.१६ ॥**

**राक्षसः** —अलमतिसाहसेन ।

अत्रास्थाने शस्त्रोद्यमनमपि हासकारणम् ।

केवलमात्मविकत्थनेन हास्यं जायते। तद्यथा शकारो विटं प्रति मृच्छकटिकस्याष्टमेऽङ्के वदति—भाव भाव, मां प्रवरपुरुषं मनुष्यं वासुदेवकम्' इति। दशमेऽङ्के शकार आत्मानं विकत्थते—

नहि रत्नकुम्भसदृशोऽहं स्त्रियं व्यापादयामि। सामाजिकाः शकारस्य हीनचरित्रं जानन्ति। यदा स आत्मानं रत्नकुम्भसदृशं विशेषयति, तदा प्रेक्षका हसन्त्येव ।

## छायातत्त्वेन

नाटकीयपात्राणि यदा पशुपक्षिरूपेण रङ्गपीठे प्रस्तूयन्ते तदा बालानां तु हास्यं समुपजायत एव। तद्यथा बालचरितेऽरिष्टनेमिर्वृषभरूपधरो मनुष्यवाचा वदति—

**शृङ्गाग्रकोटिकिरणैः खमिवालिखंश्च**
**शत्रोर्वधार्थमुपगस्य वृषस्य रूपम् ।**
**वृन्दावने स ललितं प्रतिगर्जमान-**
**माक्रम्य शत्रुमहमद्य सुखं चरामि ॥** ३.५

**हुङ्कारशब्देन ममेह घोषे स्रवन्ति गर्भा वनिताजनस्य ।**
**खुराग्रपातैर्लिखितार्धचन्द्रा प्रकम्पते सद्रुमकानना भूः** ॥३.६॥

स दामोदरेण पुरुषपात्रेण संलपति ।

ईदृशानां छायापात्राणां पशुव्यवहारो मनोरञ्जक एव। तत्रैवारिष्ट-नेमिर्दामोदरस्य भुजगतो गर्जति वृषभवत् ।

चतुर्थाङ्के पुनः कालियनागरूपधरं पात्रं संस्कृतं वदति—

**कालियः** — आः

**लोकालोकमहीधरेण भुवनाभोगं यथा मन्दरं**
**शैलं शर्वधनुर्गुणेन फणिना यद्वच्च यादोनिधौ ।**
**स्थूलाखण्डलहस्तिहस्तकठिनो भोगेन संवेष्टितं**
**त्वामेव त्रिदशाधिवासमधुना सम्प्रेषयामि क्षणात् ।** ४.७

अत्र कालियस्य विकत्थनं हासं जनयति

## मिथ्याभाषणेन

हास्यप्रधानेषु नाटकेषु प्रारम्भत एव हास्यप्रवृत्तिः सूत्रधारनटीवचनेष्वपि

भूयः प्रचरति । तद्यथा मृच्छकटिके मिथ्याभाषणेन—

**सूत्रधारः** —किमस्माकं गेहे सर्वमस्ति अथवा परिहससि ।

**नटी**—( स्वगतं ) परिहसिष्यामि तावत् । ( प्रकाशम् ) आर्य अस्ति आपणे ।

अत्रैव तृतीयेऽङ्के चारुदत्तश्चौर्यविषयकं संवादमसत्यं मन्यमानः कथयति—

**चारुदत्तः** —भवतु, भोः अलं परिहासेन ।

**विदूषकः** —भोः न परिहासः । प्रेक्षताम् भवान्

चतुर्थेऽङ्के मदनिकाया मिथ्याभाषणं वसन्तसेनां हासयति । तद्यथा—

**मदनिका**—आर्ये एष खलु चारुदत्तस्य सकाशाद् ब्राह्मण आगतः ।

**वसन्तसेना**—चेटि, तस्य सम्बन्धीति कथं त्वं जानासि ।

**मदनिका**—आर्ये स्वसम्बन्धिनमपि न जानामि ।

**वसन्तसेना**—( स्वगतं सशिरःकम्पं विहस्य ) युज्यते । (प्रकाशम्) प्रविशतु ।

तत्रैव शर्विलकस्य वसन्तसेनायाश्च मिथ्याभाषणं प्रेक्षकाणां हासकारकम् । तद्यथा—

**शर्विलकः** (वसन्तसेनां प्रति)—सार्थवाहस्त्वां विज्ञापयति—जर्जरत्वाद् गृहस्य दूरक्ष्यमिदं भाण्डम् । तद् गृह्यताम् ।

**वसन्तसेना**—अहमार्यचारुदत्तेन भणिता—य इममलंकारकं समर्पयिष्यति, तस्मै त्वया मदनिका दातव्या । तत्स एवैतां ते ददाति ।

**शर्विलकः**(स्वगतम्) — अये विज्ञातोऽहमनया । अस्मिन्नेवाङ्के चारुदत्तस्य यथायोगं मिथ्याभाषणं वसन्तसेनां हासयति । तद्यथा—

**वसन्तसेना**—कथं चौरेणापहृतमपि शौण्डीरतया द्यूते हारितमिति भणति ।

**विदूषकः** —तत्तस्य कारणाद् गृह्णातु भवतीमां रत्नावलीम् । किं तावन्न गृह्णाति भवतीमां रत्नावलीम् ।

**वसन्तसेना**—( विहस्य सखीमुखं पश्यन्ती ) कथं न ग्रहीष्यामि रत्नावलीम् ।

अष्टमेऽङ्के भिक्षुः शकारमाक्रोशति । शकारो विटं पृच्छति—किं भणति ।

**विटः** —स्तौति भवन्तम् ।

**शकारः**—स्तुहि, स्तुहि, पुनरपि स्तुहि।

मालविकाग्निमित्रे राजा मिथ्यैव कथयति—

**राजा**—(**इरावतीं प्रति**)—सुन्दरि, न मे मालविकया कश्चिदर्थः। मया त्वं चिरयसीति यथाकथंचिदात्मा विनोदितः।

अत्र सामाजिकाः पूर्वयोरङ्कयोर्वृत्तेन सम्यग्जानन्ति स्म यद् राज्ञो मालविकया भूयिष्ठोऽर्थं आसीत्।[1] अत एव तेषां परिहासः संजायते।

विक्रमोर्वशीयेऽपि नायको यथायोगं मिथ्याभाषणेन सामाजिकान् हासयति। यथा द्वितीयेऽङ्के—

देवि नेदं (पत्रं) मया मृग्यते। अयं खलु परान्वेषणार्थमारम्भः।

## हास्यार्थविशेषयोजनाः

कवयः क्वचिद् हास्यार्थं विशेषयोजनाः प्रवर्तयन्ति। तद्यथा मृच्छकटिके सूत्रधारः सूत्रधारी च हास्यप्रवणौ कृतौ। सूत्रधारस्य विदूषकीकरणं प्रस्तावनायामधोविधं वर्तते।[2]

**सूत्रधारः**—चिरसंगीतोपासनेन शुष्कपुष्करनालानीव मे बुभुक्षया म्लानान्यङ्गानि। स्निग्धगन्धेनोद्दीप्यमानेवाधिकं बाधते मां बुभुक्षा। अथवाहमेव बुभुक्षात ओदनमयं जीवलोकं पश्यामि। नास्ति किल प्रातराशोऽस्मिन् गृहे। प्राणाधिकं बाधते मां बुभुक्षा। आर्ये इतस्तावत्। किमस्माकं गेहेऽशितव्यं न वा।

**नटी**—आर्य सर्वमस्ति

**सूत्रधारः**—किमस्माकं गेहे सर्वमस्ति अथवा परिहससि।

**नटी**—( स्वगतम् ) परिहसिस्यामि तावत्। (प्रकाशम्) आर्य, अस्त्यापणे।

**सूत्रधारः**—( सक्रोधम् ) आ, अनार्ये, एवं तवाशा छेत्स्यति, अभावं च गमिष्यसि। यदिदानीमहं वरण्डलम्बुक इव दूरमुत्क्षिप्य पातितः।

**नटी**—मर्षतु मर्षत्वार्यः परिहासः खल्वेषः।

**सूत्रधारः**—प्रेक्षन्तां प्रेक्षन्तामार्यमिश्राः, मदीयेन भक्तपरिव्ययेन पारलौकिकभर्तान्विष्यते।

---

१. सामाजिकैः श्रुतमासीद्राज्ञो वचनं मालविकां प्रति—
धृतिपुष्पमयमपि जनो बध्नाति न तादृशं चिरात् प्रभृति॥ ३.१९

२. सूत्रधारः कथयति—'अहमप्यस्मादृशजनयोग्यं ब्राह्मणमुपनिमन्त्रयामि।' निमन्त्रणीयो विदूषकः तस्य सजातीयः।

## अर्धविदूषकाणां हास्यजननम्

मृच्छकटिके शर्विलकस्तु विदूषक इव स्वाचारविचारभाषादिभिर्हासयति। तद्यथा–

**मार्जारः क्रमणे मृगः प्रसरणे श्येनो ग्रहालुञ्चने।**

इत्यादि ३.२०

चेटोऽपि तत्र पञ्चमाङ्केऽर्धविदूषक एव हासयति यदा स कथयति–

**वंशं वादयामि सप्तच्छिद्रं सुशब्दं वीणां वादयामि सप्ततन्त्रीं नदन्तीम्।**
**गीतं गायामि गर्दभस्यानुरूपं को मे गाने तुम्बरुर्नारदो वा॥ ५.१२**

'स विदूषकं संज्ञापयितुं तं प्रति लोष्टगुटिकाः क्षिपति।' इत्यनेन विदूषकोचितव्यवहारेण चेटः प्रेक्षकान् हासयति।

पञ्चमाङ्के चेटविदूषकयोः संवादश्चेटस्य विदूषकेण साम्यं प्रतिपादयति, हास्यं च जनयति। तद्यथा—विदूषकः —का एषा का।

**चेटः** —अरे त्वमिदानीमिन्द्रमहकामुक इव सुष्ठु किं काकायसे

## अनुक्रोशानर्हेऽप्यनुक्रोशेन

शर्विलको निराशो गत इति हार्दिकी चिन्ता चारुदत्तस्य हासयत्येव सामाजिकान्। चारुदत्तः कथयति–

ततः सुहृद्भ्यः किमसौ कथयिष्यति तपस्वी सार्थवाहसुतस्य गृहं प्रविश्य न किञ्चिन्मया समासादितम्।

## अज्ञानवशाद् भाषणेन

यदि नाम किमपि वृत्तं पात्रेणाज्ञातं भवति सामाजिकैश्च ज्ञातं भवति तदा तत् पात्रमज्ञानवशाच्छुद्धभावेनायुक्तं वदेत्तर्हि तस्यायुक्तभाषणस्य कारणं विदानाः प्रेक्षका हसन्त्येव। पात्रस्य शुद्धभावस्तत्र हास्यं वर्धयति। तद्यथा मृच्छकटिके प्रेक्षकाश्चतुर्थेऽङ्के विज्ञापिताः सन्ति यद् वसन्तसेनायै तस्या अलंकाराश्चोरेणोपनीताः। तत्रैव विदूषकस्तस्याः पुरतोऽसत्यं वदति यच्चारुदत्तेनालङ्कारा द्यूते हारिताः। अनेनासत्येन विदूषकस्य शुद्धभावेन च प्रेक्षका हसन्त्येव। पंचमेऽङ्के चोरेणालंकारस्य वसन्तसेनायै प्रदानं तस्याश्चारुदत्तं प्रति रत्नावली-ग्रहणेन सौमनस्यं चाविदानो विदूषकः स्वक्षुद्रमत्या वसन्तसेनां भृशं गर्हयते।[1] एतत्सर्वं प्रेक्षकाणां हासस्य कारणम्। विदूषको

१. विदूषकस्यायुक्तं भाषणं श्रुत्वा चारुदत्तो वदति—वयस्य, अलमिदानीं सर्वपरिवादमुक्त्वा। (स्वगतञ्च) गुणहार्योऽयं जनः (वसन्तसेना)

ऽज्ञानवशात् पुनरपि वदति—मया ज्ञातम् । अल्पमूल्या रत्नावली । बहुमूल्यं सुवर्णभाण्डमिति न परितुष्टा परं याचितुमागता ।

## असामान्यध्वनिविन्यासेन

कतिपयपात्राणि स्वकीये भाषणेऽसामान्यध्वनीः प्रयुञ्जते । तद्यथा मृच्छकटिकस्य षष्ठेऽङ्के चन्दनकः --

खल-खत्ति-खडो-खडट्टो विसअ-कण्णाट-कण्ण-प्पावरणअ-दविड-चोल-चीणबब्बर-खेर-खान-मुख-इत्यादि ।

अत्र ध्वनीनामसाधारणत्वमेव हास्यकारणम् ।

## संज्ञादानेन

परिहासमुद्दिश्य कश्चिज्जनः कमप्युपहसितु संज्ञां प्रयुङ्क्ते । ततो हास्यं जायते । एतादृशस्य साङ्केतिकप्रयोगस्योदाहरणं मृच्छकटिकेऽधोविधं विकसति—

( वीरको नाट्येन संज्ञां ददाति )

**चन्दनकः** —अरे किं न्विदम् ।

**वीरकः** —अरे शृणु शृणु

**जातिस्तव विशुद्धा माता भेरी पितापि ते पटहः ।**
**दुर्मुख करटकभ्राता त्वमपि सेनापतिर्जातः ॥ ६.२३**

## कुकाव्येन

मृच्छकटिके शकारस्य कुकाव्यं प्रेक्षकान् हासयति । तद्यथा

**बहुकुसुमविचित्रता च भूमिः**
**कुसुमभरेण विनामिताश्च वृक्षाः ।**
**द्रुमशिखरलतावलम्बमानाः**
**पनसफलानीव वानरा ललन्ति ॥ ८.८**

**अथ च**

**नभोमध्यगतः सूर्यः दुष्प्रेक्ष्यः कुपितवानरसदृक्षः ।**
**भूमिर्दृढसन्तप्ता हतपुत्रशतेव गान्धारी ॥ ८.१०**

तस्योत्प्रेक्षा हास्यावलम्बिन्यो विभान्ति । तद्यथाष्टमेऽङ्के आगतं प्रवहणमुत्प्रेक्षते वृद्धशूकर इव घुरघुरायमाणं लक्ष्य इति ।

शकारोऽधिकरणिकायात्मानं निवेदयति—

**राजश्वसुरो मम पिता राजा तातस्य भवति जामाता ।**
**राजश्यालोऽहं ममापि भगिनीपती राजा ॥ ९.७**

## प्रकृतेरस्थैर्येण

अस्थैर्यस्य परं निदर्शनं मृच्छकटिके शकार एव। अधिकरणिकस्तमुपवेष्टुं कथयति। ततः परं शकारः —

आम्, आत्मीयैषा भूमिः। तद्यत्र मह्यं रोचते तत्रोपविशामि। ( श्रेष्ठिनं प्रति ) एष उपविशामि। ( शोधनकं प्रति ) नन्वत्रोपविशामि। ( इत्यधिकरणिकमस्तके हस्तं दत्त्वा ) एष उपविशामि। ( इति भूमावुपविशति। )

## विलोमवचनेन

विक्रमोर्वशीये प्रथमेऽङ्के दानवेनापहृतोर्वशी पुरूरवसा प्रत्यानीता। सा स्वत्रातारं राजानमवलोक्य कथयति–**पकृता खलु दानवेन्द्रसरम्भेण**।[१] एतत्तु विलोमं वचनमपकारिणो दानवेन्द्रस्य विषये। सामाजिका अनेन वचनेन नायकयोः प्रणयस्य प्रथमचरण प्रति दत्तसङ्केता हास्यमनुभवन्ति।

## रहोभावोद्घाटनेन

विक्रमोर्वशीये नाटक उर्वशी प्रथमेऽङ्के पुरूरवसोऽचिरदर्शनेनातृप्ता प्रस्थानविधा उत्पतन–भङ्गं रूपयित्वा चित्रलेखा कथयति—

अम्मो लताविटपे एषैकावली वैजयन्तिका लग्ना। [ सव्याजमुपसृत्य राजानं पश्यति ] सखि चित्रलेखे मोचय तावदेनाम्।

सख्या रहःप्रणयव्यपदेश एवोर्वशी–वचनमिति विजानन्ती विलोक्य विहस्य च वदति—आम्, दृढं खलु लग्ना सा। अशक्यं मोचयितुम्।

**उर्वशी**—अलं परिहासेन। मोचय तावदेनाम्।[१]

**चित्रलेखा**—आम्, दुर्मोच्येव मे प्रतिभाति। तथापि मोचयिष्ये तावत्।

**उर्वशी**—( स्मितं कृत्वा ) प्रिय सखि स्मरस्व खल्वेतदात्मनो वचनम्।

सूक्ष्मेक्षिकया दृश्येषु रहःप्रणयपटलेषु सामाजिकानामन्तर्दृष्टिं विदधाना दूती हास्यं सृजति। तद्यथा विक्रमोर्वशीये द्वितीयेऽङ्के चित्रलेखा-उर्वश्या सह संवादेन—

---

१. अग्रेऽपि द्वितीयेऽङ्के उर्वशी चित्रलेखां स्मारयति—सखि तदा हेमकूटशिखरे लताविटपेन क्षणविघ्निताकाशगमनां मामुपहस्य किमिदानी पृच्छसि क्व गम्यत इति।

**उर्वशी**—(तिरस्करिणीमपनीय) अहो लघुत्वयानवेक्षितमुज्झितास्मि ।

**चित्रलेखा**—( सस्मितम् ) सखि इतो मुहूर्तादेव ज्ञास्यामि का कामुज्झिष्यतीति । आचारं तावत् प्रतिपद्यस्व ।

## कराम्बुजवृतेन लोचनेन

विक्रमोर्वशीये नायिका राज्ञो लोचने कराभ्यां वृत्वा तृतीयेऽङ्के सामाजिकान् हासयति"

## उन्मत्ताचरणेन

प्रतिज्ञायौगन्धराणयस्य तृतीयेऽङ्क उन्मत्ताचरणं यौगन्धरायणदीनां विक्रमोर्वशीये च नायकस्य राज्ञश्चतुर्थेऽङ्के लतावृक्षादीनामुर्वशीहरणेऽध्यारोपेणापवादेन च कारणत्वं विज्ञापनं वैरसाधनञ्च भूयिष्ठं हासयति सामाजिकान् ।

# नायकानामन्तर्धिः

भावप्रधानं हि नाट्यं भवति। तत्र कस्यचित् पात्रस्य भूयिष्ठा भावात्मकप्रतिक्रियाः प्रेक्षकाणां कृते साक्षाद् विधातुं कविर्बहुविधानुपायान् कल्पते। तेषु पात्राणामन्तर्धिरन्यतमो विशेषमहत्त्वं भजते। रङ्गे किञ्चित्पात्रं प्रेक्षकैर्दृश्यते किन्तु रंगस्थैरन्यपात्रैर्न दृश्यते' इतीदृशं विधानमन्तर्धिः संज्ञितम्।[1]

कावश्यकतेदृशस्यविधानस्य ? पूर्वोक्तमन्तरितं पात्रं यदि नाम समक्षं भवेत्तर्हि अन्येषां पात्राणां तास्ताः स्वीकारोक्तयो भावोद्गाराः प्रतिक्रियाश्च तस्य समक्षं न भवेयुरन्यथा वा भवेयुः। नाटकीयानुभावानामनेनोपायेनोत्कर्षो लभ्यते उभयपक्षतः —अन्तर्हितो जनो, येभ्योऽन्तर्धीयते चेति। उभयौ परप्रत्ययचिन्ताऽग्रस्तौ स्वतन्त्रतया स्वात्मानं प्रकटयतः।

प्रतिभासम्पत्त्यैव कविः क्वचिद् वस्तु-संरचनावैचित्र्येणान्यत्र पात्रप्रकृतिवैचित्र्येण देशकालवैशिष्ट्येन वान्तर्धिं प्रयुज्य चमत्कारं जनयति।

## कालिदासीय—रूपकेषु

अभिज्ञानशाकुन्तलस्य प्रथमाङ्के नायक आश्रमद्वारमुपेत्य दूरतो युवतीनामालापं शृणोति—इत इतः सख्यौ। तस्यां दिशि परिक्रम्यावलोक्य च निपुणं निरूप्य स कथयति—

**"अहो मधुरमासां दर्शनम्"..............'यावदिमां छायामाश्रित्य प्रतिपालयामि।**

तत्रान्तरित एव स युवतीभिर्न दृश्यते किन्तु तासां संलापं सम्यक् शृणोति।[2] अन्तर्धिं विना कथमन्यथा स शृणुयाच्छकुन्तलादीनामधो वचनम्—

हला अनसूये, अतिपिनद्धेन वल्कलेन प्रियंवदया दृढं नियन्त्रितास्मि। शिथिलय तावदेनत्।

**प्रियंवदा**—( सहासम् ) अत्र पयोधरविस्तारयितृ आत्मनो यौवनमुपालभस्व। इत्यादि।

तृतीयाङ्के पुनर्दुष्यन्तो नायिकां विटपान्तरेणऽन्तर्धिं गतोऽवलोकयति—

---

१. एतादृशस्यादृष्टपात्रस्य परिचयो मालविकाग्निमित्रे चतुर्थेऽङ्के वर्ततेऽधोविधम्। विदूषकः —'कोऽप्यदृष्टः श्रोष्यति' इति।

२. नायकः कथयति—भवतु, पादपान्तर्हित एव विस्रब्धं तावदेनां पश्यामि।

**अये लब्धं नेत्रनिर्वाणम् । श्रोष्यामि आसां विश्रम्भकथितानि ।** शृणोति च शकुन्तलयैव स्वपत्रवाचनम्--

**तव न जाने हृदयं मम पुनः कामो दिवापि रात्रावपि ।**
**निर्घृण तपति बलीयस्त्वयि वृत्तमनोरथान्यङ्गानि ॥**

ततः परम्--

**राजा**--( सहसोपसृत्य )

**तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।**

षष्ठाङ्केऽन्तर्धिविधानस्य बाहुल्यं विलसति । प्रथमं तावत् सानुमती नामाप्सरास्तिरस्करिणीप्रतिच्छन्नोद्यानपालिकयोः पार्श्ववर्तिनी भूत्वा तयोर्वार्त्तां शृणोति । पश्चात् तत्रैव शकुन्तलाविप्रयोगसन्तप्तो नायको विदूषकश्चायातौ । यदा उभौ परिक्रामतः, तदा सानुमती अनुगच्छति कथयति च ।

**लता संश्रिता द्रक्ष्यामि तावत् सख्याः प्रतिकृतिम् । ततोऽस्या भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि ॥**

सास्मिन् प्रकरणे केवलं प्रेक्षकाणां सूचनायाधोविधं निवेदयति--

१. स्थाने खलु प्रत्यादेश-विमानिताप्यस्य कृते शकुन्तला क्लाम्यतीति ।
२. रमणीयः खल्वन्तर्धिविधिना विसंवादितः ।
३. अपरिच्छिन्नेदानीं ते सन्ततिर्भविष्यति ।
४. श्रुतं मया शकुन्तला समाश्वासयन्त्या महेन्द्रजनन्या मुखाद् यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथाचिरेण धर्मपत्नी भर्त्राभिनन्दिष्यतीति ।
५. यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि । एष वैचित्र्योपपन्नश्च-मत्कारोऽन्तर्धियोजनयैव संसाधनीयो नान्यथेति निश्चप्रचम् ।

अस्मिन्नेवाङ्केऽदृष्टरूपो मातलिर्विदूषकं प्रत्यवनतशिरोधरमिक्षुमिव त्रिभङ्गं करोति । राजा तं रक्षितुमुदग्रोऽपि तं वा मातलिं वा न पश्यति । मातलिं तदा राजा सम्बोधयति--**भो स्तिरस्करिणीगर्वित इत्यादि ।** अत्रान्तर्धिस्तिरस्करिणीप्रयोगमुपपन्नः

विक्रमोर्वशीयस्य द्वितीयाङ्के नायिकोर्वशी तस्याः सखी चित्रलेखा च

तिरस्करिणी-प्रतिच्छन्ने भूत्वा नायकविदूषकयोर्मन्त्रणं शृणुतः। सा नायकं प्रति भूर्जपत्रं प्रेषयति। तद् दृष्ट्वा विदूषको निवेदयति-ननु अदृष्टयोर्वंश्या भवतः परिदेवितं श्रुत्वा समानानुरागसूचकान्यक्षराणि विसृष्टानि स्युः। चित्रलेखा तिरस्करिणीमपनीय राजानमुपैति। उर्वशी पश्चात्तथैव करोति।

द्वितीयेऽङ्के देवी लताविटपान्तरिता राज्ञो विदूषकस्य च विस्रब्ध-मन्त्रितानि शृणोति स्वप्रतिक्रिया व्यनक्ति च।

तृतीयाङ्क उर्वशी चित्रलेखा चान्तर्हिते शृणुतो राज्ञः स्वैरालापम्। सा तत्र शृणोति नायकोद्गारम्—

**अयं तस्या रथक्षोभादंसेनांसो निपीडितः।**
**एकः कृती शरीरेऽस्मिन् शेषमङ्गं भुवो भरः॥ ३.११**

देव्याश्च वचनम्—

अद्य प्रभृति या स्त्रियमार्यपुत्रः प्रार्थयते या चार्यपुत्रस्य समागमप्रणयिनी तया सह मया प्रीतिबन्धेन वर्तितव्यम्।

उर्वशी तिरस्करिणीमपनीय पृष्ठतो गत्वा राज्ञो नयने संवृणोति।

मालविकाग्निमित्रस्य तृतीयाङ्के राजा विदूषकश्च लतान्तरितौ भूत्वा अन्तर्धिं प्रकल्पयतः शृणोति च नायिकाया मनोभावान्। तद्यथा—

**राजा**—सखे, इतस्तावदावां लतान्तरितौ भवावः।

**मालविका**—हृदय, निरवलम्बनादतिभूमिलंघिनो मनोरथाद्विरम। किं मामायासय।

( विदूषको राजानं वीक्षते )

**राजा—प्रिये, पश्य वामत्वं स्नेहस्य—**

**औत्सुक्यहेतुं विवृणोषि न त्वं**
**तत्त्वावबोधैकफलो न तर्कः।**
**तथापि रम्भोरु करोमि लक्ष्य—**
**मात्मानमेषां परिदेवितानाम्॥ ३.१०**

**चरणान्तनिवेशितां प्रियायाः**
**सरसां पश्य वयस्य रागलेखाम्**
**प्रथमामिव पल्लवप्रसूतिं**
**हरदग्धस्य मनोभवद्रुमस्य॥ ३.११**

**नवकिसलयरागेणाग्रपादेन बाला**
**स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन ।**
**अकुसुमितमशोकं दोहदापेक्षया वा**
**प्रणमितशिरसं वा कान्तमार्द्रापराधम् ॥** ३.१२

**विदूषकः**—प्रहरिष्यति तत्रभवति त्वामपराद्धम् ।

**राजा**—मूर्ध्ना प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य ईदृशी शृङ्गारवार्तान्तर्धिविकल्पनं विना न साध्येति विन्दन्त्येव नाट्यविदः ।

अत्रैव सम्यगुक्तं निपुणिकया यत्परिहासनिमित्तं कुत्राप्यदृष्टेन भर्त्रा भवितव्यम् ।

अस्मिन्नेव तृतीयेऽङ्केऽदृष्टे इरावती निपुणिका चैकतो मालविकां पश्यतः, अन्यतश्च राजा विदूषकश्च तां पश्यतः । इदमेव माहात्म्यमन्तर्धिविधानस्य । अत एव प्रेक्षका राज्ञो मुखाच्छृण्वन्ति—

**राजा**—साधु वकुलावलिके साधु

**भावज्ञानानन्तरं प्रस्तुतेन**
**प्रत्याख्याने दत्तयुक्तोत्तरेण**
**वाक्येनेयं स्थापिता स्वे निदेशे**
**स्थाने प्राणाः कामिनां दूत्यधीनाः ॥**

अन्तर्धिविधानस्यात्र विशेषोपयोगो दृश्यते यदिरावती अन्तर्धिं प्रपन्ना यद्राज्ञो मुखाच्छृणोति तदेव सोल्लुण्ठं राजानं श्रावयति । तद्यथा ।

**इरावती**—पूरय, पूरय अशोकः कुसुमं न दर्शयति । अयं पुनः पुष्पत्येव ।[1]

चतुर्थेऽङ्के पुनः राजा विदूषकश्च प्रथमं भित्तिगूढौ बभूवतुः । पश्चात्तौ गवाक्षमाश्रित्य नायिकां तस्याः सखी च विलोकयन्तौ स्थितौ । अस्यां स्थितौ निगूढो राजा मालविकाया स्वात्माभिरुचिं स्वीकृतां शृणोति—सखि, तदा संभ्रमदृष्टे भर्तृ रूपे यथा न वितृष्णास्मि तथाद्यापि मया भावितोऽवितृष्णदर्शनो भर्ता ।

पञ्चमेऽङ्के प्रतिहारी प्रमुखाल्लोकादपसृत्य स्तभान्तरिता भवति । सा ततो राज्ञो विदूषकस्य च संवादं शृणोति ।

---

१—इदमिरावती-वचनं राज्ञोऽधोलिखितश्लोकं प्रसज्य कथितम्

**धृतिपुष्पमपि जनो बध्नाति न तादृशं चिरात् प्रभृति**
**स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥** ३.१९

## भासनाटकेषु

अविमारकेऽन्तर्धियोजना चतुर्थेऽङ्के वर्तते। तदनुसारेण विद्याधरो नायकायाङ्गुलीयकमेकं ददाति। तदंगुलीयकं दक्षिणाङ्गुल्या धारयन्नदृश्यो भवति। स्वयं नायकः तत्प्रभावं वर्णयति—

**न ज्ञायते चास्ति च मे शरीरम् ॥४.१७**

विद्याधरानुसारेण—**अन्तर्हितश्चान्तर्हितस्पृष्टश्च तत्स्पृष्टश्चान्तर्हिता भवन्तीति निश्चयः।**

विदूषको ऽङ्गुलीयकधारणेनान्तर्हितमविमारकं सम्बोधयति--

**प्रथम शुद्धो ऽविमारकः। इदानीं मायाविमारकः संवृत्तः। एवं मायावित्तक, कस्मात्त्वं कन्यापुरे प्रच्छन्नरूपो न चरसि।**

अपूर्वोऽयमन्तर्धिर्यस्मिन्नदृष्टोऽपि जनो दृष्टजनेन सह संवदति। तत्तु पञ्चमाङ्के सविस्तारं प्रपञ्चितम्। अन्तर्हिता अविमारकविदूषकौ संवदतः।

प्रतिमाया देशान्तर्धेरुदाहरणं दृश्यते। तत्र षष्ठाङ्के भरतः कैकेयी प्रेक्षितुं तस्याश्चतुःशालस्यान्तिकं गच्छति। सा प्रतिहार्या निवेदिता तया सह प्रविशतीति भासेन वर्णितम्। तत्र तां दर्शको भरतः प्रविशति। अनेन स्पष्टं भवति यत् कैकेयी प्रागेव रङ्गस्यापरकक्षे आसीत् किन्तु आहार्यविधानेन सा पूर्वमदृष्टाभवत्। तत्र गत्वा प्रतिहारी तस्यै भरतागमनं निवेदयति। तस्मात् स्थानात् सा परिक्रम्य स्वकक्ष एव भरतं द्रष्टुं प्रचरिता। चतुश्शालव्यवधानेन भरतस्तां तत्र न पश्यतीत्यन्तर्धिः कल्पितः। अस्मिन् प्रकरण एकस्मात् कक्षादपरकक्षगमनं 'प्रविशतीति' संकेतेन निर्दिष्टम्।

स्वप्नवासवदत्ते चतुर्थाङ्के नायिकाद्वयं नायकदृष्टिं परिहन्तुं माधवी लतामण्डपं प्रविशति। तत्र नायिके विदूषकनायकयोरात्मविषयकसंवादं शृणुतः। तद्यथा—

**विदूषकः**—का भवतः प्रिया? तदानीं तत्रभवती वासवदत्ता, इदानी पद्मावती वा।

**राजा**—किमिदानी भवान् महति बहुमान-संकटे मां न्यस्यति' इत्यारभ्य।

**दुःखं त्यक्तुं बद्धमूलोऽनुरागः स्मृत्वा स्मृत्वा याति दुःखं नवत्वम्।**
**यात्रा त्वेषा यद् विमुच्येह बाष्पं प्राप्तानृण्या याति बुद्धिप्रसादम् ॥**

इति यावत्। अन्तर्धिं **विना** नैतादृशानां नायकभावानां नायिका-श्रवणगोचरता सिध्येत। तत्रैवास्मात् कारणाद् राज्ञो मिथ्यावादः कं न सहृदयं भूयिष्ठं प्रीणयति। तद्यथा—

**शरच्छशाङ्कगौरेण वाताविद्धेन भामिनी।**
**काशपुष्पलवेनेदं साश्रुपातं मुखं मम॥** ४.७

चारुदत्ते कालकारितोऽन्तर्धिः प्रयुक्तः? तत्र प्रथमाङ्के वसन्तसेना शकारविटाभ्यामात्मानं रक्षन्ती तमोनिगूढा भवति। शकारः कथयति—भाव, न दृश्यते। विटः कथयति—

**हन्त वञ्चिताः स्मः। वसन्तसेने, उपलब्धेदानीमसि —**
**कामं प्रदोषतिमिरेण न दृश्यसे त्वम्'** ॥ १.१८
**दृष्टिर्विफलतां गता** ॥ १.१९
**उन्मीलितापि दृष्टिर्निमीलितेवान्धकारेण** ॥ १.२१

नाचिरमन्तर्धिंगता वसन्तसेना ततः चारुदत्तभवनं प्रविश्यात्मानं रक्षति। अन्तर्धिं गतं पात्रमसाधारणं कर्म करोति। तदपि वर्णितमत्र। यथा हि प्रथमाङ्के—

**शकारः**—साधु वसन्तसेने साधु। अन्धकारं कृत्वा अन्तरा वञ्चितो भावः। अहं तावद् वञ्चितः कूटकपटशीलया। सर्वथा दुष्करं कृतम्।[1]

तत्रैव चतुर्थाङ्के रंगपीठस्यापरभागे वर्तमानत्वात् वसन्तसेनान्तर्धिं गता सज्जलकस्य मदनिकायाश्चा वार्तालापं शृणोति। यथास्थानं सा स्वकीया भावात्मकप्रतिक्रिया व्यनक्ति। सज्जलके प्रत्यक्षीभूते सा तस्य वचन-मेवाधृत्य तं प्रति संवदतीति चमत्कारोकर्षः।

अभिषेकनाटके द्वितीयाङ्के हनुमान् स्वोपज्ञं शरणं गृहीत्वान्तर्धिं गच्छति। तद्यथा—

एनमशोकपादपमारुह्य कोटरान्तरितो भूत्वा दृढं वृत्तान्त ज्ञास्यामि। (तथा करोति)

कोटरस्थित एव हनुमान् यथादृष्टं यथानुभूतं च स्वानुभावान् प्रकट-यति—**न शक्नोमि रोषं धारयितुम्। भवतु, अहमेवार्यरामस्य कार्यं साधयामि।**

---

१. मृच्छकटिकेऽपि १.३५

## कुन्दमालायाम्

कुन्दमालायाः प्रथमाङ्के कालकृतोऽन्तर्धिः प्रयुक्तः । तत्र सीतासमीपमागतो वाल्मीकिः कथयति—

इयमन्धकार-संरुद्धतया दृष्टि-संचारस्य न दृश्यते । अतः शब्दापयिष्ये । अयमहं भोः ।

तृतीयेऽङ्के सीता उन्नत-गम्भीर-शीतलं लताजालं प्रविश्यान्तर्धिं गच्छति । तस्मात् स्थानात् सा रामलक्ष्मणयोर्वार्तालापमात्मविषयकं शृणोति स्वप्रतिक्रियां च व्यनक्ति । सानन्तरं कथयति—

आर्यपुत्रेण यावन् न प्रेक्ष्ये, तावदितोऽपसरामि ।

चतुर्थेऽङ्केऽन्यविधोऽन्तर्धिः प्रयुक्तः । तद्यथा सीतया वर्णितम्—'मुनिप्रसाद एष तपोवनवासिनीनां स्त्रीणामेतस्मिन् दीर्घिकातीरे पुरुषनयनानामगोचरता ।'

तत्र प्रतिकृति , बिम्बम्, छाया वा स्त्रीणां दर्शनीयासीत् । राम- सीता शरीरतः न पश्यति, केवलं प्रतिमासीतां पश्यति । तत्राधोविधः संवादः कविना विन्तयते—राम- ( विलपन् ) गाढमालिंग वैदेहि ।

**सीता**—अनपराद्धास्मि ।

**रामः**—देहि मे दर्शनं प्रिये । इत्यादि

सीता रामस्य वचनानि शृणोति, किन्तु रामः सीता याः प्रतिवचनं न शृणोति । स सीताया उत्तरीयं पश्यति, तद्गृह्णाति च ।

## मृच्छकटिके

मृच्छकटिके गवाक्षकेणापवारितशरीरा मदनिकां शर्विलकं च पश्यन्ती तयोर्वार्तां शृण्वन्ती वसन्तसेना वर्तते । सा स्वगतं कथयति—कथमेषा केनापि पुरुषकेण सह मन्त्रयन्ती तिष्ठति । न खल्वाकारयिष्यामि । कथं पररहस्यम् । तन्न श्रोष्यामि । कथं मम सम्बधिनी कथा न तच्छ्रोष्याम्यनेन-गवाक्षेणापवारितशरीरा ।

स्वाभरणापहरणस्य वृत्तस्यानेन विधिना श्रवणे तस्याः प्रतिक्रिया रस-भावनिर्भरा नान्यथोपनेयाः सन्ति । अन्यच्चैतद्वृत्तज्ञानेन विना तस्या भावि व्यवहारस्य विस्मयास्पदं चारु प्रवर्तनं न सम्भवेत् । तद्यथा—

वसन्तसेना –प्रतीच्छत्वार्यो मदनिकाम्

**शर्विलकः**—भवति न खल्ववागच्छम्

वसन्तसेना—अहमवगच्छामि

शर्विलकः —कथमिव ।

वसन्तसेना—अहमार्यचारुदत्तेन भणिता–य इममलंकारं समर्पयिष्यति तस्मै त्वया मदनिका दातव्या । तत् स एवैतां ते ददात्येवमार्येणावगन्त—व्यम् । मदनिकां प्रति ) दत्तासि, आरोह प्रवहणम् । विदूषकेण सह तस्य वार्तालापः पूर्वोक्तमन्तर्धि–प्रकरणमपेक्षते । तद्यथा ।

विदूषकः —तत्रभवांश्चारुदत्तः शीर्षेऽञ्जलिं कृत्वा भवतीं विज्ञापयति मया तत्सुवर्णभाण्डं विश्रम्भादात्मीयमिति कृत्वा द्यूते हारितम्

वसन्तसेना—( स्वागतम् ) कथं चौरेणापहृतमपि शौण्डीरतया द्यूते हारितमिति भणति । अत एव काम्यते

विदूषकः —तत्तस्य कारणाद् गृह्णातु भवतीमां रत्नावलीम्

वसन्तसेना—आर्य विज्ञाप्यतां द्यूतकरमहमपि प्रदोषे आर्यं प्रेक्षितु–मागच्छामि



# नाटकेषु कथान्तरसन्निवेशः

नाटकेषु क्वचिद् भूतकालिकवृत्तस्याख्यानं कथान्तरमिति संज्ञया कालिदासेन मालविकाग्निमित्रे लिखितम् । तद्यथा—मालविकावृत्तान्तः पञ्चमाङ्के—

**विदूषकः** —तेन हि कथयतु भगवती अत्रभवत्या वृत्तान्तमशेषम् ।

ततः परं परिव्राजिका मालविकाजीवनवृत्तमाद्यन्तं निवेदयति । अनेन-कथान्तरेण तत्र नाटकस्य मुख्यकथा साम्प्रतमवरुद्धासीत् ।

विक्रमोर्वशीये नायिका स्वलतारूपपरिणतिकथां कथयति । तद्यथा—

पुरा भगवता कुमारेण शाश्वतं कुमारव्रतं गृहीत्वा अकलुषो नाम गन्ध मादनकच्छोऽध्यासितः । कृतश्चैष विधिः—'या किल स्त्री इमं प्रदेशं प्रविशति सा लता भावेन परिणस्यति' इति। कृतश्चायं शापान्तो गौरीचरण-रागसम्भव मणि विना ततो न मोक्ष्यत इति । ततोऽहं गुरुशापसम्मूढ-हृदया देवतासमयं विस्मृत्य अनुगृहीतानुनया स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा। प्रवेशानन्तरं च काननोपान्तवर्तिवासन्तीलताभावेन परिणतं मे रूपम्। अहो संगमनीयोऽयं मणिः। अतः खलु महाराजेनालिङ्गित-मात्रैव प्रकृतिस्थास्मि संवृत्ता ।

अभिज्ञानशाकुन्तले शकुन्तलोत्पत्तिकथा कण्वाश्रमपरिपालनाख्यानञ्च प्रथमाङ्केऽनसूयया श्रावितम् । तद्यथा ।

शृणोत्वार्यः । अस्ति कोऽपि कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः। तमावयोः प्रियसख्याः प्रभवमवगच्छ। उज्झितायाः शरीरसंवर्धना-दिभिस्तातः काश्यपोऽस्य पिता। गोतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नामाप्सराः प्रेषिता नियम-विघ्नकारिणी। ततो वसन्तोदाररमणीये समये तस्या उन्मादयितृ रूपं प्रेक्ष्य—इत्यादि

एतस्मिन्नाटकत्रये नायिकाया भूतकालिकं वृत्तं निवेदितम्। अन्यविध-मेव कथान्तरमभिज्ञानशाकुन्तलस्य षष्ठाङ्के विद्यते। तत्र प्रतीहारी राजानं निवेदयति-देव, अमात्यो विज्ञापयति—अर्थजातस्य गणना बहुलत-यैकमेव पौरकार्यमवेक्षितम्। तद्देवः पत्रारूढं प्रत्यक्षीकरोतु ।

**राजा**—इतः पत्रं दर्शयतु । ( प्रतीहारी उपनयति )

**राजा**—( अनुवाच्य ) कथम् ? समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः । अनपत्यश्च किल तपस्वी । 'राजगामी तस्यार्थ-संचय:' इत्येतदमात्येन लिखितम् ! ( सविषादम् ) कष्टं खल्वनपत्यता ! बहुधनत्वाद् बहुपत्नीकेन तत्रभवता भवितव्यम् । विचार्यतां यदि काचिदा-पन्नसत्त्वा तस्य भार्यासु स्यात् ।

**प्रतीहारी**—देव इदानीमेव साकेतकस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायास्य श्रूयते ।

**राजा**—ननु गर्भः पित्र्यं रिक्थमर्हति । गच्छ एवममात्यं ब्रूहि । एतत् सर्वं कथान्तरमेव ।

भासस्तु नायकस्य भूतकालिकं वृत्तमविमारके नाटके तस्य पितुर्मुखेन ज्ञापयति । पश्चान्नारदः शेषं वृत्तं कुन्तिभोजं श्रावयति । एतत्सर्वं वृत्तज्ञापनं कथान्तररूपेण प्ररोचितं षष्ठाङ्के ।

अविमारकनाटकस्य चतुर्थेऽङ्के विद्याधर आत्मपरिचयं नायकाय प्रस्तौति । यथा

अहं मेघनादो नाम विद्याधरः । इयं तावदस्माक कुटुम्बिनी सौदामिनी अद्य भगवन्तमगस्त्यमाराधयितु मलयपर्वते विद्याधरैरुत्सवः प्रारब्धः । तत्र वयमपि संकेतिताः । एषोऽस्माकं वृत्तान्तः इत्येतत् कथान्तरम् ।

प्रतिमानाटके सुमन्त्रः कथान्तरं दशरथाय श्रावयति । शृङ्गवेरपुरे रथादवतीर्यायोध्याभिमुखाः स्थित्वा सर्वं एव महाराजं प्रणम्य विज्ञापयितु-मारब्धाः ।

> **किमप्यर्थं चिरं ध्यात्वा वक्तु प्रस्फुरिताधराः ।**
> **बाष्पस्तम्भितकण्ठत्वादनुक्त्वैव वनं गताः ॥** २.७१

पश्चाद् दशरथः कथयति—

अये रामकथाश्रवणसन्दग्धहृदयमित्यादि । प्रतिज्ञायौगन्धरायणे राजा देव्या सह वत्सराजस्याप्रतिमप्रतापमधिकृत्य संलपति । तदा कञ्चुकी प्रविश्य राज्ञे घोषवतीवीणां दर्शयति । राजा कथयति—

प्रतिगृहीतं जयमङ्गलम् ।

( वीणां गृहीत्वा ) इयं सा घोषवती नाम ।

**श्रुतिसुखमधुरा स्वभावरक्ता ।**
**करजमुखोल्लिखिताग्रघृष्टतन्त्री ।**
**ऋषिवचनगतेव मन्त्रविद्या ।**
**गजहृदयानि बलाद् वशीकरोति ॥** २.१२

अस्मात्परं वासवदत्ताया वत्सराजो वीणागुरुर्भवेदिति कल्प्यते ।

स्वप्नवासवदत्ते प्रथमाङ्कस्य मध्ये कश्चिद्ब्रह्मचारी प्रविशति । स प्रथममूर्ध्वमवलोक्य कथयति–स्थितो मध्याह्नः । दृढमस्मि परिश्रान्तः । अथ कस्मिन् प्रदेशे विश्रमयिष्ये ? (परिक्रम्य) भवतु, दृष्टम् । अभितस्तपोवनेन भवितव्यम् । तथा हि

**विश्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया**
**वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः ।**
**भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो**
**निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥**

इत्यारभ्य लावाणकदाहवृत्तान्तं यावत् कथान्तरमेव । अनेन कथान्तरेण पद्मावत्या वत्सराजोदयनस्य परिग्राह्यत्वं प्रतीयते ।

तत्रैव पञ्चमाङ्के शयालो राज्ञः श्रवणायोज्जयिनीकथां वर्णयन्तं विदूषकं वारयतस्तस्य वचनं कथान्तरमेव ।

तद्यथा—

**स्मराम्यवन्त्याधिपतेः सुतायाः प्रस्थानकाले स्वजनं स्मरन्त्याः ।**
**बाष्पं प्रवृत्तं नयनान्तलग्नं स्नेहान्ममोरसि पातयन्त्याः ॥**
**बहुशोऽप्युपदेशेन यथा मामीक्षमाणया ।**
**हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ॥**

अणुरप्यत्र नायकयोरुज्जयिन्यां प्रणयव्यापारगाथाया वत्सराजस्य शृङ्गारालम्बनभूमिकां प्रचुरं प्रकर्षयति ।

अङ्कान्तं विधातुमपि कथान्तरं निवेश्यते प्रायः । स्वप्नवासवदत्तस्य पञ्चमाङ्कान्तप्राये भागे काञ्चुकीयो नायकं कथयति—तदुत्तिष्ठतु भवान् । अपि च—

**भिन्नास्ते रिपवो भवद्गुणरताः पौराः समाश्वासिताः । इत्यादि ५.१२**

चारुदत्ते कथान्तराणां बाहुल्यं वर्तते । तत्र कथान्तराणां नायकाः परवर्तिमुख्यकथाया नायकस्य कार्यप्रवृत्तौ साधकबाधका एव । द्वितीयाङ्के संवाहक आत्मनीनां कथां बहुलीकरोति ।[1] तत्रैव पुनश्च कर्णपूरकश्चेटो

[1] मृच्छकटिकस्य द्वितीयाङ्के संवाहकस्य कथान्तरं विलसति ।

हस्तिना ताड्यमानस्य परिव्रजितस्य प्राणान् रक्षतीति कथान्तरं विलसति। तृतीयाङ्के सज्जलकः स्ववृत्तमेकोक्तिरूपेण वदति।

कर्णभारे तु कर्णः सविस्तरं स्वास्त्राणामागमोपयोगविषयिणीं कथां वर्णयति।[1] तेन भावियुद्धे तस्य वैफल्यं सूचितम्।

विक्रमोर्वशीयस्य द्वितीयेऽङ्के यदा नायकयोः क्षणमेव प्रणय-वार्ता प्रारभ्यत तदैव देवदूतोऽसूचयत्--**चित्रलेखे, त्वरय त्वरय उर्वशीम्**

**मुनिना भरतेन यः प्रयोगो भवतीष्वष्टरसाश्रयो नियुक्तः।**
**ललिताभिनयं तमद्य भर्ता मरुतां द्रष्टुमनाः सलोकपालः॥**

ततः परमुर्वशी निष्क्रान्ता। पश्चादभिनवं प्रकरणं प्रारभ्यत।

तृतीयेऽङ्के पुनरुर्वशीचित्रलेखयोर्वार्तालापमध्ये देवी चेटी च प्रविशतः। तयोर्वार्ताविरोधः सम्प्रति संजातः। कथान्तरं देव्या राज्ञश्च प्रारब्धम्। तत्राभिनवैव प्रवृत्तिः देव्या परिलक्ष्यतेऽनेन कथान्तरेण। तद्यथा 'अद्यप्रभृति यां स्त्रियमार्यपुत्रः प्रार्थयते, या चार्यपुत्रस्य समागम-प्रणयिनी तया सह मया प्रीतिबन्धेन वर्तितव्यम्। इद कथान्तरं वस्तुतो मूलकथानुरोधि एव।

कथान्तरेण क्वचिद् व्यञ्जनयावश्यकसूचना प्राप्यते। तथा हि पञ्च-रात्रे प्रथमाङ्के भीष्मो विराटेश्वरदूतसंवादरूपकथान्तरेण जनाति यत् पाण्डवा विराटं समाश्रयन्ते। दूतोऽकथयत्—

**रात्रौ छन्नेन केनापि बाहुभ्यामेव हिंसितम्।**
**दृश्यते हि शरीराणामशस्त्रजनितो वधः॥ १,५१॥**

तच्छ्रुत्वा भीष्मो द्रोणं समकेतयत्—

**भीमसेनस्य लीलैषा सुव्यक्तं बाहुशालिनः**
**योऽस्मिन् भ्रातृशते रोषः स तस्मिन् फलितः शते।**

एतादृशानां महत्त्वपूर्णकथान्तराणां सृष्टिः कविप्रतिभा-प्रकर्षेण साध्यते।

मृच्छकटिकस्य तृतीयेऽङ्के वसन्तसेनाया आभरणपेटिकाहरणं शर्विलकस्य कथान्तरमेकोक्तिरूपेण विलसति। इदं तु महत्त्वपूर्णं वृत्तं प्रेक्षकाणा समक्षं प्रस्तौति येन कथावस्त्वग्रे प्रतन्यते। चतुर्थेऽङ्के वसन्तसेनामदनिकयोर्वार्ता-भ्यन्तरे प्रथमा चेटी कथान्तरेण बाधयति। यथा,

---

१. **कर्णः**—भो शल्यराज, श्रूयतां ममास्त्रस्य वृत्तान्तः।

आर्या माताज्ञापयति—गृहीतावगुण्ठनं पक्षद्वारे सज्जं प्रवहणम्। तद्गच्छेति।

अनेन कथान्तरेण वसन्तसेनायाश्चारित्रिकौदात्त्यमेवोत्कर्षितं यतो हि नाम सा सुवर्णदशसाहस्त्रिकालंकारदेन राजश्यालेन सह गमनप्रस्तावं नानुमोदते।[१]

मृच्छकटिकेऽपटीक्षेपेण क्वचन कथान्तरं सन्निविष्टम्। द्वितीयेऽङ्के संवाहकोऽपटीक्षेपेण प्रविशति। ततः परं तस्य द्यूतपराजयकथा प्रारभ्यते, यस्यां माथुरः संवाहकः, द्यूतकरः, दर्दुरकः, वसन्तसेना, मदनिका च पात्रीकृताः। अस्मिन्नेवाङ्के संवाहके निष्क्रान्ते कर्णपूरकोऽपटीक्षेपेण प्रविशति। अभिनवे तस्य कथान्तरे कर्णपूरकः, चेटी, वसन्तसेना च पात्रीकृताः।

चतुर्थेऽङ्के पुनः शर्विलकस्य प्रस्थानस्यानन्तरं चेटः कथान्तरं प्रस्तौत्यधोविधम्।

**चेटः**—आर्ये दिष्ट्या वर्धसे। आर्यचारुदत्तस्य सकाशाद् ब्राह्मण आगतः।

अतः परं काचिदभिनवा कथाधारा प्रवर्तते।

षष्ठेऽङ्के पुनःपुनः कथान्तरं समाविष्टम्। आदौ वसन्तसेना चेटीं प्रेषयति—रत्नावलीं धूतायै दातुम्। अचिरमेव तत् समाप्तम्। तदा रदनिका प्रविशति रोहसेनेन सह। अनेन प्रकरणेन मृच्छकटिका-स्थाने स्वर्णशकटिकां कर्तुं वसन्तसेना स्वालङ्कारान् रोहसेनाय समर्पयति। अचिरमेवैतद् वृत्तं समाप्तिं याति। तदनन्तरमङ्कस्य मुख्यवृत्तं प्रारभ्यते येन वसन्तसेनार्थे प्रवहण आर्यको निर्गच्छति, राजश्यालस्य च प्रवहणे वसन्तसेना भ्रान्तिवशात् तस्योद्यानं गच्छति।

मृच्छकटिकस्य षष्ठस्याङ्कस्यान्तिमे भागे चन्दनकः कथान्तरेण शर्विलकस्य पालकराज्यक्रान्तिनिर्वहणं प्रकाशयति। तद्यथा

**चन्दनकः**—( नेपथ्याभिमुखमवलोक्य ) अरे निष्क्रमतो मम प्रियवयस्यः शर्विलकः पृष्ठत एवानुलग्नो गत इत्यनेन तस्यार्यकस्य रक्षणे तत्परता द्योतिता।

## नेपथ्योक्त्या कथान्तरम्

मृच्छकटिकस्य दशमेऽङ्के चारुदत्त-चण्डालानां संवाद आदौ प्रवर्तते।

१. अपेहि, मा पुनरेवं भणिष्यसि।

तत्र संवादमध्य एव नेपथ्यतः श्रूयते—हा तात, हा प्रियवयस्य अनेन चारुदत्तस्य पुत्रस्य रोहसेनस्यागमनेन पूर्वकथाया विरामः कथान्तरस्य समावेशश्च प्रवर्तितौ।

मालविकाग्निमित्रस्य चतुर्थेऽङ्के प्रमदवनपालिका नेपथ्ये वदति—

**आश्चर्यमाश्चर्यम्। अपूर्ण एव पञ्चरात्रे दोहदस्य मुकुलैः सन्नद्धस्तपनीयाशोकः। यावद्देव्यै निवेदयामि'**

इत्यनेन मालविकाया आत्मविषयकं चिन्ता-प्रकरणं समाप्यते।[१]

## आकस्मिकदुर्घटना-श्रावणेन

मालविकाग्निमित्रस्य चतुर्थेऽङ्के इरावत्याः प्रकरणं समाप्तिं याति, यदा जयसेना सूचयति यद् वसुलक्ष्मी पिङ्गलवानरत्रासेन मूर्च्छिता वर्तते। अनया सूचनया राज्ञ इरावती सङ्कटान्मोचनं जातं कथान्तरद्वारेण। यतो हि नाम तदनन्तरं वाक्पारुष्य-प्रवणेरावती राजानं सविनयं नियोजयति—

**त्वरतामार्यपुत्र, एनां समाश्वासयितुम्। मास्याः सन्त्रासजनितो विकारो वर्धताम्॥**

## नायकस्यान्यत्रगमनसन्देशेन

विक्रमोर्वशीये नायकयोः प्रणयवार्ता समारब्धैवासीत् यदोर्वश्या इन्द्रस्य सन्देशः श्रावितः --

चित्रलेखे त्वरय त्वरयोर्वशीम्' इत्यनेन पूर्वकथां समाप्य कथान्तरं संविहितम्।

## कुन्दमालायाम्

कुन्दमालायां कथान्तरमङ्कमध्ये प्रवेशकेनानुविद्धं वर्तते। तत्र ऋषिः कश्चिद्राममन्वेष्टुकामः प्रविशति। तस्य कथान्तरेण च रामस्य सीता-वियोगजन्यविषण्णता सम्प्रति समाप्यते।[१] इदमेव प्रधानं प्रयोजनमेतस्य कथान्तरस्य।

पञ्चमाङ्के छायासीताप्रकरणविषण्णेन रामेण कथान्तरं प्रोक्तम्। रामो विदूषकं विज्ञापयति—**'समाज्ञापय दौवारिकान् समासन्नस्तपोधनानां**

---

१. सा चिन्ता तयैव प्रकटिता—
सखि देवी चिन्तयित्वा वेपते मे हृदयम्। न जानेऽतः परं किं वानुभवितव्यम्।

**सम्पातसमयः । तस्मात् संहृतवेत्राणि सर्वद्वाराणि क्रियन्ताम् ।'**
इत्यनेन सीताविषयकवार्ता समाप्यते, लवकुशमिलनप्रसङ्गश्चोन्नीयते कविना ।[1]

अनेन कथान्तरेण नातिपिष्टपेषणयोग्या छायासीता-प्रकरणं समाप्यते, अभिनवरसनिर्भरा लवकुशकथा प्रारभ्यते च ।[2]

कथान्तरेण रहस्योद्घाटनस्य परमोदाहरणं कुन्दमालायां वर्तते । तत्र पञ्चमाङ्के रामस्यासन उपविष्टयोः कुशलवयोर्वार्ता विदूषकः कथान्तरेणावारुणत् । तद्यथा—

विदूषकः —(ससंभ्रमम्) अविधा, मुञ्च, सर्पं, जीवतु तपस्वितनयः । अवतरतु सिंहासनतः ।

रामः —(ससम्भ्रमम् कुमारौ मुञ्चन्) वयस्य किमेतत् ?

विदूषकः —श्रुतं मया साकेतनिवासिनां चिरजीवितानां मुखात्—**यः** किलाराघव इदं सिंहासनमधिरोहति, तस्य मूर्धा शतधा विदलति ।

रामः —अपि स्वस्थौ भवन्तौ । मूर्ध्नो वा न कश्चिद् विकार' ।

विदूषकः —अहो आश्चर्यम् । अपरिक्षतप्रकृतिस्थशरीरौ तिष्ठतः ।

अनेन कथान्तरेणेदं रहस्यमुद्घाट्यते यत्तयो राघवकुले जन्म सम्भवेत् । ततः परं रामस्तयोर्वर्णाश्रमवंशादिकं पृच्छति ।

## गण्डेन कथान्तर-सन्निवेशः

गण्डस्तु धनञ्जयेन परिभाषितः —

गण्डः प्रस्तुतसम्बन्धि भिन्नार्थं सहसोदितम् ।

अत्र भिन्नार्थस्तु कथान्तरमेव । अस्योदाहरणं प्रतिज्ञायौगन्धरायणे द्वितीयेऽङ्के वर्त्तते । यथा—

**राजा**—अहो महान् खलु लीलाभिहितः दुःखविस्तरः इदानी पश्चादुपालम्भनं श्रोतुम् । तस्माद् देवी तावन्निश्चयं गच्छतु । श्रूयताम् ।

अस्मत्सम्बद्धो मागधः काशिराजो
वाङ्गसौराष्ट्रो मैथिलः शूरसेनः ।
एते नानार्थैर्लोभयन्ते गुणैर्मा
कस्ते वैतेषां पात्रतां याति राजा ॥२.८

---

१. स रामं कथयति—वाल्मीकिर्महाराजस्यागमनमुद्वीक्षमाणस्तिष्ठति ।
२. 'आगतौ द्वौ तापस कुमारकौ' इति कथनेन ।

**काञ्चुकीयः** —वत्सराज.

**राजा**—कि वत्सराज. ।

**काञ्चुकीयः** —प्रसीदतु प्रसीदतु महासेनः। प्रियवचननिवेदनत्वरया क्रमविशेषो नावेक्षितः ।

**राजा**—प्रियवचनमिति ।

**देवी**—( उत्थाय ) जयतु महासेनः ।

**राजा**—( सहर्षम् ) प्रियवचनापरिहार्या हि देवी । आस्यताम् ।

**देवी**—यद् महासेन आज्ञापयति । ( उपविशति )

**राजा**—उत्तिष्ठोत्तिष्ठ, स्वैरमभिधीयताम् ।

**काञ्चुकीयः** –(उत्थाय)तत्रभवताममात्येन शालङ्कायनेन गृहीतो वत्सराजः ।

**राजा**—( सहर्षम् ) किमाह भवान् इत्यारभ्य

**राजा**—किमुपरतो यौगन्धरायणः ।

**काञ्चुकीयः** —न खलु. कौशाम्ब्यां किल ।

**राजा**—यद्येवं, न गृहीतो वत्सराजः ।

**काञ्चुकीयः**—श्रद्धत्तां महासेनः ।

**राजा**—

न श्रद्दधाम्युदयनग्रहणं त्वयोक्तं
व्यावर्तनं करतलैरिव मन्दरस्य ।
यस्याहवेषु रिपवः कथयन्ति शौर्यं
यौगन्धरायणमतानि च नः स्वनन्ति ॥२.९॥

**काञ्चुकीयः** —प्रसीदतु महासेन । वृद्धोऽस्मि ब्राह्मणः खल्वहम् । न महासेनसमीपेऽनृतमभिहितपूर्वम् । इति यावत् ।

अभिषेकनाटकेऽपि पञ्चमाङ्के कथान्तरं गण्डद्वारेण सन्निविष्टम् । तद्यथा—

रावणः —

**व्यक्तमिन्द्रजिता युद्धे हते तस्मिन्नराधमे**
**लक्ष्मणेन सह भ्रात्रा केन त्वं मोक्षयिष्यसे ।**

( प्रविश्य ) राक्षसः —**रामेण**

रावणः —**ब्रूहि ब्रूहि । किं कृतं मनुजतापसेन ?**

राक्षसः —

**उदीर्णसत्त्वेन महाबलेन लङ्केश्वरं त्वामभिभूय शीघ्रम् ।**
**सलक्ष्मणेनाद्य हि राघवेण प्रसह्य युद्धे निहतः सुतस्ते ॥**

## कथान्तरोपयोगः

कथान्तराणां बहुविधा उपयोगा रूपकेषु दृश्यन्ते । तद्यथा

(१) कस्यचित् पात्रस्य योग्यताया विवरणम् । यथाभिज्ञानशाकुन्तले नायिकायाः प्रादुर्भावकथा । स्वप्नवासवदत्ते वा ब्रह्मचारि-प्रकरणेन वत्सराजस्य पद्मावत्यै स्वीकरणीयता

(२) नायकोचितकार्यान्तरस्य प्रस्तावना । यथाभिज्ञानशाकुन्तले मातलि-संवादेन दुष्यन्तस्येन्द्रसहायार्थं गमनम् ।

(३) अकल्पितार्थस्य दैवात् प्रस्तुतिः । यथा प्रतिज्ञायौगन्धरायणे कञ्चुकी महासेनाय वत्सराजग्रहणसंवादं श्रावयति ।

(४) नायकस्य चारित्रिकवैशिष्ट्यस्य निदर्शनाय । यथाभिज्ञान-शाकुन्तले धनमित्रस्य नौव्यसनात् तस्य सम्पत्तेर्विनियोजनेन राज्ञः प्रजावत्सलता विशदीकृता । मृच्छकटिके संवाहककर्णपूरक-वृत्तान्ताभ्यां नायकस्य औदात्त्यं विशदीकृतम् ।

(५) भाव्यर्थोपक्षेपणम् । यथा प्रतिज्ञायौगन्धरायणस्य द्वितीयेऽङ्के कञ्चुकिना राज्ञे घोषवतीवीणाप्रदानम् ।

(६) क्वचित् कथान्तरद्वारेण मुख्यकथा प्रारभ्यते । तद्यथा चारुदत्ते विदूषकनायकयोर्वार्तालापमध्य एव—'ततः प्रविशति गणिका-सम्भ्रान्ता विटेन शकारेण चानुगम्यमाना' इति दृश्येन वसन्तसेना-शकारविटादीनां कथान्तरं समाविष्टम् ।

(७) महत्त्वपूर्णं रहस्यमुद्घाट्यते । यथा कुन्दमालायां कुशलवयो राघवकुलजन्यता ।

(८) अभिज्ञानार्पणम् । यथा पञ्चरात्रे विराटेश्वरदूतसंवादेन पाण्डवानां विराट उपस्थितिः ।

(९) अङ्कान्तं विधातुमपि कथान्तरम् । यथा स्वप्नवासवदत्तस्य पञ्चमाङ्कान्ते काञ्चुकीयवचनम् ।

## नाटकेष्वज्ञातनायकत्वम्

प्रच्छन्नरूपा नायका नाट्यचमत्कारं भूयिष्ठं जनयन्तीति कविभिर्नाटकेषु प्रायो नायकानामज्ञातकुलशीलता स्वैरं समासादिता। अज्ञातपात्रस्य विषये प्रेक्षकाणां कचिदुत्का वर्तते—कोऽयं जन इति. किन्तु स प्रेक्षकैर्ज्ञातोऽपि रंगस्थपात्रैर्बहुकालं यावदविज्ञात एवाचरन् प्रेक्षकाणां मानसे भूयः कौतुकं जनयति। भासस्तु तादृशाना पात्राणामनन्यतमः स्रष्टा।

### भासनाटकेषु

भासो नायकं पुरुषान्तरितं कृत्वाज्ञातनायकत्वं वितनुते।[1] स्वप्नवासवदत्ते नायिकां वासवदत्तां केवलं यौगन्धरायण एवाद्यन्तं जानाति। अन्ये जना केवलमन्तिमेऽङ्के एव सा वत्सराजपत्नीति पश्यन्ति। प्रथमाङ्के स्वयमपि प्रच्छन्नो यौगन्धरायणस्तस्या मिथ्या परिचयं वर्णयति—

इय मे स्वसा। प्रोषितभर्तृकामामिमामिच्छाम्यत्रभवत्या कञ्चित् कालं परिपाल्यमानाम्। इति

अस्यां स्थितौ पात्रं साभिप्रायमसत्यं वदत् प्रेक्षकाणां प्रहर्षं जनयति। तथा हि स्वप्नवासवदत्तस्य तृतीयाङ्के—

**अयुक्तं परपुरुषसंकीर्तनं श्रोतुम्। इदं बहुशो गुम्फितव्यं मह्यं च पद्मावत्यै च। इदं तावदौषधं किं नाम।**

**चेटी**— सपत्नीमर्दनं नाम

**वासवदत्ता**— इदं न गुम्फितव्यम्।

**वासवदत्ता**— उपरता तस्य भार्या। तन्निष्प्रयोजनमिति।

सा एकाकिनी वक्ति—अहो, अत्याहितम्। आर्यपुत्रोऽपि नाम परकीयः संवृत्तः।

चतुर्थाङ्के प्रच्छन्नचरणा वासवदत्ता पद्मावत्याधोविधं संल्लपति—

**वासवदत्ता**— हला, प्रियस्ते भर्ता

**पद्मावती**— आर्ये न जानामि, आर्यपुत्रेण विरहोत्कण्ठिता भवामि।

**पद्मावती**— यथा ममार्यपुत्रस्तथैवार्या वासवदत्ताया इति।

---

१. पुरुषान्तरितं मा द्रक्ष्यति स्वामीति प्रतिज्ञायौगन्धरायणस्य प्रथमाङ्के नायकवचनम्।

**वासवदत्ता**— अतोऽप्यधिकम् ।

**पद्मावती**— कथं त्वं जानासि ?

**वासवदत्ता**— ( आत्मगतम् ) हम्, आर्यपुत्रपक्षपातेनातिक्रान्तः समुदाचारः । एवं तावद् भणिष्यामि । ( प्रकाशम् ) यद्यल्पः स्नेहः, सा स्वजनं न परित्यजति ।

प्रच्छन्नतां विना कुत ईदृशस्य रसभावनिर्भरस्य हृदयोद्गारस्यावसरः ।

पञ्चमाङ्कस्य तत्र स्वप्नदृश्यं, चतुर्थाङ्के च विदूषकस्य राज्ञश्चात्मविषयकस्य संल्लापस्य वासवदत्तया श्रवणं वासवदत्ताया प्रच्छन्नतया विना न सम्भाव्येते । षष्ठाङ्कस्योत्तरार्धे पुनर्वासवदत्ताया यौगन्धरायणस्य च राज्ञा, पद्मावत्या कञ्चुकिना, धात्र्या चाभिज्ञानं तेषां च विविधासु स्थितिषु भावसम्पत्तिप्रकटनञ्चाज्ञातनायकत्वविधानस्योत्कृष्टं प्रयोजनं नाट्यरसप्रवणायितं च प्रमाणयतः ।

अज्ञातनायकत्वं परमोत्कृष्टं विलसति भासस्याविमारकनामके नाटके । तत्र नायकश्चण्डभार्गवस्य शापेनास्तंगमितमहिमा वर्षपर्यन्तं श्वपाकत्वमवाप्तवान् । तस्मिन् वर्षे कुरंग्या सह तस्य प्रणय-व्यापार. प्रावर्तत । स आत्मानमन्त्यजं घोषयति किन्तु कौञ्जायनोऽमात्यः कथयति—महाराज,

**अकुलीनः कथमेवं सानक्रोशो भवेत् ।**

अज्ञातनायकत्वस्य भासकल्पितं माहात्म्यं नाटकेऽस्मिन् भूतिकवचनेन भवति । तद्यथा—अहो प्रच्छन्नरत्नता पृथिव्याः । इह हि

**छन्ना भवन्ति भुवि सत्पुरुषा कथञ्चित्**
**स्वैः कारणैर्गुरुजनैश्च नियस्यमानाः ।**
**भूयः परव्यसनमेत्य विमोक्तुकामा**
**विस्मृत्य पूर्वनियमं विकृता भवन्ति ॥ १.६**

राजानं स वदति— नायं तादृशः ( अन्त्यजः ) । केनापि कारणेनात्मानमन्वयं चाच्छादयति ।

**दैवं रूपं ब्रह्मजं तस्य वाक्यं**
**क्षात्रं तेजः सौकुमार्यं बलं च**
**यद्येवं स्यात् सत्यमस्यान्त्यजत्वं**
**व्यर्थोऽस्माकं शास्त्रमार्गेषु खेदः ॥ १.७**

तस्य पितापि भूतिकवचनात्—

**यस्माद् ब्रह्मर्षिमुख्यो ऽहं श्वपाक इति भाषितः ।**
**तस्मात् सपुत्रदारस्त्वं श्वपाकत्वमवाप्स्यसि ॥ ६.६ ॥**

तावत् प्रच्छन्नरूपेण यावत् संवत्सरं व्रजेः ।
तत. संवत्सरे पूर्णे मुक्तशापो भविष्यसि ॥ ६.८ ॥

प्रच्छन्नोऽप्यनुकृतिलक्ष्यराजभावः एतादृशो नायकः सर्वेषामाश्चर्यं जनयति । तथा हि—

**नलिनका**—किन्नु खल्वीदृशस्तादृशैर्गुणविशेषकुलीनो भवेत् ।

**धात्री**—श्रुतं च मया भट्टिन्याः समीपेऽमात्यै: किल भणितम्—न स तादृशो दुष्कुलज इति । आत्मानं केनापि कारणेन प्रच्छादयतीति ।
देवा अपि नायकस्य प्रच्छन्नता-विषयकं विस्मयं वर्धयन्ति । तत्र देववाणी बभूव—

**यदि च विभवरूपज्ञानसत्त्वादयः स्यु—**
**र्न तु कुलविकलानां वर्तते वृत्तिशुद्धिः ।**
**ध्रुवमिह कुलमस्य श्रोष्यसि प्राप्तकाले**
**त्यज कुलगतशङ्कां साध्यतां स्वान्तमेतत् ॥ २.५**

प्रेक्षका द्वितीयाङ्कात्प्रागेव प्रवेशके विदूषकेण विज्ञापिताः सन्ति—

भोः न जानन्त्यवस्थाविशेषमीश्वरपुत्रा नाम । अतस्तत्र भवान् अविमारक ऋषिशापेन कुलपरिभ्रंशमन्त्यजकुलप्रवासमात्मनो विज्ञानं गुरुजनं चाचिन्तयत् इत्यादि ।

अज्ञातनायकत्वं भासस्य भूयिष्ठमभिप्रेतम् ।

आदौ प्रतिमानाटके प्रतिमाकृतनायको दशरथो भरतेन नाभिज्ञायते । भरतमपि सुमित्रो नाभिजानाति । भरतं दृष्ट्वा स वक्ति—

**अयं हि पतितः कोऽपि वयःस्थ इव पार्थिवः ।**

भरतो मातृः नाभिजानाति । सुमन्त्रस्ताः परिचाययति—इयं तत्र भवतो रामस्य जननी देवी कौसल्या इत्यादि

प्रतिज्ञायौगन्धरायणे रुमण्वान्, यौगन्धरायणो विदूषकश्च अज्ञाता एवोज्जयिन्यां विचरन्ति ।[1]

कर्णभारे ब्राह्मणरूपधरः शक्रः कर्णं याचते । नाटकान्ते देवदूतस्तं कथयति-पुरन्दरेणानुगृहीतोऽसि ।

---

१. इदं पुरुषान्तरितं सोपायं नायकेन प्रयोजितमिति तत्रैव प्रथमाङ्के तेन प्रकटीकृतम् ।

मध्यमव्यायोगे भीमस्तु स्वपुत्रस्य घटोत्कचस्याविदितः। भीमेन पृष्टो घटोत्कच आत्मानं परिचाययति। यथा

भीमः —का नाम भवतो माता ?

घटोत्कचः —श्रूयता हिडिम्बा नाम राक्षसी

**कौरव्यकुलदीपेन पाण्डवेन महात्मना।**
**सनाथा या महाभागा पूर्णेन द्यौरिवेन्दुना॥** ३.८

अस्या स्थितौ तयोश्चमत्कारचन्द्रितः सवादोऽधोविधं विलसति—

घटोत्कचः —किं मा प्रत्यभिजानीवे भवान्।

भीमः —मत्पुत्र इति जाने

घटोत्कचः —कथं कथं तव पुत्रोऽहम्।

**भीमः** — कथ रुष्यति। मर्षयतु भवान्। सर्वाः प्रजाः क्षत्रियाणां पुत्र-शब्देनाभिधीयन्ते।

**घटोत्कचः** —भीतानामायुधं गृहीतम्।

**भीमः** —

**शपामि सत्येन भयं न जाने ज्ञातुं तदिच्छामि भवत्समीपे।**
**किं रूपमेतद्वद भद्र तस्य गुणागुणज्ञः सदृशं प्रपत्स्ये॥**

**घटोत्कचः** —एष ते भयमुपदिशामि। गृह्यतामायुधम्।

**भीमः** —आयुधमिति गृहीतमेतत्।

**घटोत्कचः** —कथमिव।

**भीमः** —

**काञ्चनस्तम्भसदृशो रिपूणां निग्रहे रतः।**
**अयं तु दक्षिणो बाहुरायुधं सहजं मम॥**

**घटोत्कचः** —इदमुपपन्नं पितुर्मे भीमसेनस्य।

**भीमः** —अथ कोऽयं भीमो नाम।

**विश्वकर्ता शिवः कृष्णः शक्रः शक्तिधरो यमः।**
**एतेषु कथ्यतां भद्र केन ते सदृशः पिता॥**

**घटोत्कचः** —सर्वैः।

**भीमः** —धिगनृतमेतत्।

**घटोत्कचः**—कथमनृतमित्याह। क्षिपसि मे गुरुम् इत्यादि भीम-पुत्रोरीदृशो रञ्जकः संवाद आत्मनिगूहनं विना न सम्भवति। अज्ञातवासधरं भीममेव नायकं कल्पयित्वा पञ्चरात्रेऽभिमन्युना तस्येदृशः संवादो विशिष्ट एव विलसति। तथा हि

**बृहन्नला**—किमर्थं तेन ( भीमेन ) पदातिना गृहीतः।

**अभिमन्युः**—

**अशस्त्रो मामभिगतस्ततोऽस्मि ग्रहणं गतः।**
**न्यस्तशस्त्रं हि को हन्यादर्जुनं पितरं स्मरन्॥**

**भीमः**—शान्तं शान्तं पापम्—

**सहजौ मे प्रहरणं भुजौ पीनांसकोमलौ।**
**तावाश्रित्य प्रयुध्येय दुर्बलैर्गृह्यते धनुः॥**

**अभिमन्युः**—मा तावद् भोः

**बाहुरक्षौहिणी यस्य निर्व्याजो यस्य विक्रमः।**
**किं भवान् मध्यमस्तातस्तस्यैतत् सदृशं वचः॥**

**भगवान्**— पुत्र, कोऽयं मध्यमो नाम।

अन्येऽपि पाण्डवा अज्ञातवासं विचरन्तो नाटकेऽस्मिन्नभिमन्युना संल्लपन्तो महतीं काव्यश्रियं वितन्वन्ति।

अत्रैवाभिमन्युर्बृहन्नलां तर्जयति—

**किं भवान् धर्मराजो मे भीमसेनो धनञ्जयः।**
**यन्मां पितृवदाक्रम्य स्त्रीगतां पृच्छसे कथाम्॥**

अज्ञातनायकः स्वार्थं समीहमानः क्वचिन्मिथ्या वक्तुमुत्सहते। तद्यथा पंचरात्रे बृहन्नला विराटेश्वरं प्रति प्रसीदतु प्रसीदतु महाराजः।

**अयं बाल्यात्तु सम्भ्रान्तो न वेत्ति प्रहरन्नपि**
**कृत्स्नं कर्म स्वयं कृत्वा परस्येत्यवगच्छति॥**
**एतन्मे परिहार्याणां व्यावर्तनकृतं किणम्।**
**सन्निरोधविवर्णत्वात् गोधास्थानमिहागतम्॥**

अभिषेकनाटके चतुर्थेऽङ्के वानररूपधारिणौ शुकसारणौ रावणस्य मन्त्रिणौ स्वल्पकालिकमेवाज्ञातनायकत्वं प्रपद्यन्ते। तावधिकृत्य विभीषणः कथितवान्—

एतौ हि राक्षसेन्द्रस्य सम्मतौ मन्त्रिणौ नृप।
प्राणान्तिकेऽपि व्यसने लङ्केशं नैव मुञ्चतः॥

## कालिदासीयनाटकेषु

अभिज्ञानशाकुन्तलेऽविज्ञातयोर्नायिकयोः परस्परप्रेम जन्यते। दुष्यन्तस्तु शकुन्तलापरिचयं लभते, किन्तु स स्वात्मपरिचये कथयति—यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः सोऽहमविघ्नक्रियोपलम्भाय पुण्याश्रमदर्शनप्रसंगेन धर्मारण्यमिदमायात.।' इत्यनेन स आत्मानं स्पष्टतो न निवेदयति न चात्मापहारमेव सम्यक् करोति। तेन प्रागेवोक्तमासीत् राजभावस्त्वभिज्ञातो भवेदिति। पञ्चमाङ्के तु शापवशादेव नायिका तस्यानभिज्ञाता बभूव। सप्तमाङ्के स्वपुत्रमेव नाभिजानाति। न च तापस्यौ तमभ्यजानीताम्। तस्य पुत्रोऽपि पितरं नाजानात्। अस्यां स्थितौ तत्रत्यः पुत्रमिलनसुखदप्रसङ्गो भूयिष्ठं चारुतामावर्जयति।

मालविकाग्निमित्रे नायिका मालविका, पीठमर्दिका सांकृत्यायनी च नाटकस्यान्तिमेऽङ्के वस्तुतः परिज्ञाते। सांकृत्यायनी तु वस्तुत आर्याकौशिकी यतिवेषधारिणी बभूव। मालविका पुनः माधवसेनस्य भगिनी। अतएव

प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती।
स्नानीयवस्त्रक्रियया पत्रोर्णंवोपयुज्यते॥

## कुन्दमालायाम्

कुशलवयोरज्ञातत्वेन शोभते पञ्चमाङ्कः। तत्र पिता रामो न जानाति यदिमौ मे पुत्रकौ। बहुविधसंकल्पविकल्पानन्तरं प्रश्नोत्तरद्वारेण तयोरभिव्यक्तिः प्रधाननायकस्य मानसे भवति। स कथयति—

एतत्कुमारयुगलं वयसान्वयेन
श्यामोन्नतेन वपुषा विपदानया च।

**तां मैथिलीतनयसम्भविनीमवस्था—**
**मादाय मामतितरां तरलीकरोति ॥ ५.१६**

आकाशे' इति वचनेन तत्रैव कथान्तरं प्रारब्धम् । तद्यथा—

कुशलवौ सम्बोधितावत्र—

**वाल्मीकिना मुनिवरेण महारथस्य**
**यासौ पुराणपुरुषस्य कथा निबद्धा ।**
**सा राघवश्रुतिपथातिथितां च नेया**
**कालश्च मध्यसवनस्य न लंघनीयः ॥**

इत्यनेन कथान्तरेणापरविधः कार्यक्रमो रङ्ग उपस्थाप्यते । किमेतद्रामस्य भावतरलतां न्यूनीकर्त्तुमथवा वर्धयितुमेव प्रकल्पितमित्यत्र सहृदयविद्वांस एव प्रमाणाः ।

परस्परमज्ञातयोर्नायिकयोः संवादस्य रमणीयता कुन्दमालायामधोलिखिते सन्दर्भे सम्यग्विलसति षष्ठाङ्के[1]—

कुशः —अपि भवन्तौ रामायणकथानायकौ रामलक्ष्मणौ ।

लक्ष्मणः —तौ क्लेशभागिनौ ।

कुशः —किं नीता त्वया सीता ।

लक्ष्मणः —( सलज्जम् ) मया मन्दभाग्येन ।

कुशः —किं सीता रामस्य धर्मपत्नी

लक्ष्मणः —अथकिम् ।

कुशः —अथ सीतायास्तद्गर्भस्य वा विदितः कश्चित् वृत्तान्तः ।

लक्ष्मणः —विदितो युष्मद्गीतेन

कण्वः — **स एष रामो नयनाभिरामः**
**सीतासुताभ्यां समुपास्यमानः ।**
**यदृच्छया तिष्यपुनर्वसुभ्यां**
**पार्श्वस्थिताभ्यामिव शीतरश्मिः ॥**

कुशलवौ—दिष्टया कुशलिनो रामदाराः ।

कुशः —अयि वत्स लव, कासौ वाल्मीकितपोवने सीता नाम ।

---

१. अत्र कुशलवौ न जानीतो यत्तयोर्माता सीतास्ति पिता वा रामः । रामो न जानाति यदिमौ बालौ मम पुत्रकौ । प्रेक्षकाणा नास्ति किञ्चिदेतद्विषयकमज्ञातम् ।

लवः —न काचित् । केवलं गीतनिवन्धनान्येतानि सीता सीतेत्यक्षराणि ।

**कण्वः —परिपूर्णे ततः काले द्यौरिवेन्दुदिवाकरौ ।**
**सीतापि जनयामास सा यमौ तनयावुभौ ॥**

कुशलवौ—जयतु महाराजः पुत्रजन्मना ।

**कण्वः —जातावस्थोचितं कर्म विधानो यथाक्रमम् ।**
**स चकार तयोर्नाम मुनिः कुशलवाविति ॥**

कुशलवौ—कथमयं सः । हा तात त्रायस्व ( सर्वे परस्परमालिंग्य मोहं गच्छन्ति )

## मुद्राराक्षसे

बहूनां मुद्राराक्षसीयपात्राणां याथार्थ्यविद् केवलं चाणक्य एव प्रतीयते । स राक्षसाय भ्रान्तिं दूरीकर्तुं नाटकान्ते तेषा वास्तविकं स्वरूपं विवृणोति । तद्यथा

चाणक्यः —अमात्य राक्षस नेमौ चाण्डालौ । अयं खलु दृष्टपूर्व एव भवता सिद्धार्थको नाम राजपुरुषः । योऽप्यसौ द्वितीयः सोऽपि समिद्धार्थको नाम राजपुरुषः एव—अपरं च ।

**भृत्या भद्रभटादयः स च तथा लेखः स सिद्धार्थकः** इत्यादि ७.९

## नागानन्दे

नागानन्दे मित्रावसुः स्वभगिन्याः परिणयस्य प्रस्तावं नायकस्य विचारार्थं पुरस्करोति । स प्रस्तावो नायकेन न स्वीक्रियते यद्यपि तस्या भगिनो एव नायकस्य मन आपा बभूव । अत्र नायकौ न जानाति यन्मम प्रणयिनी मित्रावसोर्भगिनी एव । भग्नाशा प्रणयिनी मरणमेव शरणमभ्यवस्यति । अत्र नायको भ्रमवशान्नायिकामुपेक्षत इति प्रेक्षकाणां ज्ञातमेव ।

# नायकनियोगानुशीलनम्

उच्चावचाः सर्वे नायकाः सनातनौचित्याचार-विचार-धारणया स्वोचितव्यापारेष्वेव नियोजनीया इति कवीनां महान् भरो भवति।[1] नैतस्य विषयस्य सम्यगनुशीलनं काव्यशास्त्रादिषु दृश्यते। अत्रोपजीव्य-नाटकानामुदाहरणेन नायकनियोगस्य दिशः प्रदिशश्च संकेतिताः सन्ति। इदं प्रकरणं कवीनामुपयोगाद् भूयिष्ठमावर्जनीयम्।

भारतीयधारणानुसारेण योनिदृष्ट्या प्रायः त्रिविधा नायका विलसन्ति काव्येषु—दिव्याः, दिव्यादिव्याः, अदिव्याः (मानुषाः) च। तत्र देवेषु ब्रह्मण आरम्य राक्षसपिशाचान् यावद् देवर्षयश्च सर्वेऽन्तर्भूता दिव्या एव। दिव्यादिव्यास्तु राजान एव। ते लोकपालांशेन समुद्भूता देवा मानुषयोनिषु जाता अदेवा भवन्ति। रूपकेषु ते सर्वे पात्रीक्रियन्ते। अदिव्यास्तु मानुषी प्रजा भवति।

पूर्वोक्तान् व्यतिरिच्यापि नायका वर्तन्ते। ते तिर्यञ्चः (पशुपक्षिणः) वनस्पतयश्च भवन्ति। वाणी-विहीना अपीमे रङ्गेऽनुभावप्रपन्नाः कविदृशा प्रेक्षकान् विलोभयन्ति।

नाटकेषु वेदपुराणेतिहासादिषु प्रसिद्धानामुपात्तकथानां प्रतिसंस्कारोऽभि-नवकाव्यार्थानां संग्रन्थनेन सम्भवति। तत्र कल्पितेष्ववान्तरवृत्तेषु किंविधो नायकः कस्मिन् कर्मणि नियोजनीयः' इति जिज्ञासा साभिप्राया। नायकेषु सर्वप्रथमं स्थानं राज्ञ एव विद्यते। स एव रूपकोत्तमस्य नाटकस्य प्रधान-नायको भवितुमर्हति। अत एवास्मिन्निबन्धे राजा प्रथमस्थानीयः।

### राजा

पुरोद्भवा राजानो दिव्यनायकैरपि सगता न केवलमिह लोकेऽपि तु देवलोकेषु परलोकेष्वपि कार्यवशाद् विचरन्ति स्म।[2] परवर्तिनो राजानः

---

१. अभिनवगुप्तानुसारेण बहुविधं नाटकीयं विधानं कविजनस्मरणार्थं भवति। अभिनवभारती द्वितीये भागे पृष्ठम् १६८।

२. अत्र रामायणमहाभारतपुराणकालावधिका राजानः प्रथमकोटा अपरे च परवर्तिन ऐतिहासिकाश्च राजानो द्वितीयकोटा अवलग्नाः।

साधारणतो मानवलोक एव विलसन्ति। मृगयादिव्यसनापन्ना राज्य-वैषम्यनिगृहीता वा वनेषु, अरण्येषु पर्वताधित्यकासु च इतस्ततो भ्रमन्तस्ते स्वोद्देश्यं साधयन्ति। तेषां राजप्रासादावधिका प्रवृत्तयः साधारण्येन शृङ्गारप्रवणाः प्रदर्श्यन्ते। युद्धभूमिस्तु राज्ञां प्रेष्ठैव। सा कविभिर्वीर-रसस्य निष्पत्तये राजव्यापारविषयीक्रियते। यज्ञाधिकारिणो वा पुण्य-प्रेक्षा वा दिव्यप्रसादानुग्रहकामास्ते मुनिभूमिषु प्रवर्तन्ते।

राजा नायक एव शृङ्गारस्य च वीरस्य चाङ्गिरसयोरालम्बनोद्दीपनविभावः प्रतिपद्यते। प्रथमं तावच्छृङ्गारे दक्षिणः पूर्वकृतां नायिका स्वप्नेऽपि सोत्कण्ठं स्मरति। स्वप्नवासवदत्तस्य पञ्चमेऽङ्के स स्वप्नायते। न कामवासना-पूरोऽपितु विशुद्धशृङ्गारसत्त्वापन्नः स राजते। स्वप्नवासवदत्तस्य षष्ठाङ्के घोषवतीवीणायाः पुनर्लाभेन—**तां चोपनीतामङ्के कृत्वा मोहं गतो वत्स-राजः सानुक्रोश इति**। स शृङ्गारात्मकं पूर्वाचरितं स्मरति। वासवदत्ता-याश्चित्रं दृष्ट्वा तस्य निर्वृति जायेतेति तस्य दाक्षिण्यस्य परा काष्ठा। वस्तुतो नाटकस्य नायको राजा वा राजकुमारो वा प्रकरणस्य च नायकोऽमात्यः, सार्थवाहो विटो वा—एते सर्वे सर्वतः स्वकीयां शृङ्गारवृत्तिं स्वनन्ति। कवयो न सम्भोगं शाश्वतं पश्यन्ति वर्णयन्ति वा। वियोगेन विचित्रितो नायिका-सम्बन्धः कविभिः सातिशयः कृतः। वियोगमसहमाना नायिका नायकाश्च प्राणांस्त्यक्तुमुद्युक्ता दृश्यन्ते। तत्र को हेतुरिति अविमारके नायकः स्वयमेवात्मगतं ब्रूते—

निर्व्याजं परिचयवर्धमानरागां
रूपाढ्यामभिनवयौवनां मनोज्ञाम्।
त्यक्त्वा तां क्षणमपि वञ्चितोऽस्मि जीवन्
कष्टोऽन्यः क इह भवेत् कृतघ्नभावः॥ ४. ३

वीरे पुनरनुक्तापि सप्रपञ्चं प्रतिफलत्येव कविवाचा क्वचित्सिद्धया वा राज्ञः पराक्रमशालिता। तद्यथोदयनो निर्वर्णयति—

उपेत्य नागेन्द्रतुरङ्गतीर्णे तमारुणि दारुणकर्मदक्षम्।
विकीर्णबाणोग्रतरङ्गभङ्गे महार्णवाभे युधि नाशयामि॥

स्वप्ने ५. १३

प्रतिज्ञायौगन्धरायणे स्वयमेव वत्सराजो युध्यते। वंशानुगता क्षत्रिय-राजानां शक्तिर्विभ्राजते।

तत्तु भासेनेक्ष्वाकूणां प्रसङ्गेन वर्णितं प्रतिमानाटके—

एते ते देवतानामसुरपुरवधे गच्छन्त्यभिसर-
मेते ते शक्रलोके सपुरजनपदा यान्ति स्वसुकृतैः।
एते ते प्राप्नुवन्तः स्वभुजबलजितां कृत्स्नां वसुमती-
मेते ते मृत्युना ये चिरमनवसिताश्छन्दं मृगयता ॥ ३. ७

राजकार्याणि रङ्गेऽपि कानि स्युरिति भासेनाविमारके परिगणितं संक्षेपेण—

धर्मः प्रागेव चिन्त्यः सचिवमतिगतिः प्रेक्षितव्या स्वबुद्धचा।
प्रच्छाद्यौ रागरोषौ मृदुपरुषगुणौ कालयोगेन कार्यौ।
ज्ञेयं लोकानुवृत्तं परचरनयनैर्मण्डलं प्रेक्षितव्यं
रक्ष्यो यत्नादिहात्मा रणशिरसि पुनः सोऽपि नावेक्षितव्यः ॥
१. १२

दुष्टा राजानो हीनप्रवृत्तौ व्यापृता भवन्ति। दूतवाक्ये दुर्योधनः कृष्णं प्रत्यवाच्यानि वदति।

श्रृङ्गारिता एव राजानः कालिदासस्य महिष्ठा। अभिज्ञानशाकुन्तले, विक्रमोर्वशीये, मालविकाग्निमित्रे च नूतननायिकापाशबद्धा विलसन्तः त एव महाकवेर्विषयिणीं कविकलगुरुः कालिदासो विलासः इत्युक्तिं सार्थयन्ति। सापराधो राजा चण्ड्या इरावत्याः पादयोः पतति इति दिक्।

राजा श्रृङ्गारितः सन् प्रणयिनायको रंगपीठे मनसा वाचा कर्मणा कांस्कांश्च भावान् नोद्घाटयति। तथा हि राजा मालविकां प्रति—

परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि। ४. १३
तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनम् ॥ ६. १४
तदनुगृह्यतां चिरानुरक्तोऽयं जनः ॥ ( इति संश्लेषनुपजनयति। )
स स्वगतमेवाभिनवप्रणयारूढाया नायिकाया अनुभावान् निदर्शयति—

हस्तं कम्पयते रुणद्धि रशनाव्यापारलोलाङ्गुलीः
स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात्।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननम्।
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥ ४. १५

तां स निवेदयति क्वचित्—आज्ञाकरत्वमधिगम्य यथा कृतार्थ इति। निर्दोषदर्शना कन्यका भवतीति भारतीयाचारविधानेन राजान्तर्हितो भूत्वा वार्तां श्रृणोति शकुन्तलादीनाम्।

बहुनायिकोऽपि राजान्यासां सुन्दरीणा निध्यानेनात्मानं पूर्वप्रणयिनी-नामीर्ष्याक्रोधमानपरुषभाषणादीनां पात्रीकरोति। अनेन श्रृङ्गार-समृद्धिर्नाटकेषु विलसति। विक्रमोर्वशीय उर्वशीसंगत पुरूरवा विद्याधर-दारिकामुदयवतीं निध्यायति। तदनूर्वशी कुपिता।

प्रणयिन्या दैवदुर्विपाकोत्थे वियोगे राजा (नायकः) क्वचिदुन्मत्तवेषः सन् कार्याकार्यविचारणाविमूढ इतस्तत परिभ्रमन् यं कमपि सम्बोधयति, यत् किमपि चेष्टते वदति वा[1]। तत् सर्वं श्रृङ्गारप्रवणमेव प्रवर्तते।

राजा पुत्रवतीं राज्ञीं प्रणयोत्कर्षायोग्यां मत्वा तां परित्यजन्निवान्यां कामपि रूपश्रियं कामयते[2]।

भरतानुसारेण बहुविधास्तत्र रमण्यो राजप्रणयभाजिन्यो बभूवुः। अज्ञातकुलशीला अपि नवयुवतयो यौवनसमृद्ध्या तस्य प्रणयपाशेन प्रशंसावचनेन च स्वायत्तीक्रियमाणा दृश्यन्ते। अभिज्ञाने शकुन्तला विक्रमो-र्वशीय उर्वशी, मालविकाग्निमित्रे मालविका च पूर्वत एव पाणिपीडितानां नायकानां प्रणयपाश आबद्धाः। कतिपय-पौराणिकराजा इन्द्रादीना-मपि दुष्करं कार्यं साधयन्ति। अभिज्ञानशाकुन्तले दुष्यन्तो दुर्जयं दानवगणं हन्ति। विक्रमोर्वशीये पुरूरवा केशिना हृतामुर्वशीं प्रत्याहृत्येन्द्रस्य प्रिय-माचरति। नारदेन नाटकान्ते पुरूरवसो देवनियोग उपकल्पितः—

त्वत्कार्यं वासवः कुर्यात् त्वं च तस्येष्टमाचरेः।
सूर्यः समेधयत्यग्निमग्निः सूर्यं स्वतेजसा॥ ५. २०

राजा तपोवनरक्षक इति सम्यगालोचितमभिज्ञाने सख्योर्वचनेन—राजरक्षितव्यानि तपोवनानि नामेति। परतः स आश्रमवासिनां प्रार्थनां मन्यमानस्तेषामिष्टिविघ्नमपाकरोति।

चौर्यादीनामपराधानां समक्षमागतानां विषये राजा क्वचित् स्वनिर्ण-येन प्रशंसास्पदमभवत्[3]।

---

१. एतस्य परम निदर्शन विक्रमोर्वशीयस्य चतुर्थोऽङ्कः प्रस्तौति।

२. विक्रमोर्वशीयस्य पञ्चमेऽङ्को विदूषकः प्रमाणयति—मा वृद्धां मां राजा परिहरिष्यति।

३. अभिज्ञानशाकुन्तलस्य षष्ठेऽङ्के दुष्यन्तः समुद्रवणिक्-सम्पत्तिविषये विनियोगं करोति। तत्र प्रवेशके सोऽङ्गुलीयकस्याहर्तारं मत्स्यजीविनं पुरस्करोति च।

कालिदासीयो नायको राजा दुष्यन्तो निपुणतमश्चित्रकारो वर्तते। तेन कृतं शकुन्तलाचित्रं दृष्ट्वा सानुमती समीक्षते—अहो, एषा राजर्षे-र्निपुणता। जाने सखी अग्रतो मे वर्तत इति। राजा स्वयं चित्रकार्यं वर्णयति—

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्॥

यथा पूर्वमेव वर्णितं पौराणिकराजा देवानामपि साह्यमनुतिष्ठन्ति स्म। महाराजो दुष्यन्तोऽभिज्ञानशाकुन्तलस्य सप्तमेऽङ्के महेन्द्रस्य शत्रून् हत्वा स्वर्गलोकान्मर्त्यलोकमवतरति।

अपराद्धो नायकः क्षमाप्रार्थीव नायिकायाः पादयोः प्रणिपतति। अभिज्ञानस्य सप्तमाङ्के दुष्यन्त एवं करोति।

अनुत्तमो भवति कश्चिन्महानायको योऽपरेषां प्राणरक्षार्थमात्मनिवेदनं करोति। नागानन्दे जीमूतवाहन ईदृशो नायको नागानामानन्दायैवं समाचरति। तं वर्णयति शङ्खचूडः —

अहो जगद्विपरीतमस्य महासत्त्वस्य चरितम्। कुतः
प्राणास्तानेष साधुस्तृणमिव कृपया यः परार्थं ददाति॥ ४.१५

उत्तररामचरितस्य रामो महासत्त्वः प्रतिजानीते—

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥

**राज्ञः समुदाचारः**

राजा यथायोग्यं समुदाचारं व्यवहरति। अभिज्ञानशाकुन्तलस्य द्वितीयेऽङ्के स ऋषिकुमारकौ समीपं दृष्ट्वासनादुत्थाय अभिवादयते। ताभ्यामुपहृतानि फलानि स सप्रणामं गृह्णाति। मार्गे मरीचमृषिं प्रदक्षिणीकृत्यैव नायको दुष्यन्तो गन्तुमिच्छतीति कालिदासेनाभिज्ञान-शाकुन्तले निर्दिष्टम्।

राजाकांक्षत्—

प्रवर्ततां प्रकृतिहिताय पार्थिवः सरस्वती श्रुतिमहती महीयताम्।
ममापि च क्षपयतु नीललोहितः पुनर्भवं परिगतशक्तिरात्मभूः॥

## पितरौ

पितरौ स्वसन्तानस्य हितं समर्पयन्ति साह्येन, सदुपदेशेन[1] समाश्वासनेन च। वेणीसंहारे धृतराष्ट्रः पञ्चमेऽङ्के दुर्योधनं युद्धाद् विरक्तुं सविनयं परामृशति।[2] पुत्रः पितरौ यथायोगं समाश्वासयति वेणीसंहारे।

पुत्रेण कृते दोषे पिता तस्य परिहारं विधातुं यतते। वेणीसंहारे दुर्योधनोऽश्वत्थामानं परिवदति। तदा धृतराष्ट्रस्तयोर्मैत्र्यमविघटितं यथा स्यात्तथा यतते। सोऽश्वत्थामानं सन्दिशति—

अनुजनिधनस्फीताच्छोकादतिप्रणयाच्च यद्
विकृतवचने मास्मिन् क्रोधश्चिरं क्रियतां त्वया। ५. ४१

पुत्रार्थं मातुः प्राणपणेनाध्यवसायः स्वाभाविक एव। नागानन्दे नागमाता स्वपुत्रस्य प्राणरक्षार्थमात्मानमेव गरुडभोजनमिति निवेदयति। तामेव मातरं पुत्रो निवेदयति—

समुत्पत्स्यामहे मातर्यस्यां यस्यां गतौ वयम्।
तस्यां तस्यां प्रियसुते माता भूयास्त्वमेव नः ॥ ४.२०

## भ्रातरः

भ्रातृभिः सह व्यवहारस्तु नाटकेषु सुसंस्कृतनायकानां परमादर्शं विचिनुते। प्रतिमानाटके अभिषेके, बालरामायणे च रामलक्ष्मणभरता उदात्तगुणरत्नानां महार्णवा एव विलसन्ति। भ्रातुरर्थं साधयितुं प्राणानपि त्युक्तुं समुद्यता दृश्यन्त इमे भ्रातरः।

वेणीसंहारे पाण्डवानां भ्रातृत्वं समुदितम्। भाविकार्यजातं परित्यज्यापि युधिष्ठिरस्तत्र भ्रातॄन् प्रत्यात्मनो नैराश्यं कारुण्यं च व्यनक्ति। भ्रातुरसत्यमरणे स आत्मानं चितायां क्षेप्तुमुद्युक्त एव।

दुर्योधनोऽपि दुष्भ्रातॄणां सुखदुःखयोः समभागी सर्वथात्मानं कृतार्थयति। तथापि कतिपयनाटकेषु राक्षसानां वानरादीनां च भ्रातृभावो न तावन्मात्रं स्पृहणीयः।

---

१. सञ्जय— यावत् प्राणिति तावदुपदेष्टव्यभूमिर्विजगीषुः प्रज्ञावताम्।

२. गान्धारी—एष ते शीर्षाञ्जलिः। निवर्तय समरव्यापारात्।
धृतराष्ट्रः—मानं वैरिषु मुञ्च तात पितरावन्धाविमौ पालय ॥ ५.५

## पुत्रः

नाटकेषु पुत्र-प्रकरणं सातिशयं मार्दवं भजते। नायकस्य पुत्रः स्पृहणीय एव प्रदर्शितः संस्कृतनाटकेषु। नैकनाटकेषु पुत्रस्य चारु विलसितं कविभिश्चारु चर्चितम्। तेषु मृच्छकटिकमनुत्तममेव, यत्र मृच्छकटिका पुत्रार्थमेव कल्पिता नाटकीयकथाप्रपञ्चमासूत्रयति।

निर्विकारचित्तस्य बालस्य स्वाभाविकोक्तयः कविभिः साधु गृह्यन्ते प्रेक्षकाणां प्रीतये। तद्यथा मृच्छकटिके षष्ठेऽङ्के—

दारक —रदनिके कैषा।

रदनिका—जात, आर्या ते जननी भवति।

दारकः —रदनिके, अलीकं त्वं भणसि। यद्यस्माकमार्याजननी, तत्किमर्थमलंकृता।

तत्रैव दशमेऽङ्के पुनर्वध्यभूमिदृश्येन।

रोहसेनः —अरे चाण्डाला मां मारयत मुञ्चत पितरम्।

ऊरुभङ्गे करुणनिर्भरा वाणी दुर्जयस्य प्रेक्षकान् द्रावयति। तद्यथा-भग्नोरोर्दुर्योधनस्याङ्क आसनं जिघृक्षतो दुर्जयस्य वचनम्—

दुर्जयः ( दुर्योधनम् )—अहमपि खलु तेऽङ्क उपविशामि। कुत्र नु खलु महाराजो गमिष्यति।

दुर्योधनः —भ्रातृशतमनुगच्छामि।

दुर्जयः —मामपि तत्र नय।

स पितरं दुर्योधनं पितामहसमीपं नेतुमुद्यतो वर्तते।

अश्वत्थामा तु दुर्जयमभिषेकं विनैव राजपदमर्पयति—

विनाभिषेकं राजा त्वं विप्रोक्तैर्वचनैर्भव।

कालिदासस्तु शिशूनां पुत्राणाञ्च वर्णनं सस्पृहं करोति। अभिज्ञान-शाकुन्तले सोऽयं कालिदासो भरतस्य प्रकल्पितवृत्तेन भारतमेव शश्वत् समुत्साहयति। तद्यथा

बालः —जृम्भस्व रे सिंहशावक, जृम्भस्व दन्तांस्ते गणयिष्ये।

पिता दुष्यन्तस्तं परिलक्ष्य किञ्चित् साधु वदति—

स्पृहयामि खलु दुर्ललितायास्मै—

"आलक्ष्यदन्तमुकुलाननिमित्तहासैः" इत्यादि।

बालो दुष्यन्तं प्रत्याख्याति—न खलु त्वम्। दुष्यन्तो मम तातः।

युवा पुत्रः परामर्शेन पितुः सहायमाचरतीति सनातनरीतिः। 'नागानन्दे मित्रावसुर्जामात्रे क उपहारो देयः' इति निर्णेतुमाहूयते।

उत्तररामचरितं खलु पुत्रस्य भूमिकामुत्सेचयति। तद्यथा—

तमसा—प्रसवः खलु प्रकृष्टपर्यन्तः स्नेहस्य। परं चैतदन्योन्यसंश्लेषणं पित्रोः।

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति पठ्यते॥ ३.१७

### कुमारः

उत्तररामचरिते चतुर्थपञ्चमाङ्कयो राजकुमाराणां भूमिका सातिशयं पराक्रमगर्भिता शोभते। तत्र लवः कुशश्चन्द्रकेतुश्च द्वादशवर्षीया रणभूमौ युववद् व्यवहरन्ति लोकान् प्रीणयन्ति च रघुकुलोचितशौर्येण विनयसौष्ठवेन च। एक एव लवश्चन्द्रकेतुसेनाधुरंधरान् पराभवति जृम्भकास्त्रादिप्रयोगेण शाययति च।

कुमाराणां शौर्यपथपद्धतिर्भासस्य पञ्चरात्रेऽभिमन्योः पराक्रमनिदर्शनेनादर्शीभूता।

### अनुनायकः

प्रधाननायकस्यानुवर्तिनो विलसन्ति नाटकेषु लक्ष्मणादयोऽनुनायकाः। ते नायकस्य भ्रात्रादिकाः कौटुम्बिका भवन्ति, मित्राणि वा सुहृत्कार्यं साधयन्ति। आत्मत्यागिनस्ते प्रधाननायकस्यान्तरङ्गभावेन तेषामाज्ञानुसारिण आदर्शभूता राजन्ते।

हनुमान् वा लक्ष्मणो वानुनायककोटिं समुपस्थापयति।

### मित्रम्

नाटकेषु राज्ञो मित्रं तु विदूषको विदित एव। अमात्यादीनामपि मित्राणि क्वचिद् भूयिष्ठमुदात्तभरं निर्वहन्ति। तद्यथा मुद्राराक्षसे चन्दनदासः।[1] स कञ्चित्कालं राक्षसस्य स्वमित्रस्य विषमे समुपस्थिते गृहजनं गोपायति। तदा चाणक्येन स विवदते—

चाणक्यः—तत्क्रियतां सुहृद्वचः। समर्प्यतां राक्षसगृहजनः। अनुभूयतां विचित्रो राजप्रसादः।

चन्दनदासः—नास्ति मे गेहेऽमात्यगृहजनः।

---

[1] राक्षसो द्वितीयेऽङ्के तं सुहृत्तम् इति कथयति।

चाणक्यः —तद्रक्ष परकलत्रेणात्मनः कलत्रं जीवितं च ।

चन्दनदासः —आर्य किं मे भयं दर्शयसि। सन्तमपि गेहेऽमात्य-राक्षसस्य गृहजनं न समर्पयामि, किं पुनरसन्तम् ।

चाणक्यः —चन्दनदास, एष ते निश्चयः ।

चन्दनदासः —बाढम् । एष मे निश्चयः ।

चाणक्य :—( स्वगतम् साधु चन्दनदास, साधु ।

सुलभेष्वर्थलाभेषु परसंवेदने जनः ।
क इदं दुष्कर कुर्यादिदानीं शिबिना विना ॥ १-२३

( प्रकाशम् ) चन्दनदास एष ते निश्चयः ।

चन्दनदासः — बाढम्

चाणक्यः —( सक्रोधम् ) दुरात्मन्, दुष्टवणिक्, अनुभूयतां तर्हि नरपति क्रोधः ।

चन्दनदास. — सज्जोऽस्मि । अनुतिष्ठतु आर्य आत्मनोऽधिकार-सदृशम् ।

चाणक्यः —उच्यतां दुर्गपालो विजयपालः । गृहीतगृहसारमेनं सपुत्र-कलत्रं संयम्य तावद्रक्ष यावन्मया वृषलाय कथ्यते । वृषल एवास्य प्राणहरं दण्डमाज्ञापयिष्यति ।

चन्दनदासः —दिष्ट्या मित्रकार्येण मे विनाशो न पुरुषदोषेण ।

## वीरसहायः

युद्धप्रवृत्तिपरकेषु नाटकेषु प्रधाननायकस्य विविधयोग्यताप्रपन्ना वीराः साह्यमाचरन्ति । तेषां समीक्षादृष्टिः क्वचित् क्वचिदुत्तमैव विलसति तद्यथा दूतघटोत्कचे भीमपुत्रस्य घटोत्कचस्य कौरवश्रेष्ठधृतराष्ट्रमधिकृत्य समीक्षा—

अये अयमत्रभवान् धृतराष्ट्रः । अनार्यशतस्योत्पादयिता । अयं ननु ललितगम्भीराकृतिविशेषः । आश्चर्यमाश्चर्यम् ।

वृद्धोऽप्यनातत वलीगुरुसहृतासः
श्रद्धेयरूप इव पुत्रशतस्य धृत्या ।
मन्ये सुरैस्त्रिदिवरक्षणजातशङ्कै-
स्त्रासान्निमीलितमुखोऽत्रभवान् हि सृष्टः ॥

सोल्लुण्ठमिदं वचः समीक्षागर्भमेव चरित्रचित्रणकलायाः परमोत्कर्षं प्रस्तौति ।

स घटोत्कचो दुर्योधनं प्रति ब्रूते—राक्षसेभ्योऽपि भवन्त एव क्रूरतराः।

ईदृशानां पराक्रमशालिनां शत्रुपक्षस्योत्साहशातनमपि प्रधानं कर्म प्रशस्यम्भवति। तद्यथा घटोत्कचस्य—

दष्टोष्ठो मुष्टिमुद्यम्य तिष्ठत्येष घटोत्कचः।
उत्तिष्ठतु पुमान् कश्चिद् गन्तुमिच्छेद्यमालयम्॥

वीरसहायाः परिवारे गणिता भवन्ति। बालचरितस्य द्वितीयस्याङ्कस्यान्तिमे भागे शूलः कुण्डोदरो मनोजवो नीलश्च कात्यायन्या सहायकास्तस्याः परिवारे भासेन गणिताः।[1]

युध्यमानौ वीरौ विश्रमितायोधनव्यापारौ कदाचिदन्येषा महावीराणां सम्बन्धिनां धनुर्वेदशिक्षा-चतुरत्वं प्रेक्षितुं सहमतौ बभूवतुः।[2]

वेणीसंहारे कर्णो वृषसेनोऽश्वत्थामा च प्रथिता वीरसहाया सन्ति। तेषां पराक्रमान् यथायोगं नाटकमिदं चित्रयति।

### अमात्यः, मन्त्री, सचिवः

अमरकोशे तु मन्त्री धीसचिवोऽमात्योऽन्ये कर्मसचिवाः। यत्र-यत्र राजा तत्र-तत्र तस्य मन्त्रिण आवश्यतानुसारेण वर्तन्ते।[3] यौगन्धरायणो मन्त्रिभिः परामृश्य लावाणकदाहव्यपदेशेन राजमहिषीं स्वप्नवासवदत्ते प्रच्छादयति अपनयति वा तां न्यासे निक्षिपति च।[4] सर्वमेतत् कौशाम्बीं परिपालयामीति मत्वा विधत्ते। रुमण्वान् नामको मन्त्री राजानं पर्यवस्थापयति परिचरति च। तत्रैव 'अनाहारे तुल्य' इत्यादि।

षष्ठेऽङ्केऽमात्यस्य माहात्म्य विशदीकृतं राज्ञो वाचा—

मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः।
भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः॥ ६.१८

---

१. ततः प्रविशति कात्यायनी सपरिवारेत्यनेन स्पष्टीकृतम्।

२. वेणीसंहारे चतुर्थाङ्के भीमकर्णौ।

३. यौगन्धरायणेन प्रोक्तम्—
रिपुनगरे वा बन्धने वा वने वा पुनरधिगतराज्यः पार्श्वतः श्लाघनीयम्।
इत्यनेन राजामात्ययोः सन्निधिरेव विश्रुतः।

४. यथामन्त्रिभिः सहसमर्थितं तथा परिणमति। स्वप्ने प्रथमेऽङ्के।

प्रतिज्ञायौगन्धरायण उभयपक्षयोर्मन्त्रिणः काले-काले युद्धभूमाव-युध्यन्त।

विपत्तिकाल आत्मरक्षार्थं राजामात्यमेव प्रतिज्ञायौगन्धरायणस्य प्रथमाङ्के स्मरति। तद्यथा मन्त्रिणा यौगन्धरायणेन प्रकाशितम्—

रिपुनृपनगरे वा बन्धने वा वने वा
समुपगतविनाशः प्रेत्य वा तुल्यनिष्ठम्।
जितमिति कृतबुद्धिं वञ्चयित्वा नृपं तं
पुनरधिगतराज्यः पार्श्वतः श्लाघनीयम्॥ १.१४

इति मन्त्रिणो विशेषस्यापि कार्यदिशामिगति। मन्त्रि विशेषः प्रतिजानीते—

मोचयामि न राजानं नास्मि यौगन्धरायणः॥१ १६

अविमारकेऽमात्यः कौञ्जायनो भर्तृदारिकाया उपवन-विहारे रक्षार्थं सहगच्छति। कस्मै राजकन्या प्रदेयेति भूतिक अमात्यो निवेदयति।

चाणक्यो राक्षसश्च मुद्राराक्षसे मन्त्रिद्वयं राजते। एतयोर्द्वयोश्चाणक्यो नन्दवंशं समुत्खातितवान्, चन्द्रगुप्तं राजपदमधिष्ठापितवांश्च। सोऽयम-मात्यो निवेदयति—वृषल एव केवलं प्रधानप्रकृतिरस्मास्वारोपितराज्य-तन्त्रभारः सततमुदास्ते। अयममात्यः न केवलं कुटिलनीतिज्ञ एवापितु कूटविधानं साधयन् देवगुरुमप्यतिशेते। न राज्ञश्चन्द्रगुप्तस्य किमपि करणीयं विद्यते। अयं तु चाणक्योऽमात्यो यो निश्चिनोति—किं करणीयं चन्द्रगुप्तस्य प्रतिष्ठापनार्थम्, केन प्रकारेण तत् करणीयम्, कः कुत्र नियोज्यः, राजापि कथं नियोज्यः, प्रतिद्वन्द्वी केन प्रकारेण स्वहितार्थं संग्राह्य इति। न तस्मै पापं वा पुण्यं वा विशेषपरमपितु येन केन प्रकारेण सिद्धिः कथं भवेदिति स चिन्तयति, करोति, कारयति च। अनिशं जागर्ति चाणक्यः। यौगन्धरायण इव महामात्योऽयं चाणक्यः स्वजनानात्मनो विश्वासघातिन इव कृत्वा परपक्षस्य स्वजनीकरोति। स कथयति— तत्तत्कारणमुत्पाद्य कृतकृत्यतामापादिताश्चन्द्रगुप्तसहोत्थायिनो भद्रभटप्रभृतयः प्रधानपुरुषाः।

मुद्राराक्षसे मन्त्री सर्वाधिकारप्रपन्नो वर्तते। चन्द्रगुप्तस्तु चाणक्या-देशानुसारेणैव कलहायतेऽपि। राक्षसस्तु नन्दराजस्य शासनकाले सर्वेषां प्रमुखराजकीयतन्त्राणां सूत्रधारो बभूव। मलयकेतोः कालेऽपि स एवाद्यो-विधं निर्णयति पञ्चमेऽङ्के—

प्रस्थातव्यं पुरस्तात् खसमगधगणैर्मामनुव्यूह्य सैन्यै—
गान्धारैर्मध्ययाने सयवनपतिभिः संविधेयः प्रयत्नः ।
पश्चाद्गच्छन्तु वीराः शकनरपतयः सम्भृताश्चीनहूणैः
कौलूताद्यश्च शिष्टः पथि परिवृणुयाद्राजलोकः कुमारम् ।

अत एवामात्यः प्रधानसेनापतिरपि वर्तते । राजा मन्त्रिणमभिवादयते ।[1]

## सूतः, सारथिः

सूतस्तु सारथिरेव रथवाहकः । प्रायो युद्धक्षेत्रेऽन्यत्राप्यतिशयप्रतिष्ठितो बभूव स्वचारित्र्येण ज्ञान-विज्ञानप्रपन्नत्वेन च ।

प्रतिमायाश्चतुर्थेऽङ्के आवश्यकज्ञानाय रथी तमेवानुयुङ्क्ते[2] । स भरतं शिष्टाचारं शास्ति[3] । स आवश्यकतया निवेदकोऽपि भवति रथिनं परिचाययति च ।[4]

कर्णभारे सारथिः शल्यो भविष्ये कौरवचमूनां नायकोऽभवत् । अनेन नियोगेन सारथेर्महानुभावः सुसिद्धः । कर्णस्तस्य योग्यतामेव प्रमाणयति, तस्मै स्वकीयमस्त्रस्य वृत्तान्तं निवेदयति च ।

सारथिः ( बृहन्नला ) पञ्चरात्रे राजाज्ञानुसारेण रणविस्तरं श्रावयति द्वितीयेऽङ्के । तृतीयेऽङ्केऽपि युद्धविस्तरमभिमन्योः सूतो द्रोणादीञ्छ्रावयति । सोऽत्र न केवलं संवाददातैवापि तु लज्जास्कोऽस्ति । तद्यथा—

सूतः —निवेद्यतां सर्वक्षत्राचार्यपुरोगमाणां क्षत्रियाणाम् । एष हि—

अपास्य नारायणचक्रजं भयं चिरप्रनष्टान् परिभूय पाण्डवान् ।
धनुस्सहायैः कुरुभिर्न रक्षितो हतोऽभिमन्युः क्रियतां व्यपत्रपा ॥ ३.९

---

१. मुद्राराक्षसे पञ्चमेऽङ्के—
मलयकेतुः (राक्षसम्) आर्य अभिवादये ।

२. प्रतिमायाश्चतुर्थेऽङ्के भरतः सारथिं सुमन्त्रं पृच्छति—क्व तत्रभवान् ममार्यो रामः ।

३. तत्रैवाल गुरुजनापवादमभिधातुम् ।

४. तत्रैव भरतविषयकः परिचयः सुमन्त्रमुखेन—रघोश्चतुर्थ इत्यादि । ४.९

पुनश्च स आदिशति— शान्तिकर्मानुष्ठीयताम् ।

भीष्मः —किमर्थम् ।

सूतः — उचितं ते पुरा कर्तुं ध्वजे बाणप्रधर्षिते ।
अयं हि बाणः कस्यापि पुंखे नामाभिधीयते ॥ ३.१८

अभिज्ञानशाकुन्तले सूतो मृगयाकाले राज्ञो मित्रवदाचरति। स स्वत एव राजानं प्रशंसति—

मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनम् ॥ १.६

सोऽश्वाना सौविध्यं चकार ।[1]

इन्द्रसारथिर्मातलिर्दौत्यमपि अनुतिष्ठति । तद्यथाभिज्ञानशाकुन्तले मातलिर्दुष्यन्तं कथयति—श्रूयतां यदर्थमस्मि हरिणा भवत्सकाशं प्रेषितः ।

स एव मातलिरिन्द्रकार्यानन्तरं दुष्यन्तं विमानेन मर्त्यलोकमवतार यति । अस्यां यात्रायां तयोः परस्परं वार्तालापेन परिपृच्छया साह्या-चरणेन च सारथेः पदं महिमान्वितं जायते ।

वेणीसंहारे द्रोणस्य सारथिस्तस्मिन्नुपरतेऽश्वत्थामानं सूचयति तमा-श्वासयति च । स तं शिक्षयति—

त्वमपि तदनुरूपेण वीर्येण शोकसागरमुत्तीर्य सुखी भव ।

सारथिस्तु सूत एवेति वेणीसंहारे निर्णीतमधोविधम्—

अश्वत्थामा—( कर्णमधिकृत्य )

जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले ॥ ३.३५

वेणीसंहारे सारथिस्तु स्वामिनो महान् हितचिन्तक उपदेष्टा च वर्तते । विपन्नं क्षतश्च युद्धोद्यतं दुर्योधनं सारथिः कथयति—

अक्षमाः सम्प्रति वाहास्ते रथमुद्वोढुम् । स्वामिनि मूर्च्छिते स स्वयमेव तस्य रक्षोपायं व्यधात् ।

उत्तररामचरिते सुमन्त्रः सारथिश्चन्द्रकेतुं शोधयति । तद्यथा—

सुमन्त्रः —वत्स नैतदेवमस्त्रेषु विशेषतो जृम्भकेषु । यतः

कृशाश्वतनया ह्येते कृशाश्वात् कौशिकं गताः ।
अथ तत्सम्प्रदायेन रामभद्रे स्थिता इति ॥ ५.१५

---

१. प्रथमाङ्के—आर्द्रपृष्ठाः क्रियन्तां वाजिन इति

## कञ्चुकी, कञ्चुकीयः, काञ्चुकीयः

कञ्चुकी वस्तुतो राज्ञः परिजनः। अमरकोशे तु—

अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः।
सौविदल्लः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥

प्रायशोऽन्तःपुरचारी कंचुकी बहुविधकार्याणां सम्पादकः शिष्टाचारं निर्दिशति राजपुरुषेषु अन्तःपुरीयेषु परिचारेषु। तद्यथा—सम्भषकं प्रति ब्रूते[1]—

परिहरतु भवान् नृपापवादं न परुषमाश्रमवासिषु प्रयोज्यम्।

राजकुलस्य सदस्यानां धर्मपरिपालनं व्यवस्थापयति धर्माचरणे किं दुष्करमिति राजकन्या बोधयति च[2]। कञ्चुकिमुखेन राजदारिकाया ब्रह्मचारिणेऽनुग्रहो व्यज्यते। न केवलं राजधान्यामपि तदन्यत्रापि राजकुलकुटुम्बिभिः सहाचरति। यथोत्तररामचरिते वाल्मीकेराश्रमे कौसल्यया सह गृष्टिनामकः कञ्चुकीयोऽतिथिसत्कारस्य भारं बिभर्ति। राजकीयसन्देशं तस्य सम्बन्धिन उपनयति स्वप्ने षष्ठेऽङ्के। तत्रैव स राजानं सान्त्वयति च—

**कः कं शक्तो रक्षितुं मृत्युकाले इत्यादि ६.१०।**

राजकुमार्या विवाहस्य विषयेऽपि तस्य मतं विज्ञेयमभवद्राज्ञे।

महत्त्वपूर्णघटनानां निवेदयिता क्वचित् कंचुकी भवेत्। स प्रतिज्ञायौगन्धरायणे राजानं सूचयति शालंकायनेन वत्सराजग्रहणमिति वृत्तान्तम्। स राज्ञो विशिष्टादेशानुच्चपदाधीशान् नयति। स राजप्रासादस्य महत्त्वपूर्णद्वारस्य रक्षकोऽपि प्रतिभाति प्रतिज्ञायौगन्धरायणस्य द्वितीयेऽङ्के, वेणीसंहारस्य षष्ठाङ्के च। स राजानं विज्ञापयति शालङ्कायनस्य प्रवेशम्। स प्रश्नानुसारेण वासवदत्ताया वत्सराजस्य कुतस्त्यं राज्ञे निवेदयति। उत्तमोत्तमातिथये कथं सत्कारो विधेय इति कञ्चुकिनो भर आसीत्।[3] वेणीसंहारे कंचुकी दुर्योधनस्य रथकेतनो भग्न इति सूचयति। राज्ञो महासेनस्य प्रतिनिधीभूय स यौगन्धरायणाय भृङ्गारमर्पयति।

प्रतिमानाटकस्य प्रथमाङ्कस्य विष्कम्भके काञ्चुकीयोऽभिषेकादीनां धार्मिकविधीनां सम्भारान् समगृह्णात्।

---

१. स्वप्न० १.५

२. तत्रैव १.८

३. प्रतिज्ञा० तृतीयेऽङ्के

कञ्चुकिनः समीक्षादृष्टिरपि भासेन प्रतीष्टा। स रामस्याभिषेक-प्रस्तावमनुमोदते—

इदानीं भूमिपालेन कृतकृत्याः कृताः प्रजाः।
रामाभिधानं मेदिन्या शशाङ्कमभिषिञ्चता ॥ १.४

प्रतिमानाटके स वनवासविषये रामेणा सह विवदते।[1] न खलु न खलु गन्तव्यम्। इत्यादि

रामवनवासोद्विग्नो दशरथ इति वृत्तं स प्रतिहारीं कथयति। पश्चा दमात्येभ्यो निवेदयत्यस्वास्थ्यं महाराजस्य।

महतामागमनसूचना स राज्ञे ददाति, तान् प्रवेशयति च।[2] दूतवाक्ये 'कृष्णागमनं दुर्योधनं श्रावयति इत्यनेन क्वचित् प्रतिहारीवदाचरति।

दूतवाक्ये स प्रतिहाराधिकृतानादिशति—आहूयन्तां सर्वे राजानो दुर्योधनेन मन्त्रणाय। अस्मिन् रूपके चित्रपटानयनापनयनाभ्यां स प्रेष्यवत् प्रतिभाति।

बालचरिते कञ्चुकी कंसेन ज्योतिर्विद्भिः पुरोहितैश्च सह परामृष्टुं नियुज्यते।[3]

सोऽयं कञ्चुकी स्वकीयामन्तःपुरसेवां वृद्धावस्थां च पुनः पुनरा-क्रोशति। तद्यथा विक्रमोर्वशीये—

सेवाकारा परिणतिरभूत् स्त्रीषु कष्टाधिकारः ॥ ३.१

विक्रमोर्वशीयस्य पञ्चमेऽङ्केकञ्चुकी दस्युगृध्रग्रहणाय नागरिकान् विज्ञापयितुं नियुज्यते।

राजगृहाधिष्ठितः स विक्रमोर्वशीये पञ्चमेऽङ्के राजदर्शनकामानां सूचनां राज्ञे निवेदयति। तत्र च्यवनर्षेराश्रमादागतौ तापसीमायुष्कुमारं च राज्ञः सविधं नयति।[4] राजकुमारस्याभिषेकायोजनं कर्तुं स राज्ञः

---

१. कञ्चुकी—अथ च तयानाहूतोपसृतया भरतोऽभिषिच्यतां राज्य इत्युक्तम्। अत्राप्यलोभः।

२. दशरथाय कथयति—सुमन्त्रः प्राप्त इति प्रतिमायां द्वितीयेऽङ्के। अभिज्ञान-शाकुन्तलस्य पञ्चमाङ्के—कञ्चुकी राजानं सूचयति—'काश्यपसन्देशमादाय तपस्विनः सम्प्राप्ताः' इति।

३. द्वितीयाङ्के।

४. अभिज्ञानशाकुन्तले कञ्चुकी कण्वाश्रमादागतान् तपस्विनः राज्ञः समीपं नयति।

सन्देशममात्यपरिषदमुपनयति। अभिज्ञानशाकुन्तलस्य पञ्चमेऽङ्के कञ्चुकी राजभवनस्य द्वारपालवत् प्रतिभाति, यतो हि नाम स कण्वशिष्यागमनं राज्ञे न्यवेदयत्। स राज्ञो वचनादुपाध्यायं सोमरातं विज्ञापयति तपस्विनां सत्कारं विधातुम्।

राजभवने राज्ञः समीपतरमनिशमुपस्थितः कञ्चुकी स्ववयश्चारित्र्य-विश्वासभूमित्वादिभिर्महत्त्वं भजते।

मुद्राराक्षसस्य तृतीयाङ्के चन्द्रगुप्तः कञ्चुकिनमादिशत्ति- अतः प्रभृत्य-नादृत्य चाणक्य चन्द्रगुप्तः स्वयमेव राज्यं करिष्यतीति गृहीतार्थाः क्रियन्तां प्रकृतयः। अयं कञ्चुकिनो विशेष एव कार्यक्रमः।

यद्यपि वेणीसंहारे कञ्चुकी आत्मानमधोविधं वर्णयति—

'नोच्चैः सत्यपि चक्षुषीक्षितमलं श्रुत्वापि नाकर्णितम्'

तथापि स स्वतन्त्रो द्रष्टा, विचारकः, विषयप्रतिपादकश्च स्ववचनैः कार्यैश्च प्रतिभाति। स दुर्योधन कटु समालोचते—अद्याप्यन्तःपुरविहारम-नुभवति। अयमपरमयथातथं स्वामिनश्चेष्टितम्। कुतः

आशास्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-
स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः।
प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो
बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात्। २.२

स दुर्योधनं विसंवदति—(अभिमन्युवधमधिकृत्य) का नामात्र श्लाघा।

साधारणभृत्यवत् कञ्चुकी वेणीसंहारस्य षष्ठाङ्के राक्षसमुनये भृङ्गार-जलमानीयार्पयति। तत्रैव स स्वतन्त्रविचारक इव तं मुनिं संशोधयति—भीमसुयोधनयोरिति कथय। परतः स युधिष्ठिरं समाश्वासयति।

वेणीसंहारे षष्ठाङ्के कञ्चुकी नायकाय युधिष्ठिराय धनुरुपनयति।

नायकादपि सूक्ष्मतरमन्वीक्षणं कञ्चुकी क्वचिद् प्रमाणयत्येव। वेणी-संहारे राक्षसमुनी रहस्यकूटकपटोद्घाटनमयं कुर्यादिति कञ्चुकिनो बिभेति। अन्ततः कञ्चुकी युधिष्ठिरं सूचयति—

धिङ् मुने राक्षससदृशं हृदयं भवतः। तदनु राक्षसो वदति—कथं ज्ञात-महमनेन। परतोऽपि कञ्चुकी आदौ भीमं प्रत्यभिजानाति स्म। स युधिष्ठिरं प्रति वक्ति—अयं खल्वायुष्मान् भीमसेनः।

स्वामिनीं राज्ञीं प्रति सर्वथात्मनिवेदनं कञ्चुकिनो महिमानं द्योतयति। वेणीसंहारे स द्रौपदीमनु मरणं व्यवस्यति।

उत्तररामचरिते काञ्चुकिन औदात्त्यं परिलक्ष्यते यत्र स जनकं शोधयति सप्तमाङ्के। तद्यथा—

मार्हसि दुःखयितुमतिदुःखितां देवीम्।

कञ्चुकिस्थाने सौविदल्लो बालरामायणस्य प्रथमाङ्के प्रयुक्तः।

## पीठमर्दः

अविमारके नाटके पीठमर्दस्तु अन्तःपुरीयः परिजन इति नायिकाया अधोवचनेन प्रतीयते[1]—

कुरङ्गी—अथ चेमे मयूरा अस्माकं राजकुलमानसे अतिपीठमर्दभावं कुर्वन्ति।

अत एव पीठमर्दो नायिकायाः प्रसादार्थमन्तःपुरे विचरतीति निश्चितमेव।

मालविकाग्निमित्रे परिव्राजिका कौशिकी पीठमर्दिका वर्तते। सा राज्ञे मालविकां प्रापयति।[2] दशकुमारचरितेऽपि पीठमर्दः शृङ्गारसहाय एव विलसति।[3]

बहुषु नाटकेषु विदूषको नायिकासख्यश्च पीठमर्दस्थाने व्यवहरन्ति।

## तापसः

नाटकेषु तापसः प्रेष्यवदाचरति कुलपतीनां नियोगेषु। तद्यथा नागानन्दे प्रथमाङ्के—आज्ञप्तोऽस्मि कुलपतिना कौशिकेन इत्यादि। राज्ञः कृते यथा कञ्चुकी भवति तथा कुलपतेस्तापस आचार्यस्य च शिष्यो भवतः।

## पुरोहितः

स्थितिविशेषेषु राजपुरोहितो रङ्गमधितिष्ठति। अभिज्ञानशाकुन्तले कण्वाश्रमादागतानामतिथीनां सत्काराय सोमरात उपाध्याय इतिनामा

---

१. सामराजदीक्षितानुसारेण—

पीठमर्दः शृङ्गारे सचिवः कुपितवधूप्रसाधकश्च।

—शृङ्गारामृतलहरी, पृ० १४१

२. विदूषकः—अयि उपस्थिता देवी पीठमर्दिका पण्डितकौशिकी पुरस्कृत्य तत्रभवती धारिणी।

३. दश० २.२

पुरोहितः स्वयमेव दुष्यन्तेन नियुज्यते । स तान् पुना राज्ञः समीपं नयति। 'पश्यतैनमिति ।'

पुरोहितः —( पुरो गत्वा ) एते विधिवदर्चितास्तपस्विनः । कश्चिदेषामुपाध्याय-सन्देशः । तं देवः श्रोतुमर्हति ।

सन्देहपदेषु वस्तुषु क्वचित् पुरोहितेन पुरस्कृतं समाधानं राज्ञोऽभिप्रेतमेव। राजा तं कथयति—

मूढो स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ ५.२६

शकुन्तला 'आ प्रसवादस्मदगृहे तिष्ठतु' इति तस्य समाधानम् । अपरं च स राजानं सूचयति—उत्क्षिप्यैनां ज्योतिरेकं जगाम ॥

तस्य यथाकालं राज्ञ आशीर्वचांसि फलन्ति-'विजयस्व' इति।

## विदूषकः

विदूषयत्यात्मानमिति । जात्या कस्यचिद् ब्राह्मणस्य दासीपुत्रो सम्मानितोऽपि जनः शृङ्गारपरायणस्य नायकस्य दक्षिणवामचरस्तस्य कृते प्राणानप्युत्स्रष्टुमुद्यतो विषमासु स्थितिषु अनन्यसाधारणप्रतिभया कार्यं साधयति ।[1] स तु नायकस्यापरे प्राणा इव सखा नाटकेषु महत्त्वं भजते । उत्कृष्टतमेषु हीनतमेषु वा कार्यजातेष्वबाह्य एव विदूषको नायकस्य दक्षिणहस्त एव ।

स राज्ञः कार्याकार्यविचारणायां भागी भवति । मृगयां प्रति स राजानं निरुत्साहयत्यभिज्ञानशाकुन्तले । राज्ञो मनोरञ्जनस्य, खिन्नता-निवारणस्य च स व्यवस्थां रचयति। कुत्र राजा तिष्ठतूपविशतु वेत्यादि विधानं कल्पयति सः ।[2]

पण्डितोऽप्यात्ममौर्ख्यप्रदर्शनेनापि हास्यमुत्पादयति । बहुज्ञोऽप्यल्पज्ञ इव तोरणमाला सर्प इति सूचयित्वा नायकस्य वासवदत्ता-संस्मरण-

१. मृच्छकटिकस्य दशमेऽङ्के
विदूषकः —भो भद्रमुखौ, मुञ्चतं प्रियवयस्यं चारुदत्तम्। मां व्यापादयत । प्राणपरित्यागेनात्मनः प्रियवयस्यमनुगमिष्यामि । स तु गृहस्वामिन्या अग्रे मरणमाकांक्षति—अतो भवत्याहमग्रणीर्भवामि ।

२. अभिज्ञानस्य द्वितीयेऽङ्के—साम्प्रतमेतस्यां पादपच्छायायां निषीदतु भवान् ।

वियोगजनितां चिन्तामपहरति। तत्रैव राज्ञः शयनाय कथां कथयति स्वाज्ञाननिर्दशिका चतुर्थेऽङ्के।[1]

विदूषकस्य प्रातिभ उत्कर्षस्तस्य प्रकल्पनासु प्रतिफलति। नायक उपरतामपि वासवदत्ता पश्यतीति धारणा एतस्मिन्नगरेऽवन्ति सुन्दरीनाम यक्षी प्रतिवसतीति तस्य प्रातवचनेनोद्धूयते। नायकस्य शृंगाराचाररहस्यं सम्यग् जानाति सः।

वाररसात्मकेष्वपि नाटकेषु विदूषकः प्रणिधित्वेन महत्त्वं भजते यथा प्रतिज्ञायौगन्धरायणे।

नायकाय विदूषको नायिकायै चेट्या समान एव पदेन प्रतिभाति। अविमारकस्य प्रथमाङ्के विदूषकः सन्तुष्टश्चेटी चन्द्रिका च समानस्तरीयौ विवदेते।

राज्ञेतरेषु स्वकार्येषु स नियुज्यते। स्वप्ने घोषवतीं नवयोगां विधातुं स प्रेष्यते। अविमारके भासो विदूषकं यथोचितं समुन्नयति—

गोष्ठीषु हास्यः समरेषु योधः शोके गुरुः साहसिकः परेषु।
महोत्सवो मे हृदि किं प्रलापैर्द्विधा विभक्तं खलु मे शरीरम् ॥४ २१॥

अनेन विदूषकस्य सर्वविधिकार्येषु कौशलं सुव्यक्तमेव।

सोऽयं विदूषको मायाचार आत्मानं यथापयोगं विपरिवर्तयति। तद् भासेन निर्वर्णितम्—

'यज्ञोपवीतेन ब्राह्मणः, चीवरेण रक्तपटः, यदि वस्त्रमपनयामि श्रमणको भवामीति' विदूषकवचनमविमारकस्य पञ्चमेऽङ्के।

मृच्छकटिके विदूषको जूर्णवृद्धेन प्रेषितं प्रावारकं चारुदत्तायोपनयति। स नायकस्य प्रेष्य एव चतुष्पथे मातृभ्यो बलिमुपहरति। रदनिकाग्राहिणः शकारस्य मस्तकं दण्डकाष्ठेन भंक्तुमुद्यतः पराक्रममूर्तिरेव स शकारमपवदति।

शकाराज्ञानुसारेण स उपविशति, उत्तिष्ठति रोदिति, हसतीति च तस्य मानसिकदौर्बल्यं प्रकटयति।

ब्राह्मणत्वविहीनोऽयं जनः सार्थवाहं चारुदत्तं गणिकां च शिरसा प्रणमति।

विश्वासभूमिरयं नायकस्य भवति। नायको मृच्छकटिके तस्मै सुवर्णाभरणानि न्यासीकर्तुं ददाति।

---

१. नगरं ब्रह्मदत्तं नाम। तत्र किल राजा काम्पिल्यो नाम।

विदूषकः स्वयं तु मृषाभाषोऽस्ति। अन्यानपि मृषावादेनात्मानमृणान्मोचयितुं शिक्षयति।[1]

विदूषको दौत्यमपि करोति मृच्छकटिके। पञ्चमेऽङ्के स वसन्तसेनायाः सन्देशं नायकायोपनयति यत्प्रदोष आगमिष्यामि। तस्या आगमनं चेटमुखाच्छ्रुत्वा स्वामिनं सूचयति।

नायकस्य मन्त्री विदूषकः कामोपचारेषु मृच्छकटिकस्य चतुर्थे पञ्चमे चाङ्कयोः स नायकं वसन्तसेनाया विमुखीकर्तुमेव यतत इति तस्य विपरीतरीतिर्वसन्तसेनाया औदात्यस्याज्ञानादेव समभवत्। मूर्खोऽयं मूर्खोऽयमित्यभिहितो वस्तुतो मौर्ख्यपूर्णमाचरति स कतिपयप्रसंगेषु। स्वकीये मौर्ख्यपूर्णेऽपि व्यवहारे स समयानुरूपेण गाम्भीर्येणानुवासितः।[2]

मृच्छकटिकस्य नवमेऽङ्के विदूषको नायकं प्रति शकारस्य दुर्व्यवहारं प्रतीत्य शकारं ताडयति, स्वयमपि तेन ताड्यते।

विदूषकस्य भरः क्वचिदुदात्ततमो दृश्यते। मृच्छकटिकस्य नवमेऽङ्के चारुदत्तस्तं नियोजयति—पुत्रं च मे रोहसेनं परिपालयस्वेति।

कालिदासीयो विदूषको शृङ्गारभूमौ नितरां वैषम्यनिवारको विलसति। मालविकाग्निमित्रे परं कपटकापटिको नायकस्य नायिकयासङ्गमनायोपायवैविध्यं विरचयति।[3] प्रथमं तावन्मालविकानृत्यप्रदर्शनं द्वितीयं च दूत्या वकुलावलिकाया योगेन प्रमदवने नायिकामिलनं चायोजयति।

विदूषकस्तूपायदर्शी वैषम्यनिरासप्रसङ्गे। किमत्र कर्तव्यमिति प्रश्नस्योत्तरं विदूषकस्य—अस्त्यत्रोपाय इति श्रूयते मालविकाग्निमित्रे। स नायकस्य प्रियवस्तूनां रक्षको भवति॥

विक्रमोर्वशीये राजा तस्मा उर्वशीपत्रं रक्षितुं ददाति। नायकोऽपि नायिकासंगमानुभावान् विदूषकेण सह संलापेन सामाजिकानुपकरोति। यथा—

---

१. मृच्छकटिके तृतीयेऽङ्के।

२. मृच्छकटिके पञ्चमेऽङ्के वसन्तसेनां प्रति तस्यानुयोगा गम्भीरमुद्रया विहिताः। स चेटी पृच्छति किं भवत्यात्रैव स्वप्तव्यमिति।

३. एतदर्थं विदूषको धारिणीं दोलातः परिभ्रंशयति, तस्याश्चरणौ सरुजौ करोति चेति प्रथमः कपटः। नागमुद्रामधिगन्तुं स्वकीयस्य नागदंशस्य मिथ्यावार्तेति द्वितीयः कपटः।

अनीशया शरीरस्य स्ववशं हृदयं मयि।
स्तनकम्पक्रियालक्ष्यैर्न्यस्तं निःश्वसितैरिव ॥ २. १८ ॥

नैतद् दृष्टं भवेत् सामाजिकैरिति सन्दिहानः कविर्विदूषकेण सह वार्तया विदितं करोति।

चेटीवद् विदूषको राज्ञे पथप्रदर्शनं करोति। तथा हि विक्रमोर्वशीये—
राजा ( विदूषकं प्रति )—तदादेशय मणिहर्म्यपृष्ठं मार्गम्। तत्रैव स उर्वशी वासगृहमार्ग प्रदर्शयति।

नायिकां प्रति स्वानुरागप्रभावं नायको विदूषकमेव निवेदयति। तद्यथा विक्रमोर्वशीयस्य तृतीयेऽङ्के—

राजा ( विदूषकं प्रति )—वयस्य परमुहूर्तादागमनं देव्याः। तद्विविक्तं कथयिष्यामि स्वामवस्थाम्। ततः परं स उर्वशी-विषयिणीं मनोगतिं वर्णयति।

'राजा सन्तान-विहीनोऽस्ति' इति चिन्ता विदूषकस्य मानसे प्रतिफलति।[1] स मृगयाकर्मणि राज्ञः साह्यमाचरति।[2]

अभिज्ञानशाकुन्तले विदूषकस्तूच्चतमः प्रतिष्ठितः। तद्यथा राजा—
त्वमम्बाभिः पुत्र इति प्रतिगृहीतः। तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति।

विदूषकः—यथा राजानुजेन गन्तव्यं तथा गच्छामि। युवराजोऽस्मीदानीं संवृतः।

विदूषकस्योन्मत्तवत् कार्याणि हास्यं सृजन्ति। तद्यथाभिज्ञानशाकुन्तले—

मुनिसुताप्रणयस्मृतिरोधिना मम च मुक्तमिदं तमसा मनः।
मनसिजेन सखे प्रहरिष्यता धनुषि चूतशरश्च निवेशितः॥

विदूषकः—तिष्ठ तावत्, अनेन दण्डकाष्ठेन कन्दर्पबाणं नाशयिष्यामि। स दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति।

राजा—( सस्मितम् ) भवतु, दृष्टं ब्रह्मवर्चसम्।

विदूषकोऽपार्थकं च वदति। यथाभिज्ञानशाकुन्तलस्य षष्ठेऽङ्के स आत्मगतं वदति—

---

१ विक्रमोर्वशीयस्य पञ्चमाङ्कस्य प्रवेशके।

२. भोः इतो दक्षिणान्तेनापगतः स शासनीयः कुणपभोजनः।

यथाहं पश्यामि पूरयितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः ।

### विटः

कामकलाचार्यो विटो न केवलमात्मानमपित्वपरांश्च रमणान् रमणी-वेंश्याङ्गनाश्च कामार्णवे निमज्जयति । स शकारादीनां कृते वेश्याग्रहणे सहायः ।[१] स वेश्यामनुनयति मृच्छकटिकस्य प्रथमाङ्के[२] । शकारस्याङ्ग-रक्षकः तस्यैव मौर्ख्यं प्रकटयति । वेश्याकर्तव्यं वसन्तसेनां शिक्षयति ।[३] स गुणिनं चारुदत्तं भूरिशः प्रशंसति मूर्खं शकारं भृशं निन्दति च ।[४] सविमर्शमाचरति। विटस्यौदात्त्यं स्वगृहचौरस्यापि कृतार्थकरणेन सिध्यति । इदं तु विटसम्राजश्चारुदत्तस्य चरितम् ।

पञ्चमाङ्के गणिकाया वसन्तसेनायाः सहायको विटोऽनुत्तमकामकला-भिज्ञस्तामपि कामायन शिक्षयति ।[५] सोऽभिसारिण्याः परिचयं नायकाय साम्प्रत प्रस्तौति—

एषा फुल्लकदम्बनीपसुरभौ काले घनोद्भासिते ।
कान्तस्यालयमागता समदना हृष्टा जलार्द्रालका ॥ इत्यादि ५.३५

आशास्ते च—

दाक्षिण्यपण्यसुखनिष्क्रयसिद्धिरस्तु । मृच्छ ५.३६ ।

औदात्त्यमपि कविनियोगेन विटस्य प्रकटति । स वसन्तसेनां शकार-पाशाद्रक्षितुं तामुपायं संकेतयति ।[५] अष्टमेऽङ्केऽपि स वसन्तसेनां शकार-यन्त्रणाद्रक्षितुमसत्यमपि वदति—काणेलीमातः, सत्यं राक्षस्येवात्र प्रतिवसतीति ।

स शकारस्य निदेशेनाकार्यं कर्तुं नास्ति समुद्यतः । मारय वसन्तसेना-मिति श्रुत्वा कथयति—

बालां स्त्रियं च नगरस्य विभूषणं च
वेश्यामवेशसदृशप्रणयोपचाराम् ।

---

१. विटः शकारं सम्बोधयति—न भेतव्यं न भेतव्यम् ।

२. वेश्यासि सर्वं भज । मृच्छ, १.३२

३. मृच्छ, .३५—त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयम् । इत्यादि

४. दीनानां कल्पवृक्षः इत्यादि चारुदत्त-विषये अन्धस्य दृष्टिरिव इत्यादि शकार-विषये च ।

५. अत्र चारुदत्तगृहं । प्रविश्य कोपोऽत्यन्तं न कर्तव्यः ।

एनामनागसमहं यदि घातयामि
केनोडुपेन परलोकनदी तरिष्ये ॥ मृच्छ ८.२३

स वसन्तसेनावधोद्योगिनं शकारं गले गृह्णाति भूमौ पातयति च ।[1]

विटस्तु सद्वृत्तिभिरात्मगुणैश्चाविरहित एव प्रायः शोभते । 'वसन्तसेना मया मारिता' इति शकारवचनं श्रुत्वा स मूर्च्छति । नास्ति किंचिदपि नाट्यरसे मानवोत्कर्षविधायि यद् विटस्याचरणेषु वृत्तिषु वचनेषु वा न दृश्येत । स कथयति वसन्तसेना-मरणं दृष्ट्वा—

दाक्षिण्योदकवाहिनी विगलिता याता स्वदेशं रति-
र्हा हालङ्कृतभूषणे सुवदने क्रीडारसोद्भासिनि ।
हा सौजन्यनदि प्रहासपुलिने हा मादृशामाश्रये
हा हा नश्यति मन्मथस्य विपणिः सौभाग्यपण्याकरः ॥ ८.३८

द्वैधीभावो विटस्य योग्यताया असन्दिग्ध एव । शकारादीनामुपस्थानं तस्य माहात्म्यं क्षिणोत्येव ।

सोऽत्याचारविरोधेन शकारं मारयितुं खड्गमाकर्षति । न केवलं कविहृदय एव विटोऽपि तु सद्धर्माभ्युदयाय स क्रान्तिकारिदलं सम्मिलति ।[2]

नागानन्दे तृतीयेऽङ्के विटस्तु विदूषकेण साम्यं विधत्ते । स मधुपानेन स्त्रीवेशधरं विदूषकं स्वप्रियां मालविकां मत्वा तां कण्ठे गृहीत्वा प्रसादयितुं चेष्टते । तत्रैव चेट्या नवमालिकया सह तस्य प्रणय-प्रसङ्गः प्रवर्तते ।

### सेनापतिः

स्वप्नवासवदत्तेऽमात्यो रुमण्वान् सेनापतिर्भवति पञ्चमेऽङ्के प्रतिज्ञायौन्धरायणेऽमात्यो यौगन्धरायणः सेनापतिरस्ति ।

युद्धकाले सेनापतिर्नायकस्य साह्यमाचरति । शान्तिकाले स मृगयाशीलस्य नायकस्य सहायो भवति । अत एव स मृगया-व्यवस्थापकः प्रधानाधिकारी एव । अभिज्ञानशाकुन्तले स मृगयागुणनिदर्शनेन राजानमुत्साहयति मेदश्छेदकृशोदरमित्यादिश्लोकेन । राजा तमादिशति—'तेन हि निवर्तय पूर्वगतान् वनग्राहिणः' इत्यादि ।

---

१. शकारः कथयति—

सर्वकालं मया पुष्टो मांसेन च घृतेन च ।
अद्य कार्ये समुत्पन्ने जातो मे वैरी कथम् ॥ ८.२८

२. मृच्छ. अष्टमेऽङ्के

**शकारः राजश्यालः**

अपार्थमक्रमं व्यर्थं पुनरुक्तं हतोपमम् ।
लोकन्यायविरुद्धं च शकारवचनं विदुः ॥

शकारस्तु नीचजातीयो नगररक्षाधिकारी वर्तते। विश्वनाथानुसारेण स राज्ञोऽनूढाया स्त्रिया भ्राता।[1] मृच्छकटिके शूद्रकानुसारेण शकारः कुलटापुत्रः, राजश्यालः संस्थानकः, उच्छृङ्खलकः, कृतजनदोषभाण्डः, बहुसुवर्णमण्डित-मर्कटकः, कुट्टिनीपुत्र आसीदित्यनेन तस्य कार्यजातमनुमातुं शक्यते। न किमप्यकार्यं तस्याकरणीयं प्रतिभाति। मृच्छकटिकानुसारेण शकारो कपटनियोजनेऽप्यबाह्यः प्रत्युत्पन्नमतिरभियोगेषु परं निष्णातो महानुभावानां विपत्तिकोश एव स्खलिताचारः प्रतिभाति।

कालिदासानुसारेण श्यालस्तु क्वचिद्विमर्शप्रतिपन्नोऽपि भवति। अभिज्ञानशाकुन्तले स राज्ञेऽङ्गुलीयकं ददाति। तदा राज्ञो भावानुभावान् विमृश्य स निवेदयति—

'न तस्मिन् महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि। तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः। मुहूर्तं प्रकृतिगम्भीरोऽपि पर्यत्सुकनयन आसीत्।

शकारो नगरारक्षो नियोगानुसारेण पापव्यभिचारभूमिषु विचरति।

मृच्छकटिकस्य प्रथमेऽङ्के शकारस्य बलाद् वेश्या-ग्रहणं विख्यातमेव। तिरस्कृतानुनयां गणिकां स निन्दति।[2] स्त्रीमारणदक्षः[3] बलाद् वसन्तसेनां ग्रहीतुमिच्छति सः। शकारमुखात् प्रायशः पद्यमेव विगलितैतिहासिकतन्त्रं सापवादमवाच्यं च साटोपमेव निर्गलति। तद्यथा वसन्तसेनां प्रति—

चाणक्येन यथा सीता मारिता भारते युगे
एवं त्वां मोटयिष्यामि जटायुरिव द्रौपदीम् ॥ ८.३५

---

१. मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः।
सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः॥ साहित्यदर्पणे ३.४४

२. मृच्छ, १.२३

३. स्त्रीणां शतं मारयामि शूरोऽहम्। मृच्छ, प्रथमेऽङ्के। तत्रैव अष्टमेऽङ्के स कण्ठे निपीडयन् वसन्तसेनां मारयति।

स्वानि पापाचरितानि वैरसाधनहेतुना गुणिजनेष्वपि मिथ्यारोपयति।[1] कुटिलबुद्धिदुर्विलसितेन स नितरामसत्यमपि साध्विति प्रमाणयितुं क्षमते। परिनियन्त्रणं, परहितहननं च तस्याभ्यासक्रमः। अपरान् सुचरितानपि स्वार्थसिद्धये पापीकर्तुं चेष्टते स नृशंसो भोजेनान्नदानेन प्रलोभयति च तान्। अनेन प्रकारेण स्वभाषया व्यवहारेण चोद्वेगोद्वेल्लितमपि प्रेक्षकमानसं शकारो हास्यानुबन्धेन सङ्कुलयति। आत्मप्रवञ्चकः स बहुशः विकत्थते।[2]

स मृषावादनतत्परोऽपि शङ्कानिर्झरनिपातितः सत्यमपि वदति— एषा ( वसन्तसेना ) मया मारिता। कपटाचारः शकारो वदति—

चारुदत्तविनाशाय कल्यामि कपटं नवम्। मृच्छ. ८ ५४

## चेटः

चेटस्तु मृच्छकटिके शकारस्य वेश्याग्रहणे सचेष्टः सहायः[3] तामनुनयति। चारुदत्तस्य चेटः तस्य विदूषकस्य च पादं प्रक्षालयति स्वहस्ताभ्याम्।[4] वसन्तसेनाया भृत्यैश्चेटः कश्चित् प्रवहणवाहकोऽभवत्।[5] कश्चिदन्यश्चेटो द्वारपाल एव चारुदत्तस्य सकाशादागतस्य ब्राह्मणस्य सूचनां वसन्तसेनायै निवेदयति। स द्वारं रात्रा उद्घाटयति।[6] वसन्तसेनाया अपरश्चेटस्तु पुरोगामितया उद्दामनर्मपरायणतया च प्रेष्योऽपि स्वात्मवृत्तिकः प्रतिभाति पञ्चमाङ्कस्यान्तिमे भागे। स प्रश्नोत्तरद्वारेण वसन्तसेनां संज्ञापयति। स पद्येनापि स्वगतं वदति।

न खलु सामाजिकी प्रतिष्ठा चेटादीनां प्रतिभाति। तत्तु विदूषकस्य चेटविषयकसम्बोधनेन स्पष्टमेव।[7]

---

१. शकारो विटं कथयति—अरे वसन्तसेनां स्वयमेव मारयित्वा मां दूषयित्वा कुत्र पलायसे

२. न वा वञ्चितो भ्राता मम पिता मातेव सा द्रौपदी।
योऽसौ पश्यति नेदृशं व्यवसितं पुत्रस्य शूरत्वम्॥

३. मृच्छ, १.२६

४. तत्रैव तृतीयेऽङ्के

५. "चतुर्थेऽङ्के। षष्टेऽङ्के वसन्तसेनायाः शकारस्य च प्रवहणवाहकौ चेटौ।

६. तृतीयेऽङ्के

७. पञ्चमेऽङ्के—अरे दास्याः पुत्र कुम्भीलक ( चेटः ) उपसर्प ( चारुदत्तम् )

शकारस्य चेटः स्वामिन आज्ञां तिरस्कृत्य वसन्तसेनां मारयितुं नोद्यतः। स परलोकाद्बिभेति। शकारश्चेटेन ताडचते।

चेटश्शकारं निन्दति वसन्तसेनाया हत्याप्रसङ्गे—महदकार्यं कृतमिति।

चेटस्य विश्वसनीयता तु निःसन्दिग्धा विद्यत एव। चारुदत्तस्य गृहे निक्षिप्तं स्वर्णभाण्डं तेन दिवा रक्ष्यते।

न खलु चेटो बद्धवाक्। शकारस्य चेटः कथयति स्वामिविषये मृच्छकटिकस्य दशमेऽङ्के—अनार्य वसन्तसेनां मारयित्वा न परितुष्टोऽसि। साम्प्रतं प्रणयिजनकल्पपादपमार्यचारुदत्तं मारयितुं व्यवसितोऽसि।

### भटः

भटा योधाश्च योद्धारः।[1] स तु राजभृत्यः प्रायो राजनियोगे विचरति प्रासादे युद्धभूमौ, वनाश्रमे वा। नाटकीयो भटः क्वचिदवरकोटिको वीरोऽस्ति।[2] स साधरणो राजभृत्यः प्राकृतभाषी अपि भवति स्वप्नवासवदत्तस्य प्रथमाङ्के। दूतघटोत्कचे कर्णभारे च भटः संस्कृतभाषी कर्णं युद्धाय प्रतिबोधयति। तद्यथा सूत्रधारः सूचयति सभृत्य एव तत्रैवराज्ञः कुटुम्बस्य जनानां गमनाय मार्गं सुरक्षितं विधातुं साधारणजनानां तत उत्सारणां करोति। अत्र सम्भषकस्तु घोषकः। प्रतिज्ञायौगन्धरायणे भटो-यौगन्धरायणग्रहणस्य वासवदत्ताहरणस्य च घोषणां श्रावयति—उत्सरत, उत्सरत इति प्रतिमानाटके भटोऽपरेषां चेटादीनां कार्यनिरीक्षकोऽकारणमेव सुधाकारं ताडयति। स उपाध्यायस्य ज्योतिष- विषयकं मतं भरतं श्रावयति यद् रोहिण्यामयोध्यां प्रवेक्ष्यति कुमारः। भटोऽविमारकस्य पंचरात्रस्य च प्रथमाङ्के उपस्थानगृहस्य द्वारपालकः।[2] किन्तु स प्रासादाभ्यन्तरं नागच्छत्। स गोहरणविषयकं वृत्तं पंचरात्रे कञ्चुकि राज्ञे विदितं करोति।

---

१. अमरकोशे २.८.६१। भटः स्यात् पुंसि वीरे च विशेषे पामरस्य च। मेदिनी ३५.२३। भटस्तु मूलतः सूचनाप्रसारको राजभृत्यः।

२. भटः—जयतु महाराजः। एष आर्यकौञ्जायनो निवेदयितुमागतः। अविमारके

भटः—जयतु महाराजः। विराटनगराद्दूतः प्राप्तः। पञ्चरात्रे

राजधान्या भटो राज्ञो मन्त्रशालायां द्वाररक्षक आसीत्[1]। स बाह्यः परिचारकोऽपि वर्तते। प्रतिमानाटकस्य प्रथमाङ्के प्रतीहारी भटमाज्ञापयति– गच्छ त्वमपि महाराजवचनेनार्यपुरोहितं यथोपचारं त्वरय।

ऊरुभङ्गे भटो विष्कम्भकेण स्वदृष्टं भीमदुर्योधनयोर्गदायुद्धं प्रपञ्चयति।

अभिषेके पञ्चमेऽङ्के युद्धसमारम्भात्मकानि पूर्वोक्तभटोचितकार्याणि 'राक्षसः' इति नामकं पात्रं करोति। तद्यथा—

राक्षसः —यदाज्ञापयति महाराजः। ( निष्क्रम्य प्रविश्य ) जयतु महाराजः। एष हि रामः

धनुषि निहितबाणस्त्वामतिक्रम्यगर्वाद्-
हरिगणपरिवारो हास्यसम्फुल्लनेत्रः।
रणशिरसि सुतं ते पातयित्वा तु राज-
न्नभिपतति हि लङ्कां सन्दिधक्षुर्यथैव॥ ५ १५

बालचरिते भटो राज्ञ आदेशवाहक इव प्रतिभाति। स चतुर्थेऽङ्के कंसस्याज्ञां नन्दगोपपुत्रं श्रावयति– धनुर्महमनुभवितुमागन्तव्यमिति।

पञ्चमाङ्के स कंसाज्ञानुसारेण यत्सर्वं कृष्णविषयकं घटितम्, तत्सर्वं तस्मै श्रावयति। स भूयो ज्ञायतां वृत्तान्त इति राज्ञा पुनरादिष्टः।

दूतघटोत्कचे भट उच्चकोटिको दृश्यते। तत्र स आधुनिक-युद्धसंवाद-दातेव समीक्षादृष्टिप्रपन्नो महतामपि विश्रम्भस्थानं वर्तते।[2] यथा कर्णभारे कर्णं तथैवात्र धृतराष्ट्रं प्रतिबोधयति। स कौरवपक्षीयोऽपि निष्पक्षसमीक्षणेन शोभते। तद्यथाभिमन्योः स्वर्गगमनं तस्य मुखेन वर्णितम्—

योधस्यन्दनवाजिवारणवधैर्विक्षोभ्य राज्ञां बलं
बालेनार्जुनकर्म येन समरे लीलायता दर्शितम्।
सौभद्रः स रणे नराधिपशतैर्वेगागतैः सर्वशः
खे शक्रस्य पितामहस्य सहसैवोत्संगमारोपितः॥

---

१. पंचरात्रस्य तृतीयेऽङ्के भटो दुर्योधनं सूचयति—विराटनगराद् दूतः प्राप्त इति।

२. पंचरात्रेऽपि भटो युद्धसम्बन्धिवृत्तं विराटेश्वराय निवेदयति—भग्नः खलु कुमारस्य रथ इत्यादि।

इदं श्रुत्वा धृतराष्ट्रः कथयति—

कोऽयं मे प्रियमिति विप्रियं ब्रवीति।

अथ केनैष व्यसनार्णवस्य सेतुबन्धः कृतः।

भटः —महाराज, मया।

धृतराष्ट्रः —को भगवान्।

भटः —महाराज, ननु जयत्रातोऽस्मि।

सोऽभिमन्युवधं सप्रपञ्चं प्रस्तौति धृतराष्ट्राय।

दुर्योधनाज्ञानुसारेण स पाण्डवशिविरात्थनादरवस्य कारणं विज्ञाय तस्मै निवेदयति। तत्रार्जुनप्रतिज्ञां श्रावयति च—

येन मे निहतः पुत्रस्तुष्टिं ये च हते गताः।
श्वः सूर्येऽस्तमसम्प्राप्ते निहनिष्यामि तानहम्॥

स दुर्योधनं प्रति धृतराष्ट्रस्य स्पष्टोक्तिं श्रुत्वात्मगतमिव ब्रूते—

क्रूरमेवं नरपति नित्यमुद्यतशासनम्।
यः कश्चिदपरो ब्रूयान्न तु जीवेत्स तत्क्षणम्॥

पंचरात्रे भटः संवाददातास्ति, किन्तु तस्य प्रेष्यभावस्तत्र स्पष्ट एव। तं प्रति विराटेश्वरः कथयति—भगवांस्तावदाहूयताम्। धनुरुपनय। शीघ्रं कल्प्यतां स्यन्दनो मे।

## पुरुषः

भटस्तु परवर्तिनाटकेषु न दृश्यते। तत्स्थानीयः पुरुष इति पात्रं मुद्राराक्षसे चतुर्थाङ्के वर्तते। स स्वप्नवासवदत्तस्य भटवत् मलयकेतोरागमन-प्रसङ्गे लोकानुत्सारयति। तद्यथा—ततः प्रविशति वेत्रपाणिर्द्वितीयः पुरुषः।

पुरुषः —अपसरत आर्या अपसरत। अपेत मानवा अपेत इत्यादि।

उत्तररामचरिते पुरुषो लवं तर्जयति चतुर्थेऽङ्के—धिक् चपल किमुक्तवानसि। तीक्ष्णतरा हि आयुधश्रेणयः इत्यादि।

## प्रतिहारः, द्वारपालः, दौवारिकश्च

प्रतीहारो द्वारपाल-द्वाःस्थ-द्वाःस्थितदर्शकाः। अमरकोषे २.८६

अन्तःपुरे यथा प्रतिहारी नियुक्ता, तथैव राजप्रासादेऽन्यत्र वा राजकर्मभूमिषु प्रतिहारो वा द्वारपालो वा दौवारिको वा नियुक्तो बभूव। तत्र

कस्यचिद् राज्ञो बहवो दौवारिका आसन्[1]। त एव दर्शका इत्यनेन राज-दर्शनार्थिनां सूचना- सञ्चारस्तेषां प्रधानं कर्म।

अभिज्ञानशाकुन्तले द्वितीयाङ्के दौवारिको मृगया-शिविरस्थितं दुष्यन्तं सूचयति— एतौ द्वौ ऋषिकुमारकौ प्रतिहारभूमिमुपस्थितौ। राजाज्ञानुसारेण तौ प्रवेशयति सः।

दौवारिको नातिदूराज्जनान् प्रति राजाज्ञां कथयति। अभिज्ञान-शाकुन्तले स राज्ञा नियोज्यते—रैवतक, मद्वचनादुच्यतां सारथिः—बाणासनं रथमुपस्थापयेति।

मुद्राराक्षसे राक्षसस्य प्रतिहारभूमौ पुरुषो नियुक्तोऽभवत्। स द्वार-पालवत् दर्शनार्थिनां सूचनामदात्।

प्रतिहारो दशरथस्यागमने बालरामायणस्य चतुर्थाङ्के जनकं सूचयति।

साधारणराजपुरुषाणां कार्यालयस्य द्वारे दौवारिकस्थाने पुरुषो भवति। राक्षसस्य शिविरद्वारे पुरुषोऽस्ति। भागुरायणस्य कार्यालयद्वारे भासुरक इति ख्यातः पुरुषोऽभवत्।

## सुधाकारः, शोधनकश्च

प्रतिमानाटके तृतीयाङ्कस्य प्रवेशके सुधाकारः प्रतिमागेहस्य सम्मार्ज-नादिकं करोति। अत्र सम्मार्जनादिकं तु कपोतसन्दानकस्यापनयनं भित्तेः पञ्चङ्गुलिमुद्रया चित्रणं, द्वाराणां माल्यदामशोभाकरणञ्च व्यनक्ति। तस्यैतानि कार्याणि तु मृच्छकटिकस्य नवमाङ्कस्य शोधनकस्य कार्यैः साम्यं भजन्ते। सोऽपि व्यवहारमण्डपस्य सम्मार्जनं करोति। उपयोगार्थं भवनस्य सज्जीकरणं तस्य प्रधानं कर्म वर्तते।

मृच्छकटिके शोधनको व्यवहारमण्डपे आसनानि सज्जीकरोति। अपरञ्च सोऽधिकरणिवमधिकरणमण्डपस्य मार्गमादिशति। एतत्तु तस्य कार्यक्षेत्राद् बहिः कर्म।

कार्यार्थिनां निवेदनमधिकरणिकाय करोति सः। अधिकरणिकस्यादेशं शकाराय श्रावयति—गच्छाद्य न दृश्यते तव व्यवहारः। आगच्छ, दृश्यते

१. मुद्राराक्षसस्य चतुर्थाङ्के पुरुषः—कोऽत्र दौवारिकाणाम्।

तव व्यवहार इति च। स वसन्तसेनामातरञ्चारुदत्तञ्चाह्वयति, ताभ्यां मार्गं दर्शयति च। स चारुदत्तायासनं ददाति।

शोधनको राजानं चारुदत्तस्य निर्वासनमधिकृत्य विज्ञापयति, तद्विषयकं राजादेशं चाधिकरणिकायोपनयति।

एकस्यैव शोधनकस्य बहुविधानि कार्याणि रंगे दृश्यन्ते। सम्भवतः पात्रसंख्यान्यूनतां विधातुमेव तत्र प्रयोजनं स्यात्।

सुधाकारः शोधनकश्च चेटविशेषावेव। प्रतिमानाटके भासः स्पष्टयति—

भटः—( चेटमुपगम्य ताडयित्वा ) अङ्घो दास्याः पुत्र इत्यादिना।

अत्र कविना सुधाकार एव चेट इति संज्ञितम्।

### वैतालिकः, चारणः, चारणी च

विविधस्तालस्तेन व्यवहरति वैतालिको वस्तुतो राजधान्यां राजप्रासाद-शिखर एव मंगलपाठकः। वैतालिका नाटकेषु राजकीयोपलब्धेः सार्वजनीना घोषणां श्रावयन्ति, राजचरितं च विशदयन्ति स्वगानेषु। प्रातर्मध्याह्ने, सायाह्ने च वैतालिकगानं समयसूचकं भवति। प्रायशो वैतालिकवचनेन तस्योदात्तं समीक्षण प्रकटति।

वैतालिकगान द्विविध भवति—सामान्यम्, विशिष्टं च। सामान्यस्य उदाहरणमभिज्ञानशाकुन्तले—

'स्वसुखनिरभिलाष खिद्यसे लोकहेतोः' इत्यादि।

विशिष्टस्योदाहरण मालविकाग्निमित्रे यथा

परभृतकलव्याहारेषु त्वमात्तरतिर्मधु
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान्।
विजयकरिणामालानत्वं गतैः प्रबलस्य ते
वरद वरदारोधोवृक्षैः सहावनतो रिपुः॥ ५.१

वैतालिकानां जयशब्देन राज्ञ. प्रस्थानं सूच्यते।[1] स राजचरितं समीक्षते। यथा,

आ लोकान्तात् प्रतिहततमोवृत्तिरासां प्रजानां
तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो नः।

विक्रमोर्वशीये २.१

वैतालिकस्तु स्वगानेन श्रान्तमपि नायकं पुनर्नवीकरोतीति दुष्यन्तः स्वीकरोत्यभिज्ञानशाकुन्तलस्य पञ्चमाङ्के।[2]

---

१. मालविकाग्निमित्रे पञ्चमेऽङ्के।

२. एते श्रान्तमनस. पुनर्नवीकृताः स्मः।

वैतालिकनुपलक्षते राजशेखरो बालरामायणे—परपरितोषोपपाद्यफलं हि वैतालिकव्रतम्।[1]

वैतालिकस्तु नेपथ्याद् रंगपीठादपि च सुप्रभातं पठति।[2] तत्र शौर्य-गुणभोगावली गीयते।

चारणस्तु वैतालिकवदस्ति। किन्तु स स्तुतिपाठक एव, न तु मङ्गल-पाठकः। स युद्धभूमौ स्वामिनं स्वगानेन प्रोत्साहयति।

बालरामायणे चारणो रामरावणयोर्युद्धस्य साक्षाद् वर्णनं विभाव-यति। चारणी तमनुसरति स्वप्रवृत्तिषु।[2]

## दूतः

दूतस्तु स्वामिनियोगमनुसृत्य प्रतिपक्षिणं किञ्चित् सूचयति, परन्तु तस्य महिमा स्वत एवावश्यकतानुसारेण स्वामिने कार्यानुष्ठानेन परि-चीयते। दूतघटोत्कचे घटोत्कचो दूतवाक्ये कृष्णश्च दूतभरं निदर्शयतः। रामायणेऽङ्गदस्य दौत्यं प्रथितमेव। स्वच्छन्दतया दूतः स्वामिनियोगं विनापि स्वोपज्ञं व्याहरति। दूतेषु भूयिष्ठं प्रथिताः सन्ति यमदूताः।

## देवदूतः

दूतानामुपयोगो देवलोकेऽपि दृश्यते। तत्र देवदूत इन्द्रस्य सकाशा-दागत्य ब्राह्मणरूपेण कर्ण निवेदयति—

भोः कर्ण, कवचकुण्डलग्रहणाज्जनितपश्चात्तापेन पुरन्दरेणानुगृही-तोऽसि। पाण्डवेष्वेकपुरुषवधार्थममोघमस्त्रं विमला नाम शक्तिरियं प्रतिगृह्यताम्।

अपरत्रेन्द्रादीनां देवानां सन्देशं निवेदयितुं देवर्षिर्नारदो सारथि-र्मातलिश्च नियुक्तौ।[3]

## आज्ञप्तिहरः

आज्ञप्तिहरस्तु वार्ताहरः, निसृष्टार्थः, वार्तायनः, प्रेष्यः, वैवधिको वा प्रतिष्ठायां दूतात् किञ्चिदूनः प्रतिभाति। अभिज्ञानशाकुन्तले द्वितीयेऽङ्के

१. बालरा० ७. २/३ (२) तत्रैव ७. १/२

२. बाल० रा० ९.२६-२८

३. अभिज्ञानशाकुन्तले मातलिर्विक्रमोर्वशीये च देवर्षिर्नारद इन्द्रसन्देशं दुष्यन्ताय पुरूरवसे च क्रमशो निवेदयतः।

करभको नामाज्ञप्तिहरो राजधानीत आगत्य कण्वाश्रमे राजमातुः सन्देशं राजानं श्रावयति। वेणीसंहारे षष्ठेऽङ्के बुधकः (पुरुषः) आज्ञप्तिहर एव युधिष्ठिरस्याज्ञां सहदेवं श्रावयति। स स्वेच्छया न किञ्चिद् वदतीति दूताद् भिन्नः।

**रक्षिपुरुषाः**

आधुनिक 'पुलिसकान्स्टेबुलवद् रक्षिपुरुषा नियुक्ता आसन्। अभिज्ञानशाकुन्तलस्य षष्ठाङ्कात् प्राक् रक्षिणौ शकारेण सह मत्स्य-जीविनं व्यवहरन्ति। रक्षिपुरुषा अपराधिनं चौरादीन् निगृह्णन्ति। तेषां पृच्छाप्रक्रिया चौर्यकारणानि स्पष्टयितुं प्रचरत्यभिज्ञानशाकुन्तलस्य षष्ठाङ्कस्य प्रवेशके। रक्षिपुरुषोऽद्यवदेवापराधिनं ताडयितुं समुत्सुका आसन्। तेषा भाषा तु निर्भर्त्सनमयी बभूव।

**चाण्डालः**

चाण्डालस्तु शूद्रपितुर्ब्राह्मणजनन्याश्च सन्तानः क्रूरकर्मा पापानां शूलारोपणाय नियुज्यते स्म। मृच्छकटिके चाण्डालौ पद्यपाठिनौ स्तः। तयोरभिज्ञानोत्कर्षेण सम्पृक्तानि पद्यानि प्राशंसिकानि काव्यसौष्ठव-समृद्धान्येव विलसन्ति। तद्यथा—

न च रोदित्यन्तरिक्षं नैवानभ्रे पतति वज्रम्।
महिलासमूहमेघान्निपतति नयनाम्बुधाराभिः॥ १०.९

श्मशानमार्गाल्लोकांस्ता अपसारयतः—अपसरत आर्याः अपसरत इति वचनेन। तौ पापमपराधिनं राजदण्डं च विवरणपुरस्सरं घोषयतः।

न खलु चाण्डाल आसीत् बद्धवाक्। स स्वयं निर्भीकतया स्वमतं व्यनक्ति शकार-विषये राजविषये च। तद्यथा शकारविषये—

अविनयतीक्ष्णविषाणो दुष्टबलीवर्द इत एति।
यदा तस्यासिश्चारुदत्तप्रहरणोद्यमे पतति स भगवती ॥१० ३९

सह्यवासिनीं स प्रार्थयते—प्रसीद प्रसीद। अपि नाम चारुदत्तस्य मोक्षो भवेत्। तदानुगृहीतं त्वया चाण्डालकुलं भवेत्।

वध्यस्थानात् कमपि संवादं कश्चिच्चण्डाल एवामात्यं प्रत्युपनयति।[1]

---

१. मुद्राराक्षसस्य सप्तमेऽङ्के राक्षसग्रहणवृत्तं चाण्डालश्चाणक्यं श्रावयति।

### कुब्जः

अन्तःपुरीय. परिचरः कुब्जः। मालविकाग्निमित्रस्य पञ्चमाङ्कस्य प्रवेशके सारसिकः कुब्जो राज्ञ्योर्विश्वासभूमिः पुरोहितेभ्यो दक्षिणां दातुं निष्कशतसुवर्णपरिमाणं राशिं नयति । सोऽन्तःपुरीयवार्ताभिज्ञ. ।

### किरातः

राजकीयपरिजनेष्वन्यतमः किरातो विक्रमोर्वशीयस्य पञ्चमेऽङ्के वन्यजन्तोः प्रवृत्ति-विषये नेपथ्याद् ब्रूते—'मणिरामिषशङ्किना गृध्रेणाक्षिप्तः' इति । यथानाम स मणिवेधको बभूव राज्ञो मणिरक्षकश्च ।

### प्रणिधिः, गुप्तचरः

प्रणिधयो गुप्तचरा वात्मानं गोपयित्वा परपक्षस्य वृत्तमुपनयन्ति, परपक्षं घातयन्ति चेति भासस्य प्रतिज्ञायौगन्धरायणे दृश्यते । मुद्राराक्षसे तु तेषां बाहुल्यमेव प्रवर्तते । तेषां परिवर्तितरूपमधोविधं प्रकल्पितं तत्र—

| गुप्तचरः | परिवर्तितरूपम् | विशेषः |
|---|---|---|
| इन्दुशर्मा चाणक्यस्य सहाध्यायी ज्योतिर्विद् | जैनक्षपणकः | राक्षसस्यान्तरङ्गः |
| निपुणकः चाणक्यस्य धर्मभ्राता | यमपटधरः | राक्षसस्य मुद्रिकामानीय चाणक्याय समर्पयति |

निपुणको गुप्तचरश्चाणक्येन प्रकृतिचित्तपरिज्ञाने नियुक्तः। गुप्तचरा आवश्यकवृत्तसारसङ्ग्रहेण सूक्ष्मपर्यवेक्षणमपि दर्शयन्ति । तद्यथा राक्षसस्य विराधगुप्तनामा प्रणिधिः स्वगतं वक्ति—

वामां बाहुलतां निवेश्य शिथिलं कण्ठे विवृत्तानना<br>
स्कन्धे दक्षिणया बलान्निहितयाप्यङ्के पतन्त्या मुहुः ।<br>
गाढालिङ्गनसङ्गपीडितमुखं यस्योद्यमाशंकिनी<br>
मौर्यस्योरसि नाधुनापि कुरुते वामेतरं श्रीस्तनम् ॥ २.१२

प्रणिधेः कार्यस्येयत्ता प्रणिधित्वपर्यन्तेव नास्ति । स स्वामिने यथावसरं सम्यगुपदिशति । तद्यथा विराधगुप्तः ( आहितुण्डिकः ) मुद्राराक्षसे विषण्णं राक्षसं बोधयति ।

अमात्य, तथापि खलु प्रारब्धमपरित्याज्यमेव । पश्य—

किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किं त्वङ्गीकृतमुत्सृजन् कृपणवच्छ्लाघ्यो जनो लज्जते
निर्व्यूढं प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ २.१८

प्रणिधिस्तु स्वामिनः प्रतिष्ठास्पदं वर्तते । राक्षसो विराधगुप्तं 'सखे' इति सम्बोधयति ।

कुत्र कीदृशाश्चाराश्चरन्त्विति वेणीसंहारे स्पष्टीकृतम्—

पङ्के वा सैकते वा सुनिभृतपदवीवेदिनो यान्तु दाशाः
कुञ्जेषु क्षुण्णवीरुन्निचयपरिचया बल्लवाः संचरन्तु
व्याधा व्याघ्राटवीषु स्वपरपदविदा ये च रन्ध्रेष्वभिज्ञाः
ये सिद्धव्यञ्जना वा प्रतिमुनिनिलयं ते च चाराश्चरन्तु । ६.२

### कर्मशूराः

कर्मशूरास्तु मया संज्ञितास्ते जनाः सन्ति, ये मुख्यनायकैर्महत्सु विश्रब्धकार्येषु पराक्रमनियोगेषु च नियुज्यन्ते ।[1] मुद्राराक्षस एतद्विधाना-मध्यवसायिनां बाहुल्यं वर्तते । सिद्धार्थकश्चाणक्यस्येदृशो जनः । स चाणक्येन नियोज्यते—

प्रथमं तावद् वध्यस्थानं गत्वा घातकाः सरोषदक्षिणाक्षिसंकोचसंज्ञा ग्राहयितव्याः ।...शकटदासो वध्यस्थानादपनीय राक्षसं प्रापयितव्यः । राक्षस एव कञ्चित्कालं सेवितव्यः । ततः प्रत्यासन्नेषु परेषु प्रयोजनमिद-मनुष्ठेयम् ।

निःसन्दिग्धमेव ते कर्मशूरा धूर्ता अपि भवन्ति । ते शत्रुं ध्वंसयितुं तस्य हृदयीभूता यथावश्यकं तं परित्यजन्ति, नाशयन्ति च । मुद्राराक्षसे भागुरायणस्तेषु कर्मशूरेषु प्रधान एव । स चाणक्यनियोगेऽनुतिष्ठति ।

---

१. न ते गुप्तचरा ये प्रायो वृत्तानि स्वामिनियोगेन संगृह्णन्ति, न चापि गूढाचारा ये विषम पापादिकं च स्वामिनियोगेन चरन्ति । एतादृशेष्वेकः सिद्धार्थको विद्यते । तस्य व्यापारविशेषश्चाणक्यस्याधोवचनेन स्पष्टं भवति—

चाणक्यः —भद्र ( सिद्धार्थक ) कस्मिंश्चिदाप्तजनानुष्ठेये कर्मणि त्वां व्यापारयितुमिच्छामि ।

स मलयकेतोर्हृदयीभूतस्तेन सखेति सम्बोध्यते। स महानुभावं राक्षसमपवादयति, तं मलयकेतोः पृथक् कृत्वा शत्रुबलं सर्वथा ह्रासयति च।

### कटकारकः

मुद्राराक्षसे चाणक्यः कूटरचनापटिष्ठो विद्यते। स भूरिशो जनान् कूटकर्मसु नियोजयति। तस्य नियोगे सिद्धार्थको राक्षसं प्रतारयति विलक्षयति चाधोविधम् —

सिद्धार्थकः —( सबाष्पं लज्जां नाटयन् ) प्रसीदत्वमात्यः। ताड्यमानेन मया न पारित रहस्यं धारयितुम्।

राक्षसः —भद्र, कीदृशं रहस्यमिति न खल्ववगच्छामि।

भागुरायणः —अमात्य एष कथयति, यथाहममात्येन लेखं दत्त्वा वाचिकं सन्दिश्य चन्द्रगुप्तसकाशं प्रेषित इति।

राक्षसः —भद्र सिद्धार्थक, अपि सत्यम्।

सिद्धार्थकः —एवमतिताड्यमानेन मया निवेदितम्।

राक्षसः — अनृतमेतत्। ताड्यमान. पुरुषः किमिव न ब्रूयात्।

बहवो जनाः कूटकारकाश्चाणक्येन नियुक्ता राक्षसस्य नियोगे विचरन्ति, त प्रतार्य चाणक्यस्याभीप्सितं साधयन्ति च।

### ऋषिः

ऋषीणां शापशक्तिः सुविदितैव। अभिज्ञाने दुर्वाससः शापो विक्रमोर्वशीये च भरतर्षेः शापः कथासविधानेऽपूर्वं चमत्कार जनयितु प्रयुक्तौ। अभिज्ञाने कण्वो मारीचश्च तपस्विनौ लोकसंग्रहकारिणौ च प्रवर्तेते। अनाथपरिपालन हि ऋषीणामेको धर्मः। स धर्मोऽभिज्ञाने वैखानसस्याधोवचनेन प्रमाण्यते—'कण्व इदानीमेव दुहितर शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूल शमयितु सोमतीर्थं गतः। सोऽयं कण्वः शकुन्तलायै पित्रीयति। स ऋषिरपि पितापि शकुन्तलामनुशास्ति—

'शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने इत्यादि।

त्रिकाल त्रिलोकदर्शिनः सन्ति ऋषयः। अत एव तेष्वेकः कण्वः कथयितुं क्षमः —

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभव-गुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला।

तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां वत्से न त्व शुच गणयिष्यसि ॥ ४.१९

अथ च—

भूत्वा चिराय चतुरन्तमही-सपत्नी
दौष्यन्तिमप्रतिरथ तनय निवेश्य ।
भर्त्रा तदर्पित-कुटुम्बभरेण सार्धं
शान्ते करिष्यसि पद पुनराश्रमेऽस्मिन् ॥ ४.२०

प्रमाणमेव प्रत्येक पदमस्य श्लोकस्य व्यसने समुत्पन्न आश्वास-यत्युदर्कं प्रति।

पुरार्णषिर्मारीचो ध्यानेन शकुन्तलाया दुष्यन्तेन प्रत्याख्यान शापवशाद-भवदिति विदितवान् । मारीचानुसारेण कण्वोऽपि शकुन्तलापतिमिलन-वृत्त तपःप्रभावादजानात् ।

मुनयस्तु ऋषिसमाना एव। तेषां कौतूहलवृत्तिः क्वचिन्नाटककारैः परामृष्टा। तद्यथा वेणीसहारे षष्ठेऽङ्के मुनिवेषधरो राक्षसः कौतूहल-वृत्तिकः कौरवपाण्डवयुद्ध द्रष्टुमागत इति स्पष्टयति ।

उत्तररामचरिते ऋषिरुपलक्षितः —

लौकिकानां हि साधूनामर्थं वागनुवर्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुवर्तते ॥

अत्राद्या ऋषयो विशेषिताः । आद्यनायकैः सह ते चरन्ति ।

## शिष्याः

अभिज्ञानशाकुन्तले तेजस्विना ऋषिशिष्यौ शकुन्तलया सह दुष्यन्त-दर्शनकामौ हस्तिनापुरराजधान्यां राजभवन उपस्थितौ। न तौ लौकैश्वर्य-मुग्धा अपि तु कटुसमीक्षकौ वन्यां तपोभूमिमेव सर्वोत्कृष्टां मन्येते। तयोर्निर्भीकसमीक्षावृत्तिः स्पृहणीया राजते। तयोरेकः शार्ङ्गरवो यथानाम दुष्यन्तं निर्भर्त्संयति—

किं कृतकार्यद्वेषः धर्मं प्रति विमुखता कृतेऽवज्ञा ।
मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ ५.१८

शकुन्तलामपि स कटु वदति। तद्यथा—
शार्ङ्गरवः—( सरोषम् ) किं पुरोभागे, स्वातन्त्र्यमवलम्बसे ।

साधारणाचार्याणां शिष्यास्तु क्वचित् प्रेष्यवदन्यत्र द्वारपालवद्वि-चरन्ति। मुद्राराक्षसे शिष्य उभरूपो वर्तते। स यमपट्टिकं कथयति—भद्र न प्रवेष्टव्यम्। तेन विवदते सः। चाणक्यस्तं नियोजयति-विश्वावसु-प्रभृतीन् भ्रातॄन् आगन्तुं सूचय इति।

स शकटदासस्य वधस्याज्ञां चाणक्यनिर्देशानुसारेण दण्डपाशिकं प्रति ग्राहयतीत्यनेन तस्य विश्रम्भपदमनुमीयते।

शिष्याः क्वचिद् विकृतवचनेन महतां हास्यास्पदचित्रणेन हासयन्ति। ते तत्र तत्र विदूषकस्थानीया एव। उत्तररामचरिते सौधातकिर्वसिष्ठ निर्वर्णयति—मया पुनर्ज्ञातं कोऽपि व्याघ्र इव एष, येन परापतितेन सा वराकी कपिला कल्याणी बलात्कृत्य मडमडायिता।

### भिक्षुः

म्रियमाणा स्त्रियं स्वप्रयत्नेन रक्षति मृच्छकटिकस्य भिक्षुः। कर्णभारे कूटो भिक्षुकः स्वयमेवेन्द्रः प्रच्छन्नवेषधरो मायावी वर्तते। शुद्धरूपाः कापटिकाश्च द्विविधा भिक्षवो दृश्यन्ते नाटकेषु।

### क्षपणकः

मुद्राराक्षसे क्षपणकः कृतकसाधुश्चाणक्यस्य प्रणिधी राक्षसं मलयकेतुं च प्रतारयति। स चाणक्यस्य नीतिलतां पल्लवयितुं मलयकेतो राक्षसेन साह्यभावं ह्रासयति। उपक्रमेऽस्मिन् धौर्त्यं मिथ्याभियोगादिकं तस्य विशेषः।

### कापालिकः

मालतीमाधवेऽघोरघण्टः कापालिको मन्त्रं साधयति कुमारीबलिं चामुण्डायै अर्पयितुं समुद्यतश्च। सोऽस्त्री वर्तते, माधवेन युध्यमानो व्यापाद्यते च।

### नायिका, प्रतिनायिका च राज्ञी

राज्ञी नृपस्यार्धाङ्गिनी धर्मपत्नी भवति। सा मन्त्रिपरिषदः संद-स्या स्यात्।

राजपत्नी राज्ञी प्रायः प्रासादेषु प्रमदवनेषु, देवार्चनस्थलीषु वा विचरति। वैषम्यमापन्ना सा वनभूमिषु प्रचरन्ती दृश्येत।

राज्ञः पदमैश्वर्यं राज्यं रक्षितुं च राज्ञी मन्त्रिभिः सह राज्याभ्यु-दयाय मन्त्रणां विधायात्मानं कञ्चित्कालं तपस्विनीकरोति स्वप्न-

वासवदत्तो प्रथमाङ्के। सर्वेषामात्मीयजनानां भर्त्सनां निन्दां वा सहमाना सा क्वचिद् राजरक्षणाय वैधव्यम्भजते।[1]

स्वकन्याया विवाहविषये तस्या मतं संग्रहणीयमेवेति प्रतिज्ञायौगन्धरायणस्य द्वितीयेऽङ्के विशदीकृतम्।

मालविकाग्निमित्रे धारिणी स्वपतेश्छिद्रमन्विष्यति। यथा—तथाहि राजकार्येषु ईदृशी उपाय-निपुणता आर्यपुत्रस्य ततः शोभनं भवेत्। अहो अविनय आर्यपुत्रस्य।[2] सपत्नी पत्यै नियोजयन्ति काश्चिद् राज्ञ्यः।[3]

राज्ञः कल्याणाय राज्ञी व्रतोत्सवादीन्यनुतिष्ठति। धार्मिकव्रतोत्सवादिषु मनोविनोदनेषु च राज्ञी राज्ञा सह विराजतेतराम्। तद्यथा विक्रमोर्वशीये तृतीयेऽङ्के – देव, देवी विज्ञापयति - मणिहर्म्यपृष्ठे सुदर्शनश्चन्द्रः। तत्र सन्निहितेन देवेन प्रतिपालयितुमिच्छामि, यावद्रोहिणीसंयोग इति।

राज्ञी राज्ञः प्रसादनाय तस्मै सपत्नीमपि प्रस्तावयति। मालविकाग्निमित्रे विक्रमोर्वशीये च ज्येष्ठा देव्यो राज्ञ. कल्याणाय किं किं न साधयन्ति। विक्रमोर्वशीये देवी कथयति—अद्य प्रभृति यां स्त्रियमार्यपुत्रः कामयते, या चार्यपुत्रस्य समागमप्रणयिनी तया सह प्रीतिबन्धेन मया वर्तितव्यम्। अन्यत्र प्रतिनायिका भूत्वा सा सापत्न्यं प्रतिबाधते।

वेणीसंहारे राज्ञी नायकस्य भाव्यनर्थसूचकं स्वप्नं दृष्ट्वा सूर्योपस्थानं विदधाति।

अनुपमैव राज्ञी द्रौपदी वेणीसंहारे। सा युधिष्ठिरं निर्दिशति—

त्वमपि क्षात्रधर्ममनुबध्नन्नेव नाथस्य जीवितहरस्याभिमुखो भव।

विरलविरलैरेवोच्चकोटिका नायिकाः प्रकल्पिताः संस्कृतनाटकेषु। भासस्यैकैव तादृशी नायिका वासवदत्ता नाटकस्य प्रथमाङ्क एव सर्वसहा,

---

१. रामस्य मरणं मा भवेदिति कैकेयी तस्य वनवासं याचते, फलतो दशरथमरणाद् विधवा भवतीति प्रतिमानाटकस्य षष्ठाङ्के कैकेयी—जात, एतन्निमित्तमपराधे मां निक्षिप्य पुत्रको रामो वनं प्रेषितः न खलु राज्यलोभेन।

२. मालविकाग्निमित्रे प्रथमेऽङ्के।

३. मालविकाग्निमित्रे ५.१९

सर्वत्यागमयी विभाति। सा पञ्चमाङ्के स्मरति—महान् खल्वार्ययौगन्धरायणस्य प्रतिज्ञाभारो मम दर्शनेन निष्फलः संवृत्तः।

तस्या उद्धुरे कन्धरे राज्यैश्वर्यस्य पुनर्निर्माणभरो मूलतो न्यस्तः सम्यगुह्यते। नाकरणीयं किञ्चिद्विद्यते तस्याः।

### प्रच्छन्नकाम्या नायिका

कालिदासीया राज्यो नायकानुरागोत्सुकाः प्रेमपाथेयोद्वहनमेव जीवनस्य परं साफल्य मन्यन्ते। मालविकाग्निमित्रे विक्रमोर्वशीये च नायिकानां सापत्न्यभयमुपरि वर्तते। ता निगूढप्रणयिनायकमनुयुयुजिरे।

प्रणयार्त्ता नायिका नायकाय प्रेमपत्रं लिखति। यथाभिज्ञाने शकुन्तला विक्रमोर्वशीये वा उर्वशी। नायकस्य चित्रं मालतीमाधवे नायिका विरचयति।

नायिका स्वमदनपरवशतां सखी चेटीं वा प्रति वर्णयति सूचयति वा सम्भोग्यजनसान्निध्यावाप्तये।

नाटकेषु नायकानां प्रच्छन्नकामिता सम्मता। तत्र प्रच्छन्नकामपथे बाधानां दुर्निवारता नायकानां नायिकानाञ्च मरणमेव शरणं विदधाति। यद्यपि वियोगवैषम्य-सन्तप्ता कापि नायिका मृतेति न दृश्यते, तथापि उत्तरीयवाससा, लतापाशेन वात्मानमुद्बध्य व्यापादयिष्यामीति दृश्यत एव।[1] परिजनानां समक्षमपि नायकानां परिष्वङ्गो दृश्यते नाटकेषु।

नायिकाभिनवकान्तं नायकं किञ्चिदधिककालं दृष्टिपथे धारयितुमिव कृतकबाधानुपकल्पयति। विक्रमोर्वशोये उर्वशी, अभिज्ञानशाकुन्तले शकुन्तला च तत्र-तत्र प्रथमेऽङ्के एवं कुर्वन्ति।[2]

### विप्रलब्धा नायिका

विप्रलब्धा नायिका भृशं रोषवती भवति। अभिज्ञानशाकुन्तल

---

१. अविमारके कुरङ्गी रत्नावल्यां सागरिका नागानन्दे मलयवती च मरणोद्यताः पाशबद्धा आत्मानं कुर्वन्ति।

२. 'लताविटप एषैकावली वैजयन्ती मे लग्ना' इति उर्वशीवचनम्, 'अभिनवकुशसूचिपरिक्षतौ मे चरणौ, कुरबकशाखापरिलग्नञ्च मे वल्कलम्' इति शकुन्तलावचनं प्रमाणम्।

आश्रमकन्यका शकुन्तला शापवशाद् विप्रलब्धा दुष्यन्तं नायकं सरोषं निर्भर्त्स्यति[1]—

अनार्य, आत्मनो हृदयानुमानेन प्रेक्षसे। क इदानीमन्यो धर्मकञ्चुक-प्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते।

## गणिका

सर्वसाधारणरमणी सा गणिका नगरश्रीरेव स्वकीये बहुभिः प्रकोष्ठै-र्मण्डिते महागेहे, प्रमदवनोद्यानेषु अभिसारस्थलीषु च विहरति। तस्या गुणगणशालिता रमणोत्कर्षं विदधाति। मृच्छकटिके गणिका वसन्तसेना पटीरं चारुदत्तं शिरसा प्रणमति। सा प्रतिदिनं पूजां निर्वर्तयति। न केवलं भूषणैरपि तु दयादाक्षिण्यादिभिरात्मगुणैः सानुत्तमेव रमणीरत्नम्। प्रणययाचकमनभीष्टं जनं सा पादेन ताडयति।[2] न धनेन न बलेन न च प्रधर्षणक्रमेण सा स्वायत्ततां जहाति। पररूपमेव सत्याग्रहस्य तस्याः सद्-वृत्तिषु द्रष्टुं शक्यते। मानसिकसौरभं तस्या जीवनपथस्य परमोद्दिष्टं भवेत्।[3] स वेशभावस्य निन्दनीयां स्थितिं सम्यग्बोधति।[4]

पुरा गणिकापि राज्ञः प्रेयसी भवितुमार्हत्।[5] अन्यत्र सा चेटीपदम-लङ्करोति।[6]

## अभिसारिका

प्रणयपथे नायिकाः क्वचिदभिसारिका भवन्ति। विविधानि कष्टा-न्यनुभवन्ति ताः। नायकस्य प्रणयव्यवहार-विषये तासां मानसं बहु-

---

१. शकुन्तला—कथमनेन कितवेन विप्रलब्धास्मि।

२. मृच्छ० अष्टमेऽङ्के।

३. शकारेण पुनः पुनर्मार्यमाणापि मरणासन्ना सा कथयति—नम आर्यचारु-दत्ताय-मृच्छकटिकेऽष्टमेऽङ्के।

४. यत्सदृशं वेशभावस्य। मृच्छ० अष्टमेऽङ्के

५. मृच्छकटिके मदनिका वसन्तसेनां पृच्छति। किं राजा राजवल्लभो वा सेव्यते।

६. मृच्छकटिके मदनिका गणिकासीत्। सा वसन्तसेनायाश्चेटी बभव। तृतीयेऽङ्के।

विधान् विकल्पान् वितर्कयति । विक्रमोर्वशीय उर्वशी सुविदिताभिसारिका पुनः पुनरभिसारप्रणयेन सामाजिकान् शृङ्गारयति । मृच्छकटिके पञ्चमेऽङ्के वसन्तसेनाभिसारिका सती प्रवर्तते ।

### आश्रमकन्या

तपस्विकन्या आश्रम-कन्यका वा तपस्विनामनुपस्थिता अतिथीन् सत्कारयन्तिस्म । तद्यथाभिज्ञाने—

वैखानसः —इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः ।

आश्रमकन्यका वृक्षकाणामालवालपूरणे नियुक्ता भवन्ति ।[1] मृगशावकानां परिपालनं तासां सुप्रियमाचरितम् ।

आश्रमकन्यका यौवनावतारेण कैशिकीवृत्तिका एव न केवलं लता-वृक्षकादीनामपि तु स्वकीयानामपि प्रणय-प्रमोदं वाचा विषयीकुर्वन्ति ।[2] दुष्यन्ताय शकुन्तलाया सख्यौ तस्याः प्रणयात्मकचर्चां विधत्तः । तत्र कालिदास एव प्रमाणम्—अनियन्त्रणानुयोगस्तपस्विजनो नामेति ।

कन्यका निर्दोषदर्शना भवन्तीति भारतीयसंस्कृतेश्चीर्णरीत्या दुष्यन्त-जीमूतवाहना अन्तर्हितौ सन्तौ कन्यादर्शनं कुरुतः ।

### राजमाता

प्रतिज्ञायौगन्धरायणे राजमाता स्वपुत्र उदयने विपत्सिन्धौ निपतिते मन्त्रिणं यौगन्धरायणं साधयति । कौसल्या, सुमित्रा, कैकेयी च विदित-चरिताः सन्ति राजमातरो रामनाटकेषु ।

### ऋषिका

अरुन्धती तूत्तररामचरित ऋषिका भाविनीं घटनां संकेतयति । तद्यथा—कल्याणोदर्कं भविष्यतीति ।

तस्या भागीरथ्याः सम्पर्केण ज्ञातमासीद्रहस्यकर्णामृतं यत् सीतायाः पुत्रकद्वयं वाल्मीकेराश्रमे वर्धते ।

ऋषिकाकल्पैव गौतमी शकुन्तलासाह्यमाचरत्यभिज्ञानशाकुन्तले ।

---

१. अभिज्ञाने प्रथमाङ्के शकुन्तला कण्वेनालवालपूरणे नियुक्ता वर्तते ।

२. तत्रैव

## प्रच्छन्न-प्रव्राजिका

कतिपयरूपकेषु प्रच्छन्न-प्रव्राजिका नायकयोः प्रणय-पथं साधयितुं प्रयतमाना दृश्यते। तत्र मालविकाग्निमित्रे कौशिकी, मालतीमाधवे कामन्दकी च नायकयोः सहाये स्तः।[1] बहुविधैः कूटोपायापायैस्तेऽभीष्टं प्रतिपादयतः। तयोर्भूमिका पीठमर्दिकोचिता प्रवर्तते। कामन्दकी प्रतिजानीते—'प्रतार्यौ राजनन्दनौ' इति।

सात्मानं प्रकाशयति—

बहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्
पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति।
जनं विद्वानेकः सकलमतिसन्धाय कपटै—
स्तटस्थः स्वानर्थान् घटयति च मौनं च भजते॥

पीठमर्दिकापि कामन्दकी प्रणयचारे चाणक्यवद् दीर्घदर्शिव्यापारवती वर्तते। तद्यथा—

वरेऽस्मिन्दोषः पितरि विचिकित्सा च जनिता
पुरावृत्तोद्गारैरपि च कथिता कार्यपदवी।
स्तुतं माहाभाग्यं यदभिजनवतो यच्च गुणतः
प्रसङ्गाद्वत्सस्येत्यथ खलु विधेयः परिचरः॥

कामन्दकी पीठमर्दिका सती कथयति मकरन्दम्—

तत्सर्वथा संगमनाय यत्नः प्राणव्ययेनापि मया विधेयः।

सैव पीठमर्दिका समादिशति—पर्यवष्टभ्यतामेतत्करालायतनम्।

नाघोरघण्टादन्यस्मात् कर्मैतद्दारुणादभूत्। ५.३३

वस्तुतः साप्रतिहतप्रज्ञाचक्षुर्विद्यते।

## चेटी ( परिचारिका )

चेटी तु परिचारिका दासी वा भवति। चिट् परप्रैषे।[2] स्वप्नवासवदत्ते चेटी राजकन्यामाश्रमपदं नयति पथप्रदर्शनेन। राजकन्या-

---

१. कामन्दकी तु सौगतजरत्प्रव्राजिका। मालतीमा० प्रस्तावनातः

२. चेटी—आर्य मैत्रेय, तिष्ठ त्वम्। अहमेवार्यां शुश्रूषयिष्यामि। मृच्छ०

विवाहविषयक-प्रवृत्ति तास्यै निवेदयति। चेटी केवलं दासी नासीदपितु राजकन्याया धन्यं कर्म दृष्ट्वा तां प्रशंसति-**चिरं जीवतु भर्तृदारिकैवं सत्यवादिनी। अहमप्यनुभूतसुखेति प्रेक्षे** इति च तस्या अभिज्ञानसौष्ठवं प्रकटयति। महत्तामपि विषये सा महत्त्वपूर्णं चिन्तयति—**किन्नु खल्वपरा स्त्री तस्य हस्तं गमिष्यतीति** चेटी कथयति। तत्रैव पद्मावती मनोऽभिलाषं प्रकटयति— **मम हृदयेनैव सह मन्त्रयति**। सा द्वितीयाङ्के राजकुमार्या मुखमिव वदति— **भर्तृदारिका तेन राज्ञा सह सम्बन्धं नेच्छति। अस्ति वत्सराज उदयनो नाम। तस्य गुणान् भर्तृदारिकाभिलषति।** तृतीयेऽङ्के भर्तृदारिकायाः कौतुकमालागुम्फनं कारयति। तत्रैव वासवदत्तापि तया सह पद्मावत्या भाविभर्तुः सौन्दर्यविषयकं किंचित् चर्चति। चतुर्थेऽङ्के सा पद्मावत्याः पत्युरन्तिके गमनं समर्थयति।

चेटी शोभां समीक्षते सीताया वल्कलेन प्रतिमानाटकस्य प्रथमेऽङ्के।[1] सा रामाभिषेकस्य सन्देशं सीतां सूचयति, तस्या आभरणानि च लभते।

यच्छ्रेष्ठजनैरवाच्यं तदपि चेटी परस्परं प्रतिबोधयति। चतुर्थेऽङ्के चेटी कैकेयीं भृशं निन्दति—'**राज्यलुब्धया भर्तृदारकस्य रामस्य राज्यविभ्रष्टं कुर्वत्यात्मनो वैधव्यमादिष्टम्। लोकोऽपि विनाशं गमितः। निर्घृणा खलु भट्टिनी। पापकं कृतमिति**। चेटीमुखेन साधारणलोकानां तद्विषयकं मतं व्यक्तमिति कवियोजना प्रतिभाति।

चेटी दासीभूता नायिकायाः शयनासनादीनि कल्पयति।

मृच्छकटिके वसन्तसेनाया गणिकायाश्चेटी मदनिका स्वयमेव गणिकासीत्।[2] सा स्वामिन्या सह प्रणयात्मकरहोवार्तामपि करोति, **कः काम्यत** इति सा नायिकाया सखीव प्रतिभाति निम्नाङ्कितेन मिथः सम्भाषणेन—

वसन्तसेना—चेटि मदनिके, अपि सुसदृशीयं चित्राकृतिरार्यचारुदत्तस्य।

मदनिका—सुसदृशी।

---

१. इमानि प्रहर्षितानि तनूरुहाणि मन्त्रयन्ते इति।

२. गणिकामदनिकार्थम् इत्यादि तृतीयेऽङ्के।

वसन्तसेना— कथं त्वं जानासि ?

मदनिका—येनार्याया: सुस्निग्धा दृष्टिरनुलग्ना ।

पञ्चमेऽङ्के चेटी वसन्तसेनया परिष्वज्यत इत्यनेन तस्याः सख्यं प्रकटति ।[1]

मृच्छकटिके चतुर्थेऽङ्के मदनिका चेटी स्वकीयस्य प्रणयवृत्तस्य नायिकारूपेण गृहीता । चेट्या: स्वतन्त्रं प्रणयवृत्तं कवेर्नाट्यकलायाश्चा-नुत्तमा कृतिः ।

वसन्तसेनायाः सकाशं विदूषकं नयति काचिदपरा चेटी मार्गे तस्या गेहस्य विभूतीर्दर्शयति च ।

मृच्छकटिकस्य पञ्चमेऽङ्के चेटी गणिकाया वसन्तसेनायाः परामर्श-दात्रीव चेष्टते । तद्यथा—

वसन्तसेना—( जनान्तिकम् ) अत्र प्रविश्य किं मया भणितव्यम्

चेटी—द्यूतकर, अपि सुखस्ते प्रदोषः ।
सा स्वामिनीं पृष्टाना प्रश्नानामुत्तराणि अनाहूतापि विदूषकाय निवे-दयति । तद्यथा—

विदूषकः ( वसन्तसेनाम् )—अथ किं निमित्तं पुनरीदृशे प्रनष्टचन्द्रा-लोके दुर्दिनान्धकार आगता भवती ।

चेटी—आर्ये ऋजुको ब्राह्मणः ।

वसन्तसेना—ननु निपुण इति भण ।

चेटी—एषा खलु आर्या एवं प्रष्टुमागता—कियत्तस्या रत्नावल्या मूल्यमिति । सा खल्वार्ययात्मीयेति भणित्वा द्यूते हारिता । स च सभिको राजवार्ताहारी न ज्ञायते कुत्र गत इति । यावत्साऽन्विष्यते तावदिदमेव गृहाण सुवर्णभाण्डम् ।

अनेन प्रातिभोत्तरेण चेटी सोपपत्तिकं वैचक्षण्य-विदग्धमावश्यकता-नुसारेणाचरेदिति प्रतीयते ।

---

१. अविमारकस्य तृतीयेऽङ्के कुरंगी नलिनिकां परिष्वक्तुमाह्वयति । अत्रापि सख्यमेव चेट्याः प्रकटति । नागानन्दे प्रथमाङ्के च चेटी सखीव व्यवहरति ।

चेटी नायिकां प्रातःकाले प्रतिबोधयति । नापि सा स्वामिन्या आज्ञां सत्वरं शिरसि धारयत्येव । बहुशः स्वविवेकेन तर्कयति । तद्यथा—

वसन्तसेना— एतां रत्नावली मम भगिन्या आर्याधूतायै समर्पय ।

चेटी—आर्ये, कुपिष्यति चारुदत्त आर्यायै तावत् ।

वसन्तसेना - गच्छ, न कोपिष्यति ।

सा स्वामिन्या दारकस्य योगक्षेमं वहति ।

चेटी स्वामिन्या सह मरणायोद्यता दृश्यते मृच्छकटिके । वेणीसंहारे द्वितीयेऽङ्के द्रौपद्याश्चेटी तस्याः प्रतिनिधिर्भूत्वा दुर्योधनस्य राज्ञीं भानुमती प्रति कटूत्तरयति । षष्ठेऽङ्के सा द्रौपदी समाश्वासयति ।

कतिपयचेट्यः शिल्पकलासु निपुणा बभूवुरिति विक्रमोर्वशीये विदूषक-वचनेन प्रमाणितम् । निपुणिकां द्वितीयेऽङ्के स कथयति—भवति निपुणिके संगीतव्यापारमुज्झित्वा कुत्र प्रस्थितासि ।

कतिपयपरिचारिकाः सुशिक्षिता बभूवुः । विक्रमोर्वशीये द्वितीयेऽङ्के निपुणिका देवीमुर्वशीपत्रं श्रावयति । वेणीसंहारे राज्ञीनिर्देशेन चेटी मुनि-वेषधरं राक्षसं वीजयति ।

इयं चेटी विशेषस्थितिषु चारित्रिकमहिमानं स्वामिनामनुरूपं प्रक-टयति । वेणीसंहारे बुद्धिमतिका नाम्नी चेटी यथानामापि सहजं सौहार्द-मधोविधं प्रकटयति—

हा भगवन्तो लोकपालाः परित्रायध्वम् । एष खलु सोमवंशराजर्षी राजसूय-सन्तर्पितहव्यवाहः खाण्डवसन्तर्पितहुतवहस्य किरीटिनो ज्येष्ठो भ्राता सुगृहीतनामधेयो महाराजयुधिष्ठिरः । एषापि पाञ्चालराजतनया देवी वेदिमध्यसम्भवा याज्ञसेनी । द्वावपि निष्करुणज्वलनस्य प्रवेशेने-न्धनीभवतः । अनेन तस्याः सुसंस्कृतिर्व्यज्यते ।

नागानन्दे प्रथमाङ्के प्रणयवती नायिका चेट्या अलकं सज्जयन्ती तया सह सख्यं द्योतयत्येव ।[1] सा तूत्कण्ठिताया नायिकाया सखी एव नायकेन तस्य सङ्गमने तथैवायोजयति, यथा विदूषको नायकस्य नायिकया

---

१. वीजयन्तीं चेटीं मलयवती सखि इति पदेन सम्बोधयति ।

सङ्गमनाय बहुविधानुपायान् रचयति। नायिकायाः प्रणय-पथे सा तां दृढ-माश्वासयति तदनुरूपाणि पूर्ववृत्तानि स्मारयति च।

कविः क्वचिच्चेट्या योगेन हास्यं भृशं प्रवर्तयति। नागानन्दे तृतीयेऽङ्के सा कथयति—

कथं मामिति कृत्वा मदनरवशेन शेखरकेणार्यात्रेयः प्रसाद्यते। तद्याव-दलीकं कोपं कृत्वा द्वावप्येतौ परिहसिष्यामि। अस्मिन्नेवाङ्के चेटी विदूषकं वर्णयति। तत्कथम्—नीलरसानुकारिणा तमालपल्लवरसेन तस्य मुखं चेट्या कालीक्रियते।

## उद्यानपालिका

प्रमदवनस्य पालनकर्मणि व्यापृतोद्यानपालिका तु चेटीविशेष एव।[1] परिसरप्रभावेणोद्यानपालिकाया रंजनी दृष्टिर्विकसितेव प्रतीयते। कालि-दासस्योद्यानपालिकात्मान विशदीकरोति—

'मधुकरिके चूतकलिका दृष्ट्वोन्मत्ता परभृतिका भवति। तवेदानीं काल एष मदविभ्रमगीतानाम्'। मधुकरिका नामोद्यानपालिका कामदेवार्चनं विधत्ते—

त्वमसि मया चूताङ्कुर दत्तः कामाय गृहीतचापाय।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव॥ ६.३

ततः परं चूताङ्कुरं क्षिपति।

## दूती

चेटी क्वचिद्दूतीरूपेण महत्त्वं भजते।[2] सा तु पीठमर्दिका भवितु-मर्हति। विविधोपायैः सा नायिकां नायकप्रणयसरणौ प्रवर्तयति उत्साह-यति च। मालविकाग्निमित्रे राज्ञा दूत्याः कर्मविशेषः सम्यक् परि-भाषितः। तद्यथा—

---

१. उद्यानपालिका-विषये नाट्यनिर्देशो विद्यते—ततः प्रविशति चूताङ्कुरमव-लोकयन्ती चेटी, अपरा च पृष्ठतस्तस्याः।

२. भरतानुसारेण दूती तु बहुविधा नार्यो भवन्ति—प्रतिवेश्या, सखी, दासी, कुमारी, कारु, शिल्पिनी, धात्री पाषण्डिनी, रङ्गोपजीविनी च।

ना. शा. २३.९, १०

मालतीमाधवे लवंगिका मालत्या दूती वारांगनैव। दूती चेटीतः किंचिद् भिन्नैव। तद्यथा—

नायकदेवीदूतीसपरिजना नाटिका ज्ञेया। १८.६०

भावज्ञानानन्तरं प्रस्तुतेन प्रत्याख्याने दत्तयुक्तोत्तरेण।
वाक्येनेयं स्थापिता स्वे निदेशे स्थाने प्राणाः कामिनां दूत्यधीना ॥३.१४

भरतानुसारेण नायकः कामार्त आत्मावस्था-प्रदर्शिनीं दूतीं नायिकां प्रति प्रेषयति।[1] नायिकाया दूत्योऽविमारके सुविदिताः। मालविकाग्निमित्रे सा नायकस्य सन्देशं नायिकायै ददाति।

दूत्या वाग्वैदग्ध्यं मालविकाग्निमित्रे विलसति। तद्यथा—

वकुलावलिका ( मालविकां प्रति )—अरुणशतपत्रमिव शोभते ते चरणम्। सर्वथा भर्तुरङ्कपरिवर्तिनी भव :

मुग्धे, भ्रमर-सम्पातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूत-प्रसवोऽवतंसयितव्यः। विमर्दसुरभिर्वकुलावलिका खल्वहम्।[2]

भरतानुसारेण सेयं दूती लडहा ( नितरां सौन्दर्यशालिनी ) भवति स्वभावत. संवृतमन्त्रा च।[3]

कुलभोगधनाधिक्यैः कृत्वाधिकविकत्थनम्।
न चाकामप्रवृत्तायाः क्रुद्धाया वापि संगमः॥

नायकयोः प्रथमसमागमस्याभिसारस्थली दूत्या निर्धारितेति प्रति-भाति। सा स्थली—

उत्सवे रात्रिसञ्चार उद्याने मित्रवेश्मनि।
धात्रीगृहेषु सख्या वा तथा चैव निमन्त्रणे।
व्याधितव्यपदेशेन शून्यागार-निवेशने॥
कार्यः समागमो नृणां स्त्रीभिः प्रथमसंगमे॥

ना. शा. २३.१५-१७

दूती नायकयोः साम्मुख्यं विधाय तयोः सांगतिकमाचार-विचार-विशेषं प्रवर्तयितुकामा स्वयमेव मालविकाग्निमित्रे सव्यपदेशं दूरं गत्वापि

---

१. ना. शा. २२.१९९

२. मालतीमाधवस्य प्रथमाङ्के
मालतीदूत्या वारांगनाया लवङ्गिकाया वाग्वैदग्ध्यमुच्चकोटिकं वर्तते—
समासादयतु सरस एष भर्तृदारिकायाः कण्ठावलम्बनमहार्घताम्।

३. लडहा संवृतमन्त्रा दूती त्वेभिर्गुणैः कार्या॥ ना.शा.२६.११

तयोर्वैक्लव्यं निवारयति। तयोर्निर्मक्षिकं रहःप्रणयं प्रतिपादयितुं सा विदूषकं नियोजयति—आर्य गौतम, अहमप्रकाशे तिष्ठामि। त्वं द्वाररक्षको भव।[1]

मालतीमाधवे दूती प्रणयपथे सन्तप्ताया नायिकाया विनोदस्थानमपि भवति। तया सह नायिका प्रणयिनमधिकृत्य किञ्चिद्रमणीयं चर्चति मालतीमाधवे। ततः परं नायिकायाः परिष्वङ्गमर्जति स्ववाग्वैदग्ध्येन।

## धात्री

स्वप्नवासवदत्ते द्वितीयेऽङ्के धात्री 'जयतु भर्तृदारिके' दत्तासीति घोषयति। सा विवाहनिर्णयविषयकं विस्तरं वासवदत्तायाः प्रश्नानन्तरं वर्णयति। सापि भर्तृदारिकाया पथप्रदर्शनं करोति—एतु एतु भर्तृदारिकेति। महादेव्याः सन्देशमुज्जयिनीतो धात्री वत्सराजाय निवेदयति।

धात्री कामसन्तप्ताया नायिकायाः प्राणरक्षणोपायांश्चिन्तयति।[2] नायिका स्वकामसन्तापं तस्यै न निवेदयति तथापि धात्री स्वयमेवाभिज्ञानदर्शनेनोहते।

## सखी सहचरी वा

नायिकायाः साह्यमाचरन्त्यो नार्यस्तस्या सख्यं गता दृश्यन्ते। साह्यमिदमुच्चावचं वर्तते। उच्चस्तरं सख्यं वासवदत्तायाः पद्मावत्या सह स्वप्नवासवदत्ते प्रवर्तते।[3] सा नायिकया सह शयनाधिकारिणीति स्वप्नवासवदत्तस्य पञ्चमाङ्के सम्भावितम्।

सखी नायिकायाः पूर्णं विश्रम्भं प्रणय-प्रसङ्गेऽपि भजते। अविमारके धात्र्या सख्या च नायको राजभवनेऽभ्यन्तरीकृतो नायिकया सहवासं चिरं लभते। नलिनिका नायिकां संवाहयति, नायकस्तु अज्ञात एव तां परिष्वजते। सा तस्मिन्नवसरे नायिकाकर्णे कथयति एवमिव। अर्थात् नायकेन सह शेषे। सखी नायिकाभिसारं साधयति।

---

१. राजशेखरानुसारेण स्वयं दूती दूतानां वरिष्ठा। बालरा० ५.१३, १४

२. अविमारकस्य प्रथमाङ्के—धात्री-( नायिकाविषये ) अहो संकटता कार्यस्य यद्येवं क्रियते, राजकुलं दूषितं भवति। यदि न क्रियतेऽवश्यं सा विपद्यते।

३. हीनस्तरे सख्यं चेटयादीनां तासां प्रकरणे द्रष्टव्यम्।

प्रतिनिधीभूय सखी नायिकाया मनोभावं नायकं प्रति चर्चति विक्रमोर्वशीयस्य द्वितीयेऽङ्के। नायकयोः प्रणयप्रवर्तनप्रक्रियासु सखी दूती भवति। यथा विक्रमोर्वशीये चित्रलेखा नायकमुपसृत्योर्वश्याः सन्देशमुपनयति— तस्मिन् सुरारिसम्भवे दुर्जति महाराज एव मम शरणमासीत्। साहं साम्प्रतं तव दर्शनसमुत्थेन मदनेन बलवद् बाध्यमाना भूयोऽपि महाराजस्यानुकम्पनीया भवामीति।

राज्ञः प्रणयघटनसारं संवादं सख्यै सोपनयति कथयति चोर्वशीम्— प्रियतमस्य ते दूत्यस्मि संवृत्ता।

सखी पथप्रदर्शनं चेटीवत् प्रतिहारीवद्वा करोति विक्रमोर्वशीये द्वितीयाङ्के।[1]

सूक्ष्मेक्षिकया सखी किंकर्तव्यविमूढां नायिकां प्रणयपथे पदे-पदे साधयति। तद्यथा विक्रमोर्वशीये तृतीयेऽङ्के— चित्रलेखा —(उर्वशीं प्रति) अलमावेगेन। अन्तर्हिते इदानीमावाम्। विहितनियमवेषा राजर्षिमहिषी दृश्यते। तन्नैषेह चिरं स्थास्यति। राजा शास्ते च

आनीयेत पदात्पदं चतुरया सख्या ममोपान्तिकम्॥ ३ १५॥

तदनु चित्रलेखा (सखी) उर्वशीं प्रणुदति—सखि उर्वशि इमं तावदस्य मनोरथं सम्पादय।

आश्रमकन्यका अप्यभिज्ञानशाकुन्तले परस्परं यौवनोचितं शृङ्गारितपरिहासेनात्मानमनुरञ्जयन्ति स्म। तथा हि—

प्रियंवदा—अनसूये, जानासि किं निमित्तं शकुन्तला वनज्योत्स्नामतिमात्रं पश्यति।

अनसूया—न खलु विभावयामि। कथय।

प्रियंवदा—यथा वनज्योत्स्नानुरूपेण पादपेन संगता, अपि नामैवमहमप्यात्मनोऽनुरूपं वरं लभेयेति।

शकुन्तला—एष नूनं तवात्मगतो मनोरथः।

अभिज्ञानशाकुन्तलेऽनुसूया लज्जालुशकुन्तलायाः प्रभवादिकथां नायकाय निवेदयति।

---

१. उर्वशी–( चित्रलेखां प्रति ) तेनादिश्यतां मार्गो येन तत्र गच्छन्त्योरन्तरायो न भवेत्।

सखीनां मध्ये प्रणयिगताभिलाषेणास्वस्था नायिका प्रेमपरिणतिं वर्णयति यतो हि नाम कालिदासानुसारेण स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति।

लज्जालुनायिकायाः प्रणयनिवेदनं सखी करोति। तद्यथाभिज्ञानशाकुन्तले—

प्रियंवदा—त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता। तदर्हसि अभ्युपपत्त्या जीवितमस्या अवलम्बितुम्।

नायिकाया भाविसुखमपि सखीनां चिन्ताविषयः। अभिज्ञानशाकुन्तलेऽनसूया दुष्यन्तं प्रति निवेदयति—

यथेयं नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वर्तय।

सख्यौ स्वेच्छया शकुन्तलार्थं चिन्तिते स्तः। राजा तां स्मरिष्यति न वेति चिन्तानसूयायाः। प्रियंवदा तस्याः सौभाग्यदेवतार्चनार्थं पुष्पाणि चिनोति। अनसूया पुनः दुष्यन्तं स्मारयितुं योजनां विदधाति—'तदितोऽभिज्ञानमङ्गुलीयकं तस्य विसृजावः' इति।

राज्ञ्याः सखी वेणीसंहारे चर्चिता वर्तते। तां भानुमती दुर्योधनपत्नी नकुलेनाहीनां संहरणकथां श्रावयति।

## प्रतिहारी

अन्तःपुरस्य द्वाररक्षिका प्रतिहारी प्रतिहाररक्षी वा।[1]

स्वप्नवासवदत्तस्य षष्ठेऽङ्के प्रतीहारी काञ्चनतोरणद्वारमशून्यं कुरुते। विजयेति संज्ञया तस्याः पुंवद्भावः प्रतिभाति। सा पन्थानं प्रदर्शयति आह्वयति चाभीष्टान् जनान् राजाज्ञया स्वप्नस्य षष्ठाङ्के। प्रतिहार उपस्थितान् जनान् राज्ञे निवेदयति सा। प्रतिज्ञायौगन्धरायणे सा रहस्यमपि राजरक्षासन्देशं राजमातुर्गृहीत्वा यौगन्धरायणं निवेदयति। मुद्राराक्षसे शोणोत्तरा चन्द्रगुप्तस्य सन्देशं चाणक्याय कथयति। प्रतिमानाटकस्य प्रथमाङ्के सा रामाभिषेकमधिकृत्य बहून् जनान् यथेष्टकार्येषु

१. प्रतिहारी तु चेटी भवतीति प्रतिमानाटकात् प्रतीयते। तत्र विजया चतुर्थस्याङ्कस्य प्रवेशके चेटी वर्तते। विजयैव तस्मिन्नाटके षष्ठस्याङ्कस्य प्रारम्भे प्रतिहारी संजाता।

नियुक्ते। सा वस्तुतो महाराजाज्ञां प्रसारयति। महतामागमनं सा राज्ञे निवेदयति।[1]

बहवः प्रतिहार्यः काञ्चनतोरणद्वारे देवीनां चतुश्शालद्वारे वा नियुक्ता आसन्। प्रतिमानाटकस्य षष्ठाङ्के एका प्रतिहारी सुमन्त्रेण सहाभ्यन्तरं प्रविशति, अपरा च भरतेन सह निर्गच्छति राजप्रासादात्।

यद्यनवधानेन कश्चिज्जनो राज्ञो वचनं न शृणोति, तदा प्रतिहारी तं सावधानं करोति।[2]

अभ्यन्तरमागच्छद्भिर्बहिर्गच्छद्भिर्वा जनैः सह प्रतिहारी मार्गदर्शनाय बभूव।

कापटिकसंविधानेषु प्रतिहारी सहाया भवतीति विचार्य प्रागेव भाविकार्यपद्धतिस्तस्यै निवेदिता।[3]

प्रतिहारी राज्ञ्याः सन्देशं राज्ञे निवेदयति। मालविकाग्निमित्रे पंचमेऽङ्के राज्ञे सा कथयति—

देवी विज्ञापयति—तपनीयाशोकस्य कुसुमसहदर्शनेन ममारम्भः सफलः क्रियतामिति।

प्रमदवने राज्ञे सन्देशस्य वाहिनी प्रतिहारी बभूव। अभिज्ञानशाकुन्तले सा द्वारदेशादमात्यपत्रं गृहीत्वा तदेव राजभवनस्य प्रमदवने रममाणाय दुष्यन्तायार्पयति।

प्रतिहार्या महत्त्वपूर्णभरः क्वचित् प्रतीयत एव। अभिज्ञानशाकुन्तले सा राजानं पृष्टा अपृष्टा वा विबोधयति। तद्यथा—

सुचरितनन्दिन ऋषयो देवं सभाजयितुमागतेति तर्कयामि। देव, प्रसन्नमुखवर्णा दृश्यन्ते। जानामि विश्रब्धकार्या ऋषयः।

देव, कुतूहलगर्भोपहितो न मे तर्कः प्रसरति। ननु दर्शनीया पुनरस्या आकृतिर्लक्ष्यते।

बालरामायणे तृतीयेऽङ्के प्रतिहारी स्वयंवरसमारोहे राज्ञः परिचाययति।

---

१. प्रतिमानाटकस्य षष्ठेऽङ्के रामदर्शनानन्तरं सुमन्त्रस्यागमनं विजया निवेदयति भरताय।

२. प्रतिमानाटके प्रतिहारी सुमन्त्रं कथयति—भर्तृदारका खल्वार्यं पृच्छति।

३. मालविकाग्निमित्रस्य चतुर्थेऽङ्के।

## परिजनः परिवारो वा

राजकीयेऽन्तःपुरे बहुविधा जना परिजनाः परिवारा वेति संज्ञिताः। परिजनास्तु चेटी, दासी, सैरन्ध्री इत्यादयः सन्ति

मालविकाग्निमित्रे परिजना बालिका इति सम्बोधिता। तद्यथा—

देवी बालिकाः, आर्यपुत्रवचनमनुतिष्ठत।

परिजनः — तथा।[1]

विक्रमोर्वशीयस्य तृतीयेऽङ्के परिजनाः स्त्रियः रात्रौ राज्ञो विहारस्थले दीपिका धारयन्ति। काचिद् देवीमनु राजानं सम्भावयति—जयतु जयतु भट्टारक इति।

## यवनी

यवनी परिजनेषु अन्यतमा धनुर्बाणौ राज्ञे समर्पयति।[2] कैशिकीवृत्तिपरायणे नाटक एवं भवतु नाम। वीरोचितनाटकेषु सात्त्वतीवृत्तिपरायणेषु कञ्चुकी नायकाय धनुरादिकमुपनयति।

बालरामायणे पुरुषः कश्चित् जनकाय धनुरानयति। परशुरामाय तस्य शिष्यो माठरो धनुर्ददाति।

## तापसी

स्वप्नवासवदत्ते तापसी स्वकीय आश्रमे श्रेष्ठलोकान् सम्भावयति स्वागतमित्युक्त्वा। सा वन्दनीया भवति राजदारिकाणाम्। सा राजदारिकाया विवाहचिन्तां प्रकटयति।

विक्रमोर्वशीये पंचमाङ्के तापसी उर्वशीपुत्रमायुष्कुमारं न्यास इति गृहीत्वा पालयति। च्यवनाज्ञानुसारेण तमुर्वश्या अर्पयति च।

आश्रमवासिन्यस्तपस्विन्यो यथाकालं स्वस्तिवाचनिका दृश्यन्ते। अभिज्ञानशाकुन्तले ताः शकुन्तलायाः प्रस्थानोचितं स्वस्ति वदन्ति अभिनन्दन्ति च।

अभिज्ञानशाकुन्तले गौतमी तापसी शकुन्तलां पतिसविधं नयति।

## योगीश्वरी

योगिन्यौ कामन्दकी तस्याः शिष्या कनिष्ठा भगवती सौदामिनी च मालतीमाधवे भूमिकाद्वये वर्तेते। सौदामिनी स्वकीयां शक्तिं वर्णयति—

---

१. विक्रमोर्वशीये परिजनाः दारिका इति सम्बोधितास्तृतीयेऽङ्के।

२. विक्रमोर्वशीयस्य पञ्चमाङ्के। यवनीग्रहणमेतदर्थं कालिदासस्य विलासप्रवणतां द्योतयति। 'कालिदासो विलास' इति

भोः तथाहमुत्पतिता यथा सकल एव गिरिनगरग्रामसरिदरण्यव्यतिकर-श्चक्षुषा परिषिच्यते। अन्यच्च

गुरुचर्यातपस्तन्त्रमन्त्रयोगाभियोगजाम्।
इमामाकर्षिणीसिद्धिमातनोति शिवाय कः॥ ९.५२

सा माधवमन्तर्हितं विधाय मालतीसमीपं नयति।
योगीश्वरी कामन्दकी पुनरात्मकथां वर्णयति—

स्तन्यत्यागात्प्रभृति सुमुखी दन्तपाञ्चालिकेव
क्रीडायोगं तदनु विनयं प्रापिता वर्धिता च।
लोकश्रेष्ठे गुणवति वरे स्थापिता त्वं मयैव
स्नेहो मातुर्मयि समधिकस्तेन युक्तस्तवापि॥ १०.५॥

सा मालती-वियोगेन जीवितुं नेच्छति। माधवं श्रीपर्वतादानीय सा मित्राणि सम्मेलयति। कामन्दकीवचनानुसारेण सा स्पृहणीय-सिद्धिर्वर्तते।

### कापालिकी

मालतीमाधवे कपालकुण्डलेति विख्याता कापालिकी उत्पतन-शक्तिसम्पन्ना वर्तते। तद्यथा—

उद्वृत्तस्खलितकपालकण्ठमाला—
संघट्टक्वणितकरालकिङ्किणीकः।
पर्याप्तं मयि रमणीयडामरत्वं
सन्धत्ते गगनतलप्रयाणवेगः॥ ५.३॥

सा कापालिकेन सह चामुण्डा-पूजायै सुप्तां कुमारीं श्मशानभूमिमान-यति। सा तस्या रक्षकं माधवं हन्तुं कापालिकमादिशति। स्वयमपि सास्त्रयोधने निपुणा बभूव। सम्यङ्निर्दया कपालकुण्डला मालतीं हन्तुमुद्यतैव। सा स्वनियोगं वर्णयति—यावच्छ्रीपर्वतमुपनीय प्रतिपर्व तिलश एनां निकृत्य दुःखमारिणीं करोमि।

### दिव्यनायकाः

दिव्यनायकानां त्रिलोकव्यापिकार्यक्षेत्रं वर्तते। ते क्वचिद् मानवीय-नायकानुपकर्तुमेव प्रकटन्ति। तेषामलौकिकशक्तिर्माया चाद्भुतकर्मनिष्पा-दने प्रयुज्येते। प्रथमं तावत् त्रैकालिकज्ञानमदृष्ट्वैव ते लभन्ते।[1] उत्तर-

1. उत्तररामचरितस्य षष्ठाङ्के रामोऽपि यन्नजानाति तज्जानाति विद्याधरो रघुवंशजनि लवकुशयोरिति।

रामचरितस्य षष्ठाङ्के स्वयंप्रभुर्विद्याधरो वीरप्रशंसक एव युद्धं वर्णयति। अविमारके विद्याधरोऽविमारकस्य कृताकृतं विद्यावर्तनेन जानाति। नायकायाङ्गुलीयकमेकं ददाति यद्दक्षिणहस्ते धारितं स्वामिनमदृश्यं करोति। स आकाशयानेन लोकं पश्यति। विद्याधरास्तु—

ये संचरन्ति गगने वनिता सहायाः
क्रीडन्ति पर्वततटेषु कृतोपदेशाः।
सर्वं विदन्त्यपि च मन्त्रकृतैः प्रभावै-
रन्तर्हिताश्चविवृताश्चसुखं भ्रमन्ति॥

अपूर्वमेव कंचिद्रसनिधिं कवयोऽलौकिकनायकानां परिचयेन प्रस्तुवन्ति। तद्यथा विद्याधरदम्पतीद्वारेण भासो

वातोद्धूताग्रकेशः सलिलधरदरीमृष्टदृष्टाङ्गरागः
सम्यग्बद्धासिकक्ष्यः प्रिययुवतिकरस्पृष्टसगूढमध्यः।
वातोद्धूतोत्तरीयो मुकुटमणिगणैस्तारकाः सम्प्रमृद्नन्
श्रीमान् विद्याधरोऽसावुपरिगतिजवैः क्षीयमाणः प्रयाति॥ ४.१९
जवशिथिलविमुक्तपार्श्वकशी स्तनतटवल्गनखिन्नसन्नमध्या।
वियति दयितदत्तपूर्वकाया तडिदिव तायधरेषु दृष्टनष्टा॥४.२०

दिव्यनायका प्रायो नाटकान्तेऽनाहूता अपि प्रकटन्ति, अन्तरिक्षज्ञानेन च रहस्यमप्यपनुद्य नायकादीनां प्रयत्नान् सफलयन्ति ते।[1]

नारदः कुन्ति-भोजकुलदेवोऽविमारकस्य विवाहेन सह जयवर्मोद्वाहं कुरङ्ग्याः स्वसा सुमित्रया निर्धारयति। स बालचरिते गगनसंचारी अस्ति।

दूतवाक्ये वासुदेवादयोऽवतारा देवा एव। तेषां दिव्या शक्तयो विभूतयश्चालौकिक्यःसन्ति।[2] वासुदेवे क्षुभिते तस्य वाहनो गरुडः समायातः। तस्माद् वायुरत्युद्धतोऽभवत् अत्यतपदादित्यः, पर्वताश्चलिताः, सागराः क्षुब्धाः, वृक्षाः पतिताः, मेघा भ्रान्ताः, वासुकिप्रभृतयो भुजङ्गेश्वराः प्रलीनाः।

कर्णभारे इन्द्रो मायया भिक्षुकरूपधरः कर्णं सकपट याचते। न खलु देवानां कृते किञ्चिदकरणीयम्। देवदूतस्तत्रेन्द्रस्य सन्देशं कर्णाय ददाति।

---

१. अविमारके षष्ठेऽङ्के नारदोऽविमारकं लोकविदितं करोति।
दत्ता सा विधिना पूर्वं दृष्टा स गजसम्भ्रमे।

२. दूतवाक्ये वासुदेव आत्मनो ह्रस्वत्वं, दीर्घत्वमदृश्यत्वं, बहुसंख्यत्वं च विधाय दुर्योधनं साधयति। स मायापाशैः सर्वान् राज्ञो बध्नाति।

बालकृष्णस्तु बालचरिते नारदवचनानसारेण कंसवधार्थं वृष्णिकुले प्रसूतो नारायणः शिशुत्वमुपागतः त्रिलोकेश्वर.। मध्यरात्रे सोऽदीपितमपि वसुदेवमार्गं दीपयति। तद्यथा—

वसुदेवः—अये दीपिकालोकः।

तमसा संवृते लोके मम मार्गमपश्यतः।
अपक्रमणहेतोस्तु कुमारेण प्रभा कृता॥ १.१७

अन्यच्च तत्रैव बालकृष्णो यमुनाया जलं द्विधा छिनत्ति। 'दिव्यप्रकृतिरसूचितापि सर्ववृत्तज्ञा भवति' इति कालिदासेनाभिज्ञानशाकुन्तले दर्शितम्। तद्यथा—

राजा—मातले न खलु विदितोऽयमाखण्डलेन वृत्तान्तः स्यात्।

मातलिः—किमीश्वराणां परोक्षम्।[1]

कतिपय देवानां शापसंशोधनशक्तिर्लक्ष्यते। तथाहि विक्रमोर्वशीये इन्द्र उर्वश्याः शापं संशोधयति।

विक्रमोर्वशीये इन्द्रो नारदं पुरूरवसं स्वसन्देशं निवेदयितुं प्रेषयति।

बालरामायण इन्द्र आत्मानं पात्रीकृत्य रंगपीठेऽवतरति। तेन सह मृतो दशरथो रामरावणयुद्धं द्रष्टुं समागतो रंगपीठम्।

### वरुणः ( समुद्रदेवता )

अधिदेवानामलौकिकः प्रभावः प्रवर्तते नाटकेषु। तथा हि—अभिषेकनाटके सेतुबन्धप्रसङ्गे रामवरुणयोः संवादे वरुणस्य—

रामः—किं वरुणोऽयम्। भगवन् वरुण, नमस्ते

वरुणः—न मे नमस्कारं कर्तुमर्हति देवेशः। अथवा

राजपुत्र, कुतः कोपो रोषेण किमलं तव।
कर्तव्यं तावदस्माभिर्वद शीघ्रं नरोत्तम॥ ४.१६

रामः—लङ्कागमने मार्गं दातुमर्हति भवान्।

वरुणः—एष मार्गः। प्रयातु भवान्। ( अन्तर्हितः )[2]

---

१. विक्रमोर्वशीयेऽपि गालवो निवेदयति—सदृशमेतत् पुरुषान्तरविदो महेन्द्रस्य। पञ्चमेऽङ्के नारद इन्द्रविषये कथयति—प्रभावदर्शी मघवा वनगमनाय कृतबुद्धि भवन्तमनुशास्ति।

२. दिव्यपात्राणि क्वचिदन्तर्हितान्येव भवन्ति। उद्भ्रान्तकेन निष्क्रमन्ते वा।

रामः —कथमन्तर्हितो भगवान् वरुणः। विभीषण पश्य पश्य, भगवत्प्रसादान्निष्कम्पवीचिमन्तं सलिलाधिपतिम्।

### पितरः

मृता लोकाः स्वसन्ततेर्विपदन्निवारयितुं मर्त्यलोकमवतरन्ति। बालरामायणे दशरथो रामरावणयुद्धं द्रष्टुं लङ्कामवतरति। तत्र रावणस्य घोरप्रहारेण रामनुद्विग्नं दृष्ट्वा —

दशरथः —कः कोऽत्र धनुर्धनुः। पुरन्दरप्रसादीकृतसखिभावे सति दशरथे कथमिव रावणो रामभद्रं प्रहरतु।

पुरन्दरः— सखे दशरथ, द्वन्द्वयुद्धमिदं त्वनुचितं क्षत्रधर्मस्य दिव्यभावस्य च यद् द्वन्द्ववृत्तिरपि शस्त्रं गृह्णाति।

### नागः

नागानन्दे शङ्खचूडादयो नागा नायकाः सन्ति। तेषां विषधरत्वमपि तत्र समुदितम्। साधारणतस्तेषां व्यवहारो मानववद् वर्णितः।

### गन्धर्वः

गन्धर्वा देवानां सहायका भवन्ति। विक्रमोर्वशीये चित्ररथो गन्धर्वराज उर्वशीरक्षकं पुरूरवसमिन्द्रदर्शनाय निवेदयति। श्रेष्ठपुरुषै गन्धर्वाणामुच्चकोटिकः समादरो व्यवह्रियते। तत्रैव—

चित्ररथः—(राजानं दृष्ट्वा सबहुमानम्) दिष्ट्या महेन्द्रोपकारपर्याप्तेन विक्रममहिम्ना वर्धते भवान्।

राजा—अये गन्धर्वराजः। (रथादवतीर्य) स्वागतं प्रियसुहृदे। (परस्परं हस्तौ स्पृशतः) आकाशोत्पतनं तु गन्धर्वाणां सुसिद्धमेव।

### राक्षसः

राक्षसास्तु द्विवर्गीया विद्यन्ते। प्रथमास्ते सन्ति राक्षसा लङ्कीयाः सुसंस्कृतनागरिका रावण–विभीषणादयः। ते प्रायो मानुषस्वभावाः सन्ति। तेषां परमं वैशिष्ट्यं मायाचार एव। रावणस्य प्रतिमानाटके रूपपरिवर्तनं मारीचस्य मृगीकरणं चाभिषेकनाटके रामलक्ष्मणयोः कृत्रिमशिरसोः सीतासमक्षमुपहरणं च तेषामारभटीवृत्तिपरायणत्वं द्योतयति।

भारतीयराक्षसाः प्रायः कदाचारा एव नाटकेषु प्रवर्तन्ते। तत्र मध्यमव्यायोगे हिडिम्बा मनुष्यभोजिनी वर्तते, यद्यपि सा भीमस्य पत्नी अस्ति।

अन्यत्र वेणीसंहारे ते बीभत्सकर्मनिरता मानुषशोणितसंग्राहका भीममुखेन दुःशासनरुधिरप्रियाः सन्ति। षष्ठेऽङ्के तत्र चार्वाकनामा राक्षसो मुनिवेषधरो युधिष्ठिरगृहमागच्छति। स दुर्योधनस्य सखा पाण्डवान् वञ्चयितुं भ्रमति।

राक्षसानां लौकिकशक्तिर्भृशं वर्तते। वेणीसंहारे चार्वाको राक्षसोऽलक्षित एवाग्निं प्रज्वालयति।

## दिव्यास्त्रादीनि

दूतवाक्ये सुदर्शनः शार्ङ्गः कौमोदकी पाञ्चजन्यः, नन्दकः इत्येते वासुदेवसहायार्थमागच्छन्ति। सुदर्शनस्तु शेषाणि शस्त्राणि प्रतिबोधयति बालचरितेऽपि पञ्चायुधानि (चक्र-शार्ङ्ग-कौमोदकी-शङ्ख-नन्दकाः) गरुडेन सह बालकृष्णमुपस्थापयितुं प्रतिजानते।[1]

## देवर्षिः

यथा देवास्तथैव देवर्षयोऽपि रङ्गे न चिरं तिष्ठन्ति।[2] देवर्षिर्नारदो भासस्य कतिपयनाटकेषु प्रकटति। अविमारके तस्य भूमिका तु महत्त्वपूर्णा वर्तते। स स्वनियोगं वर्णयति सप्तमेऽङ्के—तदिदानीमहमविमारकप्रदर्शनेन तयोर्व्याक्षेपं समाक्षिपामीत्यवतीर्णोऽस्मि भूम्याम्। स नायकानां रहस्यं यथाकालं विख्यापयति तांस्तांश्च प्रबोधयति। नायकानां समाधानार्थं तस्याप्रतिमा योग्यता वर्तते। स तेषां कर्त्तव्यं निर्दिशति च। प्रस्थानकाले स आश्वासयति—

सौवीरराज किं ते भूयः प्रियमुपहरामि। बालचरिते स नारदो नारायणं द्रष्टुं ब्रह्मलोकाद् व्रजभूमिं प्राप्तः।[3] स कृष्णेन कंसवध इति सूचनां सञ्चारयितुं समाजगाम। तस्य कृतं रङ्गे न किमपि दृश्यते।

देवर्षिर्नारदः कालिदासस्य नियोगेन प्रेष्ठो विभाति। विक्रमोर्वशीये

---

१. चक्रः कथयति—

चक्रोऽस्मि कृष्णस्य कराग्रशोभी मध्याह्न-सूर्यप्रतिमोग्रतेजाः।
त्रिविक्रमे चामृतमन्थने च मया हता दानवदैत्यसंघाः॥ बाल० १.२२

२. पौराणिकराजाना कार्यकलापे तेषामुपस्थितिराकलनीया।

३. ब्रह्मलोकादिह प्राप्तो नारदः कलहप्रियः॥ १.३

स इन्द्रस्य दौत्यं सम्पादयति। स राजानं महेन्द्रसन्देशं श्रावयति। तद्यथा—

नारदः—त्रिकालदर्शिभिर्मुनिभिरादिष्टो महान् सुरासुरसङ्गरो भावी। भवांश्च सांयुगीनः सहायो नः। तेन न त्वया शास्त्रं सन्यस्तव्यम्। इयं चोर्वशी यावदायुः, तव सहधर्मचारिणी भवत्विति। अयं नारदो विक्रमोर्वशीयस्य पञ्चमेऽङ्के आयुषोऽभिषेके पौरोहित्यञ्चाचरति।

## सिद्धजनः

सिद्धस्याष्टौ दिव्याः सिद्धयो वशीकृता भवन्ति। सिद्धा आकाशचारिणः सन्तो रङ्गं न प्राविशन्ति किन्तु यथायोगं तेषामभिनन्दनवचांसि आकाशे श्रूयन्ते।[1] तद्यथा वेणीसंहारे नभस्थलचारिणा सिद्धजनेन द्रौपद्या वेणी-संहाराऽभिनन्दितः—

कृष्णाया केशपाशः कुपितयमसखो धूमकेतुः कुरूणाम्।
सोऽयं बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः ॥६.४२

## अधिदेवीदेवताः

नगरीणामधिदेव्यः सन्ति। तत्र बालरामायणे लङ्का तथा अलका देवीरूपेण रामरावणयुद्धं पश्यतः। दूरतोऽपि देव्यः पश्यन्ति।

अलका कथयति—कुबेरप्रसादादिहस्थैव दिव्येन चक्षुषा पश्यामि।

लङ्का—तन्ममापि, प्रियसखी निवेदयतु।

देवीनामन्वीक्षणयोग्यता भृशं विलसति प्राचीननाटकेषु।

## नदी देवताः

नदीदेवता उत्तररामचरिते विहरन्ति। तत्र तमसा-मुरला-गोदावरी-गङ्गादयः समागता दिव्यशक्तिप्रपन्ना अपि मानुषी प्रकृतिं धरन्ति।[2] तद्यथा तमसा सीतां परामृशति—

---

१. भ्रान्तिवशात् प्रकाशितग्रन्थेषु अत्र 'नेपथ्य उच्चरितं वचः' इति दर्शितम्। तत्र आकाशे भवेत्।

२. भागीरथी-प्रसादात् वनदेवतानामपि सीता अदृश्या संवृता।

त्वमेव ननु कल्याणि संजीवय जगत्पतिम् ।
प्रियस्पर्शो हि पाणिस्ते तत्रैव निरतो जनः ॥

तत्र गङ्गापृथिव्योः संवादः सीतया सह प्रवर्तते—

सीता—भगवत्यौ के युवाम् ।
पृथ्वी—इयं ते श्वशुरकुलदेवता भागीरथी ।
भागीरथी—इयं ते जननी विश्वम्भरा ।
पृथ्वी— एहि पुत्रि वत्से सीते।
उभौ आलिङ्ग्य मूर्च्छतः ।

**अप्सराः**

यथा देवास्तथैवाप्सरसोऽपि प्राचीनराजानां सम्बन्धेन मानवलोके स्वकार्यस्थली क्वचिद्विदधते । तत्राप्सरसां विशेषा अधोविधा आकलनीया भवन्ति—

(क) अप्सरसां तिरस्करिणी शक्तिर्विद्यते । ता यथेच्छमदृश्या भवन्ति । तत्तु पुरूरवसोर्वशीप्रणयप्रसङ्गे दर्शनीयम् ।[1] उर्वशी तिरस्करिणी-प्रतिच्छन्ना नायकभावान् प्रतिगृह्णाति ।

(ख) स्वर्गान्मर्त्यलोकावतरणशक्तिः ।
(ग) प्रणिधानेन सर्वं परिज्ञातुं विभवः ।[2]

अभिज्ञानशाकुन्तले सानुमती नामाप्सरा मेनकया नियुक्ता दुष्यन्तस्य सविधे समागता शकुन्तला-विषयकं नायकस्य भावाननुभावांश्च पश्यति । सा तिरस्करिणीवृतापि दुष्यन्तस्य वियोगार्ति पश्यन्ती स्वकीयान् मनोभावान् प्रेक्षकेभ्यः साधु प्रकटयति । तद्यथा—

सानुमती—सर्वथा प्रमार्जितं त्वया प्रत्यपदेशदुःखं शकुन्तलायाः ।

अत्र सा नायकेन संवदन्तीव प्रतिभाति ।[3]

---

१. चित्रलेखोर्वशीं प्रति निवेदयति—ननु भगवता देवगुरुणा अपराजिता नाम शिखाबन्धनविद्यामुपदिशता त्रिदशप्रतिपक्षस्यालंघनीये कृते स्वः ।

२. सानुमती स्वशक्ति सूचयत्यभिज्ञाने ।

३. सानुमति — अपरिछिन्नेदानी ते सन्ततिर्भविष्यति । अत्रापि राज्ञा संवदन्तीव सानुमती लक्ष्यते ।

सानुमति—'हा धिक् हा धिक् सति खलु दीपे व्यवधानदोषेणैषोऽन्धकार-दोषमनुभवति। अहमिदानीमेनं निर्वृतं करोमि। अथवा श्रुत मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखाद् यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति, यथाचिरेण धर्मपत्नी भर्ताभिनन्दिष्यतीति। तन्नु युक्तं कालं प्रतिपालयितुम्। यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि। इत्यनेन संवादेन दिव्यनारीणामप्सरसां महत्त्वपूर्ण योगदानं प्रतिभाति।

विक्रमोर्वशीये द्वितीयेऽङ्के चित्रलेखोर्वश्या दूतीवाचरति। सा नायकं प्रति वदति—

ननु प्रथमं मेघराजिर्दृश्यते पश्चाद् विद्युल्लता। तत्रैव उर्वशी दिव्यानुभावेन भूर्जपत्रोत्तरं निर्माति। सा यथेच्छमदृश्या सती राज्ञो विदूषकस्य च संलापं शृणोति।

ज्योतिःस्वरूपा मेनका नामाप्सरा दुष्यन्तेन प्रत्यादिष्टां शकुन्तलामप्सरस्तीर्थावतरणाद् हेमकूटं नीतवती। सा प्रतिक्षण स्वदुहितुः कुशलादिकं चिन्तयतिस्म यथावसरं तामुपचरतिस्म च।[1]

### तपोवन-देवता

तपोवन-देवता अप्रत्यक्षा एव शकुतन्तलायाः प्रस्थानकाले तामनुजानन्त्यधोविधेन वाक्येन—

> रम्यान्तरः कमलिनीहरितैः सरोभि—
> श्छायाद्रुमैर्नियमितार्कमयूखतापः।
> भूयात् कुशेशयरजोमृदुरेणुरस्याः
> शाखानुकूलपवनश्च शिवश्च पन्थाः॥

गौतमी शकुन्तलामादिशति—ज्ञातिजनस्निग्धाभिरनुज्ञातासि तपोवन-देवताभिः। प्रणम भगवतीः।

उत्तररामचरिते द्वितीयाङ्कस्य विष्कम्भके वनदेवताया आत्रेय्या सह संवादो वर्तते। मानुषीवत् सा व्यवहरति। सा वनदेवता तु वासन्तीति ख्याता। तृतीयाङ्के रामेण सह सा पुनः पुनः विवदते। सा सीतायाः प्रियसखी बभूव।

---

१. अदितिः—दुहितृवत्सला मेनकेहैवोपचरन्ती तिष्ठति। अभि० सप्तमेऽङ्के।

सा वासन्ती वनप्रजां शास्ति---

दददु तरवः पुष्पैर फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः।
कलमविरलं रज्यत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ ३.२४

## तिर्यक्प्रकृतिः[1]

तिर्यक्पात्राणि द्विविधानि सन्ति—भाषमाणानि अभाषमाणानि च। भासस्य बालचरिते कालियनागः, अरिष्टर्षभः, गरुडश्च तिर्यञ्च सन्तिः।

तत्रारिष्टर्षभः वस्तुतो दानवः पशुवत् मानुषवच्च व्यवहरति। तथाहि—

अरिष्टर्षभः —एष भोः

शृङ्गाग्रकोटिकिरणैः खमिवालिखंश्च
शत्रोर्वधार्थमुपगम्य वृषस्वरूपम्।
वृन्दावने स ललितं प्रतिगर्जमान-
माक्रम्य शत्रुमहमद्य सुखं चरामि ॥ ३.५

दामोदरस्तं गोवृषाधम इति सम्बोधयति।

कालियनागस्तु पन्नगपतिः। स यमुनाह्रदे वसति। दामोदरस्तस्य पञ्चफणेषु हल्लीसक प्रक्रीडति। दामोदरं नागो भाषते—

स्थूलाखण्डलहस्तिहस्तकठिनो भोगेन संवेष्टितं।
त्वामेव त्रिदशाधिवासमधुना सम्प्रेषयामि क्षणात् ॥

प्रतिमानाटके काञ्चनमृगः पात्रीयति।

तद्यथा—

रावणः—धावन्तं मृगं दृष्ट्वा धनुरारोपयति राघवः। एष मृग एक-
प्लुतातिक्रान्तशरविषयो वनगहनं प्रविष्टः।

प्रथमाङ्क एवाभिज्ञान शाकुन्तलस्य मृगः पात्रीयति[2]। तद्यथा

---

१. प्रसङ्गेऽस्मिन् सुग्रीवहनुमदादयो वानरा न परामृष्टाः। यद्यपि ते सपुच्छाः सन्ति तथापि बुद्धिवैभवान्मानुषभावाच्च न तेषां पशुकोटौ गणना समीचीना।

२. Mahatma Gandhi says in his letter to Mira—And if we had vision enough we should appreciate the language of trees and plants and value their friendship....They are all one and they are all expression of God. P.207,204

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्त दृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् । इत्यादि

तत्रैव चतुर्थाङ्के शकुन्तलायाः प्रस्थानकाले कालिदासेन परित्यक्तनर्तना मयूरा दर्शिताः । अस्मिन्नङ्के मातृहीनो मृगशावः शकुन्तलाया निवसने सज्जते । कण्वस्तं वर्णयति—

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ ४.१४

शकुन्तला—वत्स, किं सहवासपरित्यागिनी मामनुसरसि । इत्यादि

अभिज्ञानशाकुन्तले सिंहोऽभाषमाणं पात्रं वर्तते । तस्यानुभावास्तु प्रेक्षकाणां प्रीतये सन्ति । तद्यथा

तापसी—( राजानमवलोक्य ) भद्रमुख, एहि तावत् । मोचयानेन दुर्मोकहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् ।

तत्रैव मृग्य उद्गलितदर्भकवलाः सन्ति ।

**वनस्पतयः**

यद्यपि नरपतयः साक्षात्पात्रीभूता न सत्क्रियन्ते तथापि तेषामपि नियोगा कवीनां प्रेष्ठ एव । तद्यथाभिज्ञानशाकुन्तले—

क्षौमं केनचिदिन्दुपाण्डु तरुणा मांगल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितैः—
दत्तान्याभरणानि तत्किसलयोद्भेद-प्रतिद्वन्द्विभिः ॥

इयं वनस्पतिसेवा कालिदासानुसारेण विलसति ।

ते वनवासबन्धव इति कालिदासेन दर्शितम्—

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः
परभृतविरुतं कलं यथा प्रतिवचनीकृतमेभिरीदृशम् ॥ ४.१६

**लताः**

कालिदासस्तु लतासु पात्रत्वमन्विष्यति । लावण्यमयीलल्ना इव सुप्रसूना लताः शकुन्तलायाः प्रस्थानकाले रुदन्तीव तद्यथाभिज्ञानशाकुन्तले—

अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥

एतेषां नायकानां नियोज्य-नियोक्त्रादिदृष्ट्या समीक्षणं सोपयोगम् ।

| नियोज्यः | नियोक्ता | स्थानम् | रूपकावधारणम् |
|---|---|---|---|
| राजा | देवा इन्द्रादयः राज्ञी, | देवलोके | नाटके |
| | विदूषकः अपरो | युद्धभूमौ | |
| | राजा, मन्त्री, ऋषयः | अन्तःपुरे, वनभूमौ | ,, |
| | तपस्विनः | युद्धभूमौ | |
| | | वनभूमौ | |
| | | राजधान्याम् | |
| अमात्यः | राजा | | |
| | राज्ञी | ,, | |
| सूतः, सारथिः | राजा, स्वामी | युद्धभूमौ | |
| | स्वतन्त्रोऽपि | मृगयास्थले | |
| कञ्चुकी | राजा | प्रयाणे, | |
| | राज्ञी | राजधान्याम् | |
| | राजकन्या | अन्तःपुरे | |
| | स्वतन्त्रोऽपि | तपोवने | |
| | | राजसभायाम् | |
| राजपुरोहितः | राजा | राजधान्याम् | ,, |
| विदूषकः | राजा, राज्ञी | | नाटके |
| | अमात्यः | | प्रकरणे च |
| | स्वतन्त्रोऽपि, | अन्तःपुरे, प्रमदवने | |
| | नायको विटः | मृगया-वने | |
| | (अपवादरूपेण) | गोष्ठीषु | |
| | | सङ्गरे | |
| | | नायकस्य भवने, | प्रकरणे |
| | | नगरे च | |
| विटः | राजा[1], शकारः | नायकयोर्भवने | प्रकरणे |
| | विटः, नायिका, | नगरे च शृङ्गार- | भाणे च |
| | स्वतन्त्रोऽपि | भूमौ,वेशे | |

---

१. मुद्राराक्षसे ३.१४, नागानन्दे शेखरको विटः

| | | | |
|---|---|---|---|
| सेनापतिः | राजा, राज्ञी | राजधान्याम्, युद्धभूमौ, मृगया-वने | |
| शकारः | राजा, स्वतन्त्रोऽपि | नगरे राजसकाशे पाप-व्यभिचार-भूमौ | नाटके प्रकरणे च |
| चेटः | विटः, सार्थवाहः, गणिकानायिका, शकारः | नायकभवने, सारथिस्थानीयो यात्रायाम्, | प्रकरणे भाने |
| भटः बाह्यः परिचारक. | राजा, राजदारिका | राजप्रासादपरिसरे, युद्धभूमौ, तपोवन-भूमौ, राजधान्याम्, मन्त्रशाला-द्वारे | नाटके व्यायोगे |
| प्रतिहारः, दौवारिकः द्वारपालः | राजा, अपरे परिजनाः | राजप्रासादस्य द्वारे, मृगयाशिविरे, मन्त्रिगृहे | नाटके प्रकरणे |
| शोधनकः सुधाकारः | राजा, अधि-करणिकः | देवालये, अधिकरणे | नाटके प्रकरणे |
| वैतालिकः | राजा | राजप्रासादस्य चूडे | नाटके, नाटिकायाश्च |
| दूतः, प्रणिधिः गुप्तचरः, चरः, पुरुषः | राजा | राजामात्ययोः सन्निधौ, युद्ध-परिसरे | नाटके, व्यायोगे |
| आज्ञाप्तिहरः | राजा राज्ञी च | राजपरिसरे | नाटके |
| रक्षिपुरुषः | राजा, शकारः | राजधान्याम् | नाटके |
| चाण्डालः | राजा | श्मशाने | नाटके प्रकरणे |
| कुब्जः | राज्ञी | अन्तःपुरे | नाटके |
| किरातः | राज्ञी | अन्तःपुरे | नाटके |
| प्रणिधिः | राजामात्यश्च | शत्रु-प्रदेशे, राजसन्निधौ | नाटके |
| कूटकारकः | उभयपक्षौ | शत्रु-प्रदेशे, नायिका समीपम् | नाटके |

| | | | |
|---|---|---|---|
| कर्मशूराः | राजामात्यश्च | राजकार्यार्थं सर्वत्र | नाटके |
| ऋषिः | आत्मवश्यः, स्वतन्त्रः | तपोवने, राजप्रसादे | नाटके |
| शिष्यः | आचार्यः | तपोवने, गुरुसन्निधौ, राजप्रसादे, राजधान्याम् | नाटके |
| भिक्षुः | स्वतन्त्रः | सर्वत्र | नाटके, प्रहसने |
| विप्रः, पाषण्डी | राजा, स्वतन्त्रः | सर्वत्र | नाटके, भाणे |
| कापालिकः | स्वतन्त्रः | शिवमन्दिरे | प्रकरणे |

**दिव्यनायकाः**

| | | | |
|---|---|---|---|
| विद्याधरः | स्वतन्त्रः | नायकस्य सन्निधौ | नाटके |
| अवतारः | ,, | नायकस्य सन्निधौ युद्धस्थले च | नाटके |
| वरुणः | ,, | नायकस्य सन्निधौ | ,, |
| दिव्यास्त्राणि | दिव्यनायकाः | युद्धस्थले | नाटकादिषु |
| गन्धर्वः | इन्द्रादयो देवाः | नायकस्य सन्निधौ | नाटकादिषु |
| देवर्षिः नारदः | इन्द्रः स्वतन्त्रो वा | राजप्रासादे | ,, |
| राक्षसः | पौराणिको राजा स्वतन्त्रः | युद्धभूमौ | ,, |

**स्त्री-भूमिका**

| | | | |
|---|---|---|---|
| राज्ञी | राजा, मन्त्रि-परिषद्, सपत्नी | अन्तःपुरे क्वचिदन्यत्र नायक-सन्निधौ | नाटके |
| राजनायिका | राजा, विदूषकः, धात्री, सखी | अन्तःपुरे, शृङ्गार-लीलाभूमौ | नाटके |
| आश्रमकन्या | कुलपतिः, नायकः अतिथिः | आश्रमभूमौ | नाटके |
| राजमाता | स्वतन्त्रा | राजभवने | नाटके |

| | | | |
|---|---|---|---|
| गणिका | माता, प्रणयिजनः | वेशे, स्वभवने, नायक- | |
| | स्वामिनी | सन्निधौ, प्रमदवनोद्याने | प्रकरणे |
| चेटी | अन्तःपुर-स्वामिन्यः, | अन्तःपुरे, वेशे | नाटके, |
| | राजकन्या | नायकभवने | प्रकरणे, |
| | गणिका, | | भाणे |
| | स्वतन्त्रापि | | |
| उद्यान-पालिका | राज्ञी | प्रमदवने | नाटके, प्रकरणे |
| दूती | नायिका, नायकश्च | अन्तःपुरे, विलास-भूमौ | नाटके, भाणे, |
| | | अभिसार-स्थली | च प्रकरणे |
| धात्री | भर्तृदारिका | नायिका-सन्निधौ | नाटके |
| | | नायक-सन्निधौ च | प्रकरणे |
| सखी | नायिका, राज्ञी, | नायिका-सन्निधौ, | नाटके |
| | परस्परं वा नायकः | अन्तःपुरे | प्रकरणे |
| | स्वतन्त्रापि | | |
| प्रतिहारी | नायकः, नायिका, | नायिका सन्निधौ | नाटके |
| | अमात्यः | नायक सन्निधौ, | |
| | | अन्तःपुरद्वारम् | |
| | | राजभवनद्वारम् | |
| भगवती | स्वतन्त्रा | सर्वत्र | प्रकरणे |
| योगीश्वरी | | | |
| परिजनः | राजा, राज्ञी च | राजभवने, अमात्य- | नाटके, |
| | गणिका वा | भवने | प्रकरणे |
| अभिसारिका | दूती, नायकः, | वेशे, नायकसन्निधौ | नाटके |
| | स्वतन्त्रा वा | | |
| यवनी | राजा | राजप्रासादे, | नाटके |
| तापसी | कुलपतिः, | मृगयावने, शिविरे वा | |
| | स्वतन्त्रा वा | आश्रमे, राजप्रासादे | नाटके |

# नाटकेष्वन्यथासम्भावनम्

नाटकेषु छायाविधानेन कस्यचित्पात्रस्यान्यथाग्रहणं भवत्येव। तद्यथा स्वप्नवासवदत्तस्य प्रथमेऽङ्के यौगन्धरायणो वेषादिपरिवर्तनेन ब्रह्मचारीति सम्भाव्यते। अत्रान्यविधमेवान्यथासम्भावनमभिप्रेतम्, येन कस्यचिन्नायकस्याभिप्रायः, प्रयोजनमाशयो वान्यथा गृह्यतेऽन्येन नायकेन।

संस्कृतसाहित्ये नातिसुलभमेतद्रुचिकरं विधानम्, किन्तु भासस्य कतिपयनाटकेषु भूयिष्ठं प्रभवतीदम्। तथाहि—

### प्रतिमानाटके

प्रतिमानाटकस्य षष्ठेऽङ्के कैकेयी रामरक्षिणीति भासेन प्रतिवेदिता। तद्यथा—

कैकेयी—(आत्मगतम्) भवतु, इदानीं कालः कथयितुम्। (प्रकाशम्) जात, त्वं जानासि महाराजस्य शापम्। एतन्निमित्तमपराधे मां निक्षिप्य पुत्रको रामो वनं प्रेषितः, न खलु राज्यलोभेन। अपरिहरणीयो महर्षिशापः पुत्रविप्रवासं विना न भवति।

भरतः—अस्ति पाण्डित्यं सम्यग्विचारयितुम्। अथ विदितमेतद् गुरुजनस्य।

सुमन्त्रः—कुमार, वसिष्ठ-वामदेव-प्रभृतीनामनुमतं विदितञ्च।

भरतः—हन्त त्रैलोक्यसाक्षिणः खल्वेते। दिष्ट्यानपराद्धात्रभवती। अम्ब यद् भ्रातृस्नेहात् समुत्पन्नमन्युना मया दूषितात्रभवती, तत्सर्वं मर्षयितव्यम्, अम्ब अभिवादये।

अनेन भरतस्य प्रथमपदे कैकेयीविषयकमन्यथा सम्भावनं प्रकटति।

### प्रतिज्ञायौगन्धरायणे

प्रतिज्ञायौगन्धरायणे नायको वत्सराजः प्रद्योतेन निगृहीतः। अतएव वत्सराजस्य मन्त्री यौगन्धरायणः प्रद्योतं शत्रुरिति सम्भावयति। वस्तुतः प्रद्योत आद्यन्तमुदयनस्य हितचिन्तकस्तं जामातारं विधातुं

सचेष्टो वर्तत इति तस्य विषये कौशाम्बीक-जनानामन्यथा सम्भावनं कविना प्रकटितमेव ।

### मृच्छकटिके

मृच्छकटिके परं रुचिकरमेवविदूषकस्य वसन्तसेना-विषयकमन्यथा सम्भावनम् । नैकस्थलेषु स तां नारीरत्नवरेण्यतमामन्यथासम्भाव्यैवावज्ञापयति । तद्यथा चतुर्थेऽङ्के—

विदूषकः ( वसन्तसेनामधिकृत्य ) सुष्ठूलक्षितं दुष्टविलासिन्या ।

रत्नावली-प्रदानान्तर स वसन्तसेनां पुनर्विदूषयति---किमन्यत्तत्र गत्वा ग्रहीष्यति ।

स चारुदत्तं कथयिष्यति—निवर्ततामस्माद् गणिकाप्रसङ्गादिति ।

स्वगतं विदूषको वदति—अहो गणिकाया लोभोऽदक्षिणता च, यतो कथापि न कृतान्या । तावद्दास्याः पुत्र्या गणिकाया मुखमपि न द्रक्ष्यामि । ····अलुब्धा गणिकेति दुष्करमेते सम्भाव्यन्ते । तत् प्रियवयस्यं गणिका प्रसङ्गान्निवर्तयामि ।

स विदूषको नायकं सूचयति—सखीजनदत्तसंज्ञया पटान्तापवारितं मुखं कृत्वाहमुपहसितः । तदहं ब्राह्मणो भूत्वेदानीं भवन्तं शीर्षेण पतित्वा विज्ञापयामि—निवर्त्यतामात्मास्माद् बहुप्रत्यवायाद् गणिकाप्रसङ्गात् । गणिका नाम पादुकान्तरप्रविष्टेव लेष्टुका दुःखेन पराक्रियते । अपि च भो वयस्य, गणिका हस्ती कायस्थो भिक्षुःचाटो रासभश्च यत्रैते निवसन्ति तत्र दुष्टा अपि न जायन्ते ।·······अद्य प्रदोषे मया ( वसन्तसेनया ) आगन्तव्यम् इति । तत्तर्कयामि रत्नावल्या अपरितुष्टापरं याचितुमागमिष्यतीति ।

स विदूषकश्चारुदत्तं पृच्छति—भो अपि जानासि किन्निमित्तमीदृशे दुर्दिन आगतेति । उत्तरयति च—अल्पमूल्या रत्नावली, बहुमूल्यं सुवर्णभाण्डमिति न परितुष्टापरं याचितुमागता । स वसन्तसेनया सम्भाषते—

विदूषकः —अथ किं निमित्तं पुनरीदृशे प्रनष्टचन्द्रालोके दुर्दिनान्धकारे आगता भवति ।

चेटी—एषा सत्त्वार्या एवं प्रष्टुमागता—किं तस्या रत्नावल्या मूल्यमिति ।

विदूषकः —चेटि, किं भवत्या इहैव स्वप्तव्यम् ।

### मुद्राराक्षसे

राक्षश्चाणक्यं शत्रुरिति मन्यते ।[१] अन्तिमाङ्के तस्येयं सम्भावना-ऽसत्कल्पनेति राक्षसं प्रति चाणक्यस्याधोवचनेन स्पष्टं भवति–

सर्वं मे वृषलस्य वीर भवता संयोगमिच्छोर्नयः ॥ ७.९

तदयं वृषलस्त्वां द्रष्टुमिच्छति ।

### नागानन्दे

भ्रान्तिवशादन्यथासम्भावनं कल्प्यते क्वचित् संविधानसौष्ठवेन । तद्यथा द्वितीयेऽङ्के--

विदूषकः —भो वयस्य तदा सा त्वया रुदती किं भणिता ।

नायकः —वयस्येदमुक्तम्--

निष्यन्द इवानेन मुखचन्द्रोदयेन ते ।
एतद् बाष्पाम्बुना सिक्तं चन्द्रकान्त शिलातलम् ॥ २.७

नायिका--( सरोषम् ) चतुरिके, अस्ति किमतोऽप्यपरं श्रोतव्यम् । तदेहि, अन्यतो गच्छावः ।

चेटी—( हस्ते गृहीत्वा ) भर्तृदारिके, एवं मा भण । त्वमेव स्वप्ने दृष्टा । नैतस्यान्यस्यां दृष्टिरभिरमते ।

मित्रावसुजीमूतवाहनयोर्भाषणमध्ये पुनः ।

नायिका—न मे हृदयं प्रत्येति । तत्कथावसानं यावत् प्रतिपालयावः । ......हञ्जे मा हस, किं विस्मृतं त एतस्यान्यहृदयत्वम् ।

(सरोषमात्मगतम्) हताश को वैतन्न जानाति ? नायको विश्वावसो-र्विवाह-प्रस्तावं श्रुत्वा मित्रावसुं प्रति कथयति—क इह नेच्छेद् भवद्भिः सह श्लाघ्यमीदृशं सम्बन्धम् । किन्तु न शक्यते चित्तमन्यतः प्रवृत्तमन्यतः प्रवर्तयितुम् । ततो नाहमेनां ( मलयवतीं ) प्रतिग्रहीतुमुत्सहे ।

नायिका—( मूर्च्छां नाटयति )....किं ममैतेन दौर्भाग्यकलङ्क-

---

१. तद्यथा सूत्रधारो स्पष्टयति—

क्रूरग्रहः स केतुश्चन्द्रं सम्पूर्णमण्डलमिदानीम् ।
अभिभवितुमिच्छति बलाद् रक्षत्येनं तु बुधयोगः ॥ १.६

मलिनेनात्यन्तदुःखभागिनाप्यपि शरीरेण धारितेन । तदिहैवाशोकपादपेऽनयातिमुक्तलतया उद्बध्यात्मानं व्यापादयिष्यामि ।

नायकस्येयमवस्थान्यथासम्भावनेन जायते ।

अन्यथासम्भावनस्य परमोत्कृष्टमुदाहरणमादिकविना रामायणे प्रकल्पितम् । तत्र चित्रकूटमागच्छन्नास्ते भरतः । दूरतस्तं दृष्ट्वा लक्ष्मणो रामं निवेदयति—

सम्पन्नं राज्यमिच्छंस्तु व्यक्तं प्राप्याभिषेचनम् ।
आवां हन्तुं समभ्येति कैकेय्या भरतः सुतः ॥

अयोध्या० ९७.१७

स रामं प्रस्तावयति—भरतो वध्य एव हीति ।

किन्तु रामो भ्रान्तिं निराकरोत् । तद्यथा—

मन्येऽहमागतोऽयोध्यां भरतो भ्रातृवत्सलः ।
मम प्राणैः प्रियतरः कुलधर्ममनुस्मरन् ॥
स्नेहेनाक्रान्तहृदयः शोकेनाकुलितेन्द्रियः ।
द्रष्टुमभ्यागतो ह्येष भरतो नान्यथागतः ॥

अयो० ७९.९,११

रामस्य जटायुं प्रत्यन्यथाभावचित्रणं कवेरन्यथाभावस्य स्पृहां निदर्शयति । तद्यथा—

अनेन सीता वैदेही भक्षिता नात्र संशयः ।
गृध्ररूपमिदं व्यक्तं रक्षो भ्रमति कानने ॥

तं हन्तुं यदा राम उद्यतो बभूव, तदा जटायुरवदत्—

रक्षसा निहतं पूर्वं मां न हन्तुं त्वमर्हसि ।

मारीचप्रकरणे लक्ष्मणं प्रति हनुमन्तं प्रति च लङ्कायां सीतायाः दर्शन-प्रकरणे सीताया अन्यथाभावः प्रथित एव ।

# अंकादौ नायकस्य मानसिकस्थितेः पूर्वपीठिका

यथा कस्यचिदङ्कस्य कथानुरूपिणी रङ्गसज्जाहार्यादिकैः क्रियते, तथैव प्रमुखनायकस्याङ्कादौ मानसिकस्थितेरङ्कविषयिणी पूर्वपीठिका कविना प्रस्तूयते।

अभिज्ञानशाकुन्तले

प्रथमाङ्के मृगयादृश्यानन्तरमाङ्किकथाया आरम्भ एव मुखनायकस्याङ्कोचितमानसिकस्थितिरधोविधं चित्रिता—

राजा—(परिक्रम्यावलोक्य च) इदमाश्रमद्वारम्। यावत् प्रविशामि। (प्रविश्य, निमित्तं सूचयन्)

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र॥

'अत्र स्फुरति च बाहुः' इत्येतस्य फलं प्रीतिसुन्दरीनायिकाफलप्राप्तिर्दुष्यन्तस्य मानसे प्रतिफलति। अतः परं शकुन्तला-मिलन-प्रकरणं प्रारभ्यते। तत्र शकुन्तलाया मानसिकस्थितेः पूर्वपीठिका तस्या वचनेन अस्ति—मे सोदर-स्नेह एतेषु (वृक्षकेषु)।

द्वितीयाङ्कस्य नायको दुष्यन्तः शकुन्तलामिलनोपायं विचिन्तयन् विदूषकं स्वमनोगतं वक्ति—

न जाने भोक्तारं कमिह समुपस्थास्यति विधिः॥ २.११
चिन्तय तावत् केनापदेशेन सकृदप्याश्रमे गच्छाम।

इत्येतस्या आङ्किककथायाः कृते नायकस्य मानसिकपूर्वपीठिकाधोविधमुपकल्पिताङ्कादौ—

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते॥ २.१
सर्वं तत् किल मत्परायणमहो कामः स्वतां पश्यति॥ २.२

तृतीयेऽङ्के नायकस्य शकुन्तलया गान्धर्वविवाहो निष्पन्नप्राय एव। तत्र कार्यजातस्य प्रसूः नायकस्य मानसिकस्थितेः पृष्ठभूमिरङ्कादौ दुष्यन्तस्यैकोक्तिद्वारेणाधोविधमुपनीता—

राजा—( निःश्वस्य )

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम्।
न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम्॥ ३.४

अथ च

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे।
यदि मयि सम्भृतहृदयां तामधिकृत्य प्रहरतीति॥ ३.४

चतुर्थेऽङ्के शकुन्तलाया आश्रमत्यागस्य कारुणिकं दृश्यं वर्तते। अत्र नायिकाप्रधानं कार्यजातं विलसति। अस्याङ्कस्य पूर्वपीठिका शकुन्तलाया बाष्पविसर्जनेन समुद्दिष्टा। तथा हि—

शकुन्तला—उचितमपि इदमद्य बहु मन्तव्यम्। दुर्लभमिदानीं मे सखीमण्डनं भविष्यतीति। ( बाष्प विसृजति ) अत्र बाष्पविसर्जनं तु सात्त्विकभावस्य सूचकमङ्कान्तं यावत् कारुण्यं छादयति।

पञ्चमाङ्कस्यादौ हंसपदिकाया गीतस्य श्रवणेन दुष्यन्त उन्मनस्को भवति। तद्यथा स एकोक्तिद्वारेण स्पष्टयति—

राजा—किं नु खलु गीतमेवंविधमाकर्ण्येष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि। अथवा—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि॥ ५.२

( पर्याकुलस्तिष्ठति )

इयं मानसिकस्थितिरङ्कान्तं यावत् प्रभवतीति स्पष्टमेव।

षष्ठाङ्कस्य मानसिकपूर्वपीठिकाधोविधिनाङ्कादौ प्रस्तुता—

स्यालकः—तस्य ( अङ्गुलीयकस्य ) दर्शनेन भर्तुरभिमतो जनः स्मारितः। मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकनयन आसीत्।

पुनश्च कञ्चुकिमुखेन—

यदैव खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं देवेन 'सत्यमूढपूर्वा मे तत्रभवती रहसि शकुन्तला मोहात् प्रत्यादिष्टेति, तदा प्रभृत्येव पश्चात्तापमुपगतो देवः। तथा हि—

> रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्नं प्रत्यहं सेव्यते
> शय्याप्रान्त-विवर्तनैर्विगमयत्युन्निद्र एव क्षपाः।
> दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
> गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ॥

अस्मात् प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः।

अङ्कादौ नायकः स्वयमपि स्वकीयां मानसिकस्थितिं निदर्शयति। तद्यथा—

राजा—( ध्यानमन्दं परिक्रम्य )

> प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबाध्यमानमपि सुप्तम्।
> अनुशयदुःखायेदं हृतहृदयं सम्प्रति विबुद्धम् ॥ ६.७

विदूषकस्तदेव समर्थयति—लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना। न जाने कथं चिकित्सितव्यो भविष्यति।

सप्तमाङ्कस्य भावभूमिका प्रथमाङ्काद् विपरिवर्तते। तद्यथा—

राजा—( निमित्तं सूचयित्वा )

> मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा।
> पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥ ७.१३

अतःपरं शकुन्तलया पुनर्मिलनस्य काण्ड प्रथमाङ्कपद्धत्या प्रारभ्यते प्रथमं सद्यो भरतस्य दर्शनेन।

मलिविकाग्निमित्रविक्रमोर्वशीययोरपि वस्तुतः कतिपयेष्वङ्केषु नायकस्य मानसिकस्थितेः पूर्वपीठिका सन्दृब्धैव किन्तु नैतत् सार्वत्रिकम्। एतयोर्द्वयोः प्रथमाङ्कयोर्भावभूमिका नैव प्रतिष्ठापिता। विक्रमोर्वशीयस्य चतुर्थाङ्केऽपि भावभूमिका न लक्ष्यतेऽङ्कादौ। कालिदासस्य नाट्यकलायाः सर्वोच्चपरिणतिरभिज्ञानशाकुन्तले विकसिता। तत्रायं मानसिकस्थितेः पूर्वपीठिकेति निर्बन्धा भूयो विलसति।

अङ्कादौ मानसिकस्थितेर्निदर्शनाय कविर्बहुविधाः क्लृप्तीर्नाटकीय-

कथासु योजयति । तद्यथाभिज्ञानशाकुन्तलस्य प्रथमाङ्कस्यादौ दुष्यन्तस्य बाहुस्फुरणं पञ्चमाङ्के वा हंसपदिकाया गीतम् ।

**मुद्राराक्षसे**

चाणक्यस्य मानसिकस्थितेः पूर्वपीठिका प्रथमाङ्कस्यादौ परिचीयते नायकस्याधोवचनेन

चाणक्यः—कथय क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति ।

आस्वादितद्विरद शोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य ।
जृम्भाविदारितमुखस्य मुखात् स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूयदंष्ट्राम् ।। १.८

इत्यनेन स्पर्धात्मकाभिग्रहमानसिकभावः सूच्यते ।

द्वितीयाङ्कस्यादौ नाट्यनिर्देशानुसारेण राक्षसः सचिन्तो वर्तते ।[1] तस्येय मानसिकस्थितिः स्वयं राक्षसेनाधोविधं विव्रियते—

चिन्तावेशसमाकुलेन मनसा रात्रिंदिवं जाग्रतः ।
सैवेयं मम चित्रकर्मरचना भित्तिं विना वर्तते ।। २.८

इत्यनेन तस्य नैराश्यं द्योतितम् ।

मुद्राराक्षसस्य तृतीयेऽङ्के नायकस्य चन्द्रगुप्तस्याङ्किकमानसिकस्थितेः पूर्वपीठिका तस्याधोवचनेन प्रकटीकृता

परायत्तः प्रीतेः कथमिव रसं वेत्ति पुरुषः ।। ३.४

इति चिन्ता ।।

चतुर्थाङ्कस्य मुख्यनायकस्याधोविधया मानसिकस्थित्या भावात्मक-पीठिका सङ्केतिता—

मम विमृशतः कार्यारम्भे विधेरविधेयताम्
अपि च कुटिलां कौटिल्यस्य प्रचिन्तयतो मतिम् ।
अथ च विहते मत्कृत्यानां निकाममुपग्रहे
कथमिदमिहेत्युन्निद्रस्य प्रयात्यनिशं निशा ।। ४.९

---

१. 'ततः प्रविशत्यासनस्थः पुरुषेणानुगम्यमानः सचिन्तो राक्षसः' इति नाट्यनिर्देशः ।

अन्यच्च—इममनुभवति क्लेशमस्मद्विधो वा ॥ ४.३

तत्रैव द्वितीयस्य मुख्यपात्रस्य मानसिकस्थितेः पूर्वपीठिका तस्या—धोवचनेन प्रस्ताविता—(निःश्वस्यात्मगतम्) अद्य दशमो मासस्तातस्योपरतस्य। न चास्माभिस्तमुद्दिश्य तोयाञ्जलिरप्यावर्जितः।

पञ्चमाङ्कस्य नायको मलयकेतुरङ्कादौ स्वमानसिकस्थितिं प्रकटयति—अहो राक्षसं प्रति विकल्पबाहुल्यादाकुला मे बुद्धिर्न निश्चयमधिगच्छति।

इत्यारूढकुलालचक्रमिव मे चेतश्चिरं भ्राम्यति ॥ ५.५ ॥

षष्ठेऽङ्के नैराश्यविपन्नो राक्षसः सास्रं स्वकीयां मानसिकस्थितिमादावेवैकोक्त्या वदति पञ्चमश्लोकादारभ्य पञ्चदश श्लोकं यावत्।

सप्तमेऽङ्के चत्वारः मुख्यनायकाः प्रचरन्ति—चन्दनदासो, राक्षसश्चाणक्यश्चन्द्रगुप्तश्च। एतेषां रङ्गप्रवेशकाल एव तेषां वचनेन मानसिकस्थितेः पूर्वपीठिका प्रस्ताविता। तद्यथा

**चन्दनदासस्य**

(सबाष्पं) हा धिक् हा धिक्। अस्मादृशानामपि नित्यं चरित्रभङ्गभीरूणां चोरजनोचितं मरणं भवतीति नमः कृतान्ताय, इत्यनेन चन्दनदासस्य खिन्नता प्रकाशिता।

**राक्षसस्य**

भवति न भेतव्यम्। भो भोः शूलायतनाः न खलु व्यापादयितव्यश्चन्दनदासः।

> येन स्वामिकुलं रिपोरिव कुलं दृष्टं विनश्यत् पुरा
> मित्राणां व्यसने महोत्सव इव स्वस्थेन येन स्थितम्।
> आत्मा यस्य वधाय वः परिभवक्षेत्रीकृतोऽपि
> प्रियस्तस्येयं मम मृत्युलोकपदवी वध्यस्रगाबध्यताम् ॥

इति राक्षसस्य नैराश्यभावो मानसिकस्थितेः पूर्वपीठिकेति व्यक्तम्।

**चाणक्यः**

> केनोत्तुङ्गशिखाकलापकपिलो बद्धः पटान्ते शिखी
> पाशैः केन सदागतेरगतिता सद्यः समासादिता।

केनानेकपदानवासितसटः सिंहोऽर्पितः पञ्जरे
भीमः केन च नैकनक्रमकरो दोर्भ्यां प्रतीर्णोऽर्णवः ।

इत्यनेन चाणक्यस्यानन्यसाध्यभरोद्वहनप्रीतिः गर्वश्च समासाद्येते ।

**चन्द्रगुप्त :**

जगतः किं न विजितं मयेति प्रविचिन्त्यताम् ।
गुरौ षाड्गुण्यचिन्तायामार्ये चार्ये च जाग्रति ॥

इत्यनेन विश्वविजयप्रहर्षः कृतज्ञता च द्योत्येते चन्द्रगुप्तस्य मानसिकस्थितेः पूर्वपीठिका ।

नायकस्य मानसिकस्थितेः पूर्वपीठिकां प्रस्तोतुं कविः क्वचिन्निमित्तादिकमभिनवघटनामायोजयति, क्वचनैकोक्तिद्वारेण भूतभाविघटनावासितं मनोभावं चित्रयति, कदाचन प्रीतिदान् पराक्रमान् गणयति अथवा प्रकृष्टोपलब्धीनां दैववशात् नवावतारं प्रगुणयति ।

### वेणीसंहारे

वेणीसंहारस्य प्रथमाङ्कस्यादौ नायकस्य भीमस्य मानसिकस्थितेः पूर्वपीठिका नाटचनिर्देशेनाधोविधं प्रकटिता—

ततः प्रविशति सहदेवेनानुगम्यमानः क्रुद्धो भीमः ।

सप्तमेऽङ्के युधिष्ठिरो मुख्यनायको वर्तते । तस्य मानसिकस्थितेः पूर्वपीठिका स्ववचनेनाभास्यते । तद्यथा—

युधिष्ठिरः —(साशङ्कम्) सत्यं समरगोचरो मे वत्सः ।

पाञ्चालकः—सत्यम् । किमन्यथा वक्ष्यते महाराजाय ।

युधिष्ठिरः —

त्रस्तं विनापि विषयादुरुविक्रमस्य
चेतो विवेकपरिमन्थरतां प्रयाति ।
जानामि चोद्धतगतस्य वृकोदरस्य
सारं रणेषु विजये परिशङ्कितश्च ॥६४॥

### नागानन्दे

नागानन्दस्य प्रथमाङ्के नायकस्य मानसिकस्थितेर्भूमिका विदूषकस्याधो वचनेन प्रस्तूयते—

प्रथमसंगमोत्कण्ठितप्रियाकण्ठग्रह इव रोमाञ्चयति प्रियवयस्यं मलयमारुतः। नायकः स्वयमादौ मानसमतूनं व्यनक्ति—

"सेव्योऽयं मलयाचलः किमपि मे चेतः करोत्युत्सुकम्"

( दक्षिणाक्षिस्पन्दनं सूचयन् ) अये—

दक्षिणं स्पन्दते चक्षुः फलाकांक्षा न मे क्वचित्।
न च मिथ्या मुनिवचः कथयिष्यति किं न्विदम्॥ १.१०

विदूषकः —भोवयस्य, अवश्यमासन्नं ते प्रियं निवेदयति।

नागानन्दस्य द्वितीयाङ्कस्यादौ नायिकाया अधोवचनेन तस्या मानसिकस्थितिः प्रस्फुटीभवति प्रेक्षकाणां कृते--हृदय, तथा नाम तस्मिञ्जने यल्लज्जया पराङ्मुखीकृत्येदानीं तत्रात्मना गतमसीत्यादि। रंगपीठे प्रवेशानन्तरं नायकस्य मानसिकस्थितिस्तस्याधोवचनेन प्रतिफलति--

पुष्पेषो भवता मुधैव किमिति क्षिप्यन्त एते शराः॥२.२

चतुर्थेऽङ्क आदावेव नायको वदति—

याता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया॥३.४

इत्यनेन मानसिकस्थितेः प्राग्भावः सूचितः।

चतुर्थाङ्कस्यादौ नायकस्याधोविधचिन्तनं तस्याङ्कस्य मानसिकस्थितिं निदर्शयति--

"शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः" इत्यादि।

## उत्तररामचरिते

उत्तररामचरितस्य पञ्चमाङ्कस्यादौ जनकस्य मानसिकस्थिति-र्निदर्शिता--

**दण्डायनः**—

हृदि नित्यानुषक्तेन सीता शोकेन तप्यते।
अन्तः प्रसुप्तदहनो जरन्निव वनस्पतिः॥

**जनकः—**

अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन्मर्माणि क्रकच इव मन्युर्विरमति ॥

तत्रैवारुन्धत्याः कौसल्यायाश्च स्वमुखेन मानसिकस्थितिः प्रस्ताविता । यथा—

अरुन्धती—तत्कोऽयं पदे पदे महाननध्यवसायः ।

कौसल्या—न शक्नोम्युद्वृत्तमानमूलबन्धनं हृदयं पर्यवस्थापयितुम् ।

मालतीमाधवस्य प्रथमाङ्कारम्भे नायकस्य माधवस्य मानसिकस्थितिरधोविधं प्रतिष्ठापिता—

माधवः—(स्वगतम्)

तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य
चेतः कथं कथमपि व्यपवर्तते मे ।
लज्जां विजित्य विनयं विनिवार्य धैर्य-
मुन्मथ्य मन्थरविवेकमकाण्ड एव ॥१.१९

यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवासीत् ।
तत्संनिधौ तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥१.२०

# विष्कम्भकोपलक्षणम्--भूमिकापरिचयः

कतिपयसंस्कृतनाटकेष्वादौ प्रथमाङ्कात् प्राग् विष्कम्भको वर्तते। तत्र नाटकस्य प्रायः सर्वेषां नायकपुरुषाणां संक्षिप्तपरिचयं कविर्नाटकीयं विधानमनुसरन्निव वर्णयति। तद्यथा मालतीमाधवे प्रथमाङ्कात् प्राग्विष्कम्भके संवदन्त्यौ कामन्दकी अवलोकिता च इतिवृत्तभूमिकयानुबद्धनायकपरिचयं सूचयतः।

१. नायकयोः परिचयः—भूरिवसु देवरातापत्ययोरनयोर्मालतीमाधवयोरभिमतं पाणिग्रहमङ्गलं स्यात्।

२. नायकपितुर्देवरातस्य—विदर्भराजस्य मन्त्रिणा सता देवरातेन।

३. प्रतिनायकस्य नन्दनस्य—ता याचते नरपतेर्नर्मसुहृन्नन्दनो नृपमुखेन।

४. लवङ्गिका—मालतीधात्रेयी।

५. मन्दारिका—कलहंसा विहार दासी मन्दारिकां कामयते।

६. कलहंसः—माधवानुचरो मन्दारिकां कामयते।

७. सौदामिनी—कामन्दक्याः पूर्वशिष्या समासादिताश्चर्यमन्त्रसिद्धिप्रभावा श्रीपर्वते कापालिकव्रतं धारयति।

८. अघोरघण्टः—श्मशानवासिनः साधकस्य मुण्डधारिणोऽघोरघण्ट-नामधेयस्य।

९. कपालकुण्डला—अघोरघण्टस्यान्तेवासिनी।

१०. मकरन्दः—सोऽपि पार्श्वचरो माधवस्य बालमित्रं मकरन्दो नन्दनस्य भगिनीं मदयन्तिकां यदि समुद्वहति।

११. बुद्धरक्षिता—कामन्दक्याः प्रियसखी।

एत एव नायकपुरुषा मालतीमाधवे विलसन्ति। एतेषां परिचयो नाटकेऽस्मिन् शुष्कविधिना नैव पुरस्कृतोऽपितु ते सर्वे विष्कम्भकोचित-कथावस्तुनि युगपत् संगुम्फिताः सन्ति।

न केवलं मालतीमाधवेऽपितु मालविकाग्निमित्रेऽपीयं योजना प्रवर्तते।

तत्रापि विष्कम्भके प्रथमाङ्कात् पूर्वं वकुलावलिका कौमुदिका गणदासश्च संवदन्ति। तेषां सम्भाषणे देवी धारिणी, नायिका मालविका, नाट्याचार्यो गणदासः, राजा अग्निमित्रः, कुमारी वसुलक्ष्मी राजमहिषी इरावती, देव्या भ्राता वीरवरश्च प्रवर्त्तन्ते कथामुखेन।

पुराणेतिहास-कथानायकाः प्रेक्षकैः पूर्वमेव ज्ञाता भवेयुः परमितरे नायकाः प्रकरणेषु ऐतिहासिकनाटकेषु च प्रेक्षकाणामज्ञाता आसन्। तेषां परिचयार्थं यदि नाम 'प्रथमाङ्कात् प्राग्विष्कम्भको नाभवत्तर्हि प्रथमाङ्कस्यारम्भे क्वचित् कस्यचिन्नायकस्यैकोक्त्या कथामुखेतरनायक-पुरुषाणां परिचयो वर्णितः। तद्यथा मुद्राराक्षस्य प्रथमाङ्के चाणक्यः स्वैकोक्तौ चन्द्रगुप्त-मलयकेतु-राक्षस-सर्वार्थसिद्धि-भागुरायण-भद्रभटेन्द्र-शर्मेत्यादीनां नायकपुरुषाणां परिचयं प्रस्तौति।

**प्रवेशकस्यलक्षणम्**

प्रवेशकोऽधोविधं लक्षितं पूर्वाचार्यैः —

गच्छेद्यदि विकृष्टस्तु देशकालवशान्नरः।
अङ्कच्छेदे तमन्यस्मिन् निर्दिशेद्धि प्रवेशके॥

ना० शा० १३.२३

दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम्।
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधातव्यम्॥

ना० शा० १८.२६

परिजनकथानुबन्धः प्रवेशको नाम विज्ञेयः। ना०ना० १८.२८

अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम्।
प्रकरणनाटकविषये प्रवेशकः संविधातव्यः॥

ना० शा० १८.२३

अनेन प्रतिभाति यत् नवीनं किञ्चिदपेक्षितमेव प्रवेशकादिलक्षणे ऽस्माभिर्गवेषितं तत्।

# नाटके वैषम्य-निधानम्

नाटकेषु वैषम्यनिधानं तु पुरातनकवीनामन्यतममभितमासीत्। अस्मिन्नियोगे भासोऽग्रेसरः प्रतिभाति। नायकाः केन विधिना वैषम्याभिभूताश्चित्रीक्रियन्त इति प्रमुखतो भासनाटकानामुदाहरणेन प्रस्तूयते, यतो हि नाम—वैषम्ये भ्राजते भासः

भासस्य प्रायः सर्वे फलाधिकारिणो मुख्यनायका नाटकारम्भेऽवश्यमेव व्यसनापन्ना एव सानुक्रोशं प्रेक्षकाणां साधुवादमावर्जयन्ति।

### स्वप्नवासवत्ते

स्वप्नवासवदत्ते नायिका वैषम्यं स्वीकुर्वाणा यौगन्धरायणेन प्रोषितभर्तृकेति सूच्यते।[1] तदा वासवदत्ता कथयति—एषा गच्छामि मन्दभागा। तत्रैव यौगन्धरायणो नायकविपत्ति प्रकटयति—

दृष्टा विपत्तिरथ यैः प्रथमं प्रदिष्टा। १.११

तदनु ब्रह्मचारी तत्रागत्य नायकस्योदयनस्य दृढमभिप्रेतायाः पत्न्या मृगयानिष्क्रान्ते राजनि ग्रामदाहेन पञ्चत्वगमनं निवेदयति। वासवदत्ता कथयति—जीवामि मन्दभागा।

ब्रह्मचारी कथयति—यौगन्धारायणो मन्त्री राज्ञीरक्षणायाग्नि प्रविष्टो विपन्नश्च। 'ततः प्रतिनिवृत्तो राजा तद्वृत्तान्तं श्रुत्वा तयोर्वियोगजनितसन्तापः तस्मिन्नेवाग्नौ प्राणान् परित्यक्तुकामामात्यैर्महता यत्नेन वारितः। ततस्तस्याः शरीरोपभुक्तानि दग्धशेषाण्याभरणानि परिष्वज्य राजा मोहमुपगतः। एतच्छ्रुत्वा वासवदत्ता रोदिति। तृतीयाङ्के सात्मानं मन्दभागेति वर्णयति।

---

१. यौगन्धरायणः—इयं मे स्वसा प्रोषितभर्तृकामिमामिच्छाम्यत्रभवत्या कञ्चित्कालं परिपाल्यमानाम्।

अहो वैषम्य-वैदग्ध्यं रुमण्वतः—

अनाहारे तुल्यः प्रततरुदितक्षामवदनः
शरीरे संस्कारं नृपतिसमदुःखं परिवहन्
दिवा वा रात्रौ वा परिचरति यत्नैर्नरपति
नृपः प्राणान् सद्यस्त्यजति यदि तस्याप्युपरमः ॥

विलपन्तं नायकं प्रदर्श्य कविः प्रथमाङ्कं कारुण्यपूरं विधत्ते ।

### प्रतिज्ञायौगन्धरायणे

प्रतिज्ञायौगन्धरायणे नायक उदयनः, तस्य माता मन्त्रिणश्च सर्वे वैषम्ये निपतिताः। उदयनो युध्यमानो मोहंगतः कर्कशाभिर्लताभिः शरीरयन्त्रणात् प्रधर्षितः[1] इत्यनेन प्रथमाङ्को वैषम्यं प्रतनोति ।

### प्रतिमानाटके

प्रतिमानाटकस्य प्रथमेऽङ्के रामस्य वनवासः, सीताया वल्कलधारणं, दशरथस्य रामवियोगेन मोहोपगमनं पौराणां वाष्पाकुलेक्षणं च निगदितम्। एतत्सर्वं वैषम्यस्य विलसितमेव ।

### अविमारके

अविमारके राजकुमारो नायको न स्वापराधादपितु पितुर्वागसंयमात् मुनिशापाभिभूतोऽन्त्यजत्वं गतः। तदनुसारिविदूषकेण प्रकाशिता तस्य विपन्नता—

'न जानन्त्यवस्था विशेषमीश्वरपुत्रा नाम। अतस्तत्रभवान् अविमारक ऋषिशापेन कुलपरिभ्रंशमन्त्यजकुलप्रवासमात्मनो विज्ञानं गुरुजनं चाचिन्तयन्' इत्यादिना द्वितीयोऽङ्कः प्रारभ्यते ।

### चारुदत्ते

विदूषकश्चारुदत्ते नायकस्य भूयिष्ठं दारिद्र्यं वर्णयन् स्वयमेव कापोतिकवृत्तिग्रहणं विमर्हति।[2] तत्र नायको दारिद्र्यपीडितो दीर्घं निःश्वस्य वदति—

---

१. न्यस्तं तस्य भुजद्वयस्य वलयस्थानान्तरे बन्धनम् ।

२. अहं तत्रभवतश्चारुदत्तस्य दरिद्रतया समं पारावतैः साधारणवृत्तिमुपजीवन्नन्यत्र चरित्वा चरित्वा तस्यावासमेव गच्छामि ।

दारिद्र्यं खलु नाम मनस्विनः पुरुषस्य सोच्छ्वासं मरणम् ।
स्थितः शरीरेण मृतः स जीवति, सौहृदानि सुजने शिथिलीभवन्ति ।
नायकस्य नाटकान्तःस्थितिः प्रारम्भ एव वर्णिता —

पापं कर्म च यत्परैरपि कृतं तत्तस्य सम्भाव्यते । १.६

**अभिषेकनाटके**

अभिषेकस्य स्थापनायां सूत्रधारो मुख्यकथानायकस्य पताका-नायकस्य च विपदर्णवं प्रस्तावयति । तद्यथा—

(१) सीताहरणजनितसन्तापस्य रघुकुलप्रदीपस्य रामस्य ।

(२) दाराभिमर्शन-निर्विषयीकृतस्य सुग्रीवस्य । एतयोर्द्वयोर्वैषम्य-ग्रस्तयोः सन्धिस्ततः प्रवर्तते कार्यार्थम् ।

**बालचरिते**

बालचरितस्य प्रथमोऽङ्को देवक्या अधोवचनेन प्रारभ्यते—

हा धिक्, पुत्रकस्य मे महानुभावत्व सूचयिष्यन्ति जन्मसमय-समुद्भूतानि महानिमित्तानि । प्रत्यक्षीकुर्वत्यपि कंसहतकनृशंसत्वं चिन्त-यन्ती सुष्ठु न प्रत्येमि मन्दभागिनी ।

वसुदेवस्तां सूचयति—देवकि, अर्धरात्रः खलु वर्तते । प्रसुप्तो मथुरायां सर्वो जनः । तस्माद् यावन्न कश्चित् पश्यति, तावद् बालं गृहीत्वा-पक्रमामि । यत्र दैवं विधास्यति, तत्र बालं गृहीत्वापक्रमामि ।

किं द्रष्टव्यः शशाङ्कोऽयं राहोर्वदनमण्डले ।
त्वयाप्यस्य सुदृष्टस्य कंसो मृत्युर्भविष्यति ॥ १.१२

**पञ्चरात्रे**

नायकेन दुर्योधनेन यो यज्ञः सम्पादितस्तस्यावभृथेऽग्निः समुत्पन्नः । सोऽग्निः सर्वसंहारनिष्ठो प्रवर्तते । तदिदं वैषम्यं प्रथमाङ्कस्य विष्कम्भके व्यञ्जनया परिनिष्ठितमधःश्लोकेन—

शुष्केणैकेन वृक्षेण वनं पुष्पितपादपम् ।
कुलं चारित्रहीनेन पुरुषेणेव दह्यते ॥

वैषम्यमुखे पतदेव कौरवकुलमिति कविनान्यथापि प्रदर्शितम् । यथा—

अवनतविटपो नदीपलाशः पवनवशाच्चलितैकपर्णहस्तः ।
दवदहनविपन्नजीवितानामुदकमिवैष करोति पादपानाम् ॥

अत्र पलाशस्तु धृतराष्ट्र एव, उदकार्हास्तु कौरवकुलजा युद्धे दिवंगताः।

### ऊरुभङ्गे

ऊरुभङ्गं महाभारतीययुद्धस्य सीमान्तमेव वर्णयतिः। तत्र वैषम्य-विशेषः सूत्रधारेण वर्णितः ।यथा---

तनयशतनयनशून्ये दुर्योधनावशेषे धृतराष्ट्रपक्षे, पाण्डवजनार्दनावशेषे युधिष्ठिरपक्षे, राज्ञां शरीरसमाकीर्णे समन्तपञ्चके ।

एतद्रणं हतगजाश्वनरेन्द्रयोधं
संकीर्णलेख्यमिव चित्रपटं प्रविद्धम् ।
युद्धे वृकोदरसुयोधनयोः प्रवृत्ते
योधो नरेन्द्रनिधनैकगृहं प्रविष्टः ॥

### कर्णभारे

नायकस्य कर्णस्याभूतपूर्वो हृदयपरितापो भटेन निर्दशितः 'सशोक-मुपैति धीमानिति भटस्तं वर्णयति । कर्णः स्वयमेवात्मानं वर्णयति—

वैधुर्यमापतति चेतसि युद्धकाले । १.६

परशुरामस्य शापेनास्तंगमितमहिमा कर्णो वैषम्यमूर्तिरेव ।

### दूतघटोत्कचे

नाटकेऽस्मिन्नभिमन्युसंहारेण प्रीतानां कौरवाणां न चिरमविदितं यदर्जुनस्य युद्धोद्योगेन श्व एव तेषां विनाशलीला दृश्येत । अहो वैषम्यं तु शिखरायते ऽर्जुनवाक्येन—

येन मे निहतः पुत्रस्तुष्टि ये च हते गताः ।
श्वः सूर्येऽस्तमसम्प्राप्ते निहनिष्यामि तानहम् ॥ २९

### मध्यमव्यायोगे

मध्यमव्यायोगे ब्राह्मणपरिवार एव वैषम्यं सहते । नाटकारम्भे वृद्धो ब्राह्मण आत्मदशां वैषम्यग्रस्तां निवेदयति—

तरुणरविकरप्रकीर्णकेशो भ्रुकुटिपुटोज्ज्वलपिंगलायताक्षः ।
सतडिदिव घनः सकण्ठसूत्रो युगनिधने प्रतिमाकृतिर्हरस्य ।

एवंविधो भयानको घटोत्कचस्तेषां पृष्ठलग्न आसीत् तान् पीड-यितुम्। अनेन प्रकरणेन व्यायोगोऽयं प्रारभ्यते।

**दूतवाक्ये**

दूतवाक्यस्य समारम्भः सूत्रधारानुसारेणाधोविधो भवति—

उत्पन्ने धार्तराष्ट्राणां विरोधे पाण्डवैः सह।
मन्त्रशालां रचयति भृत्यो दुर्योधनाज्ञया॥

तत्र विरोध एव वैषम्य-स्रोतः।

**सम्भोगाभावः**

पूर्वोक्तेषु रूपकेषु नायकानां चरितानि संघर्षसम्पृक्तानि दृश्यन्ते। नास्ति नायकानां सम्भोगस्येषदपि वर्णनम्। अत एव भासो 'नायकस्य प्रत्यक्षचरितसम्भोगः' नाटके भवेदेवेति नियमं न स्वीकरोति। भरतः कथयति—

ये नायका निगदितास्तेषां प्रत्यक्षचरितसम्भोगः।
नानावस्थोपेतः कार्यस्त्वङ्कोऽविकृष्टस्तु॥ १८.१७

तदधिकृत्याभिनवगुप्तो व्याकरोति—

"धीरोदात्तादयो विजिगीषुतन्मित्रप्रभृतयो वा ये नायकाः प्रतिनायकाश्च तेषां चरितं, तदुपायानुष्ठानं तथा सम्भोगः प्रत्यक्षः सन्निहितः साक्षाद् दृश्यमानो न तु सूच्यमानो, यत्र तादृगङ्को नयति।....प्रेक्षकाणां सम्भोग-प्रत्यक्षत्वे च तद्गतकेवलक्लेशदर्शनाद् वैरस्यं सामाजिकस्य स्यात्। किमनेन महता कष्टेनेति। तत एवोक्तं न निःसुखः स्यादिति। नाना प्रकारावस्थौ प्रतिनायकगतौ चरितसम्भोगावनुपादेयावविषये चेति हेयावस्थौ, नायकगतौ तु तद्वैपरीत्यादुपादेयावस्थाविति तु शब्दस्यार्थः।'

यथा प्रागेव निर्दशितम्—भास-नाटकेषु स्वप्नवासवदत्तादिषु सर्वे नायका वैषम्ये आपतिताः सम्भोगरहिता एव विचरन्ति आद्यन्तम्। नायकानां सम्भोगोऽङ्केषु क्वापि न प्रेक्ष्यते तत्र सामाजिकैः। अत एव ब्रवीमि—भासनाटकेषु सम्भोगविषयकं भारतीयमभिनवभारतीयं वा मतमसमञ्जसमेव। वस्तुतो भासः सम्भोगस्यावसरमेव न कल्पयति।

●

# घटनानां प्रभावावधारणम्

कस्या अपि घटनायाः कियान् प्रभावः सामाजिकानां मानसे जायेतेति सुकविः तस्या घटनाया उपनयविशेषेण नियन्त्रयति। तथा हि—अभिज्ञानशाकुन्तले दुर्वाससः शापो वर्तते—आः, अतिथि-परिभाविनि

> विचिन्तयन्ती यमनन्यमानसा
> तपोधनं वेत्सि न मामुपस्थितम्।
> स्मरिष्यति त्वां न स बोधितोऽपि सन्
> कथां प्रमत्तः प्रथमं कृतामिव ॥ ४.१

अस्य शापस्य क्रूरिष्ठप्रभावो नाटकेऽस्मिन् सम्यग्दृश्यते। एतस्य प्रभावस्य परुषता यदि नाम सामाजिकानादावेवोद्वेजयेत्तर्हि विरसतापद्येत। अत एवाधोलिखिता उपायाः कविनास्या घटनाया उपनयार्थं स्वीकृताः। अयं शापो नेपथ्ये श्रावितः, न तु रङ्गपीठे। यदि नाम दुर्वासा स्वयमेवाश्रावयिष्यत्तर्हि तस्य भीषणं भावानुभावादिकं प्रत्यक्षीकृत्य सामाजिका भृशमुद्विग्ना अभविष्यन्।

शापस्तु न सूच्यविधानेन श्रावणीय इति भरतस्य स्पष्टं मतम्। तद्यथा—

> क्रोधप्रसादशोकाः शापोत्सर्गोऽथ विद्रवोद्वाहौ।
> अद्भुतसम्भवदर्शनमङ्के प्रत्यक्षजानि स्युः॥

तथापि दुर्वाससः शापो नेपथ्येन श्रावित इति तत्र प्रधानहेतुरयमेव वर्तते यत् कैशिकीवृत्तिरोधक एव शापोत्सर्गः।

शापस्य प्रभावं सामाजिकानां मानसे न्यूनीकर्तुमेव तस्य वचनं माधुर्यव्यञ्जकैर्वर्णैर्निष्पादितम्। न तत्र परुषाक्षराणि रौद्रभावोचितानि प्रयुक्तानि।

नायं शापो सर्वथा भैरव इति तस्य संशोधनेन कविर्विज्ञापयति।

तद्यथा—किन्त्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयन् स्वयमन्तर्हितः।

अनसूया—अस्ति तेन राजर्षिणा सम्प्रस्थितेन स्वनामधेयाङ्कित-मङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम्। तस्मिन् स्वाधीनोपाया शकुन्तला भविष्यति।

अभिज्ञानशाकुन्तलस्य सप्तमेऽङ्के दुष्यन्तेन कालनेमिप्रसूते दुर्जय-दानवगणस्य युद्धे पराजयः श्रव्यविधिना सामाजिकेभ्य उपनीतः, न दृश्येन, दृश्यश्रव्येण वा। अत्र कैशिकीवृत्तात्मके कथानके वीरोचितपरा-क्रमादीनां प्रभावस्योनीकरणमेव हेतुः।

मालविकाग्निमित्रं नाटकं कैशिकीवृत्तिप्रधानम्। तत्र पञ्चमस्याङ्कस्य प्रवेशके राजकुमारस्य वसुमित्रस्य यज्ञतुरङ्गरक्षकपदे नियुक्तिः, वीरसेनस्य विदर्भराजविजयः, माधवसेनस्य विमोचनञ्चैतद् घटनात्रयं आरभटी-सात्वतीवृत्तिपरं सूच्यमेव न दृश्यरूपेणोपनीतम्, यतो हि नाम दृश्यं तु सुचिरं गभीरं च प्रभावं जनयति।

# नाटकवृत्तेषु रहस्यविन्यासः

किमपि वृत्तानुरोधि भूतं भावि वा रहस्यं प्रेक्षका यथाशीघ्रं जानन्त्विति कविर्यतते । तदेव रहस्यं को नायकः कदा केनोपायेन जानात्विति रसावर्जनदृष्ट्या कविना कौशलेन सम्पाद्यते । कस्यचिद् रहस्यस्य ज्ञानेनाज्ञानेन च नायकानां यद् भाववैशिष्ट्यं वृत्तिवैचित्र्यं च जन्येते तत्तु सहृदयानां रसास्वादस्यान्यतमः किन्तु महत्त्वपूर्णं उद्गमः ।

न केवलं कलापेक्षयापितु किमपि अभीष्टं साधयितुं दुरितं निवारयितुमपि रहस्यरक्षणमावश्यकं भवतीति कालिदासेनाभिज्ञानशाकुन्तलेऽनसूयामुखेनाधोविधं निर्दशितम्—

अनसूया—प्रियंवदे, द्वयोरेव ननु नौ मुखे एष वृत्तान्तः ( शकुन्तलाशापः ) तिष्ठतु । रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी ।

मालतीमाधव इदं रहस्यरक्षणं तु संवरणम् । तत्र कामन्दकी अवलोकितां सूचयति—वत्से संवरणं तत् ।

विशेषतस्तु बालत्वात्तयोर्विवृतभावयोः ।
तेन माधवमालत्योः कार्यः स्वमतिनिह्नवः ॥

कतिपयनायकैरपि न ज्ञातं वृत्तात्मकं रहस्यं तेषां चरित्रे वैचित्र्यपूर्णं विशेषं जनयति । अयं नाटकीय-विशेषो नाट्यस्य प्राणा इव विलसति बहुषु महनीयेषु रूपकेष्विति समीक्ष्यते ।

भासस्य प्रतिमानाटक उद्विग्नो भरतो मातरमधिक्षिपति—

वल्कलैर्हृतराजश्रीः पदातिः सह भार्यया ।
वनवासं त्वयाज्ञप्तः शुल्केऽप्येतदुदाहृतम् ॥ ३.२०

कैकेयी प्रतिवदति—जात देशकाले निवेदयामि । स चासौ देशकालः षष्ठेऽङ्क उपस्थितः । तद्यथा भरतः ( कैकेयीं प्रति )—

यः स्वराज्यं परित्यज्य त्वन्नियागाद् वनं गतः ।
तस्य भार्या हृता सीता पर्याप्तस्ते मनोरथः ॥ ६.१३
हन्त भोः सत्त्वयुक्तानामिक्ष्वाकूणां मनस्विनाम् ।
वधूप्रघर्षणं प्राप्तं प्राप्यात्रभवती वधूम् ॥ ६.१४

कैकेयी—( आत्मगतम् ) इदानीं कालः कथयितुम् । ( प्रकाशम् ) त्वं जानासि महाराजस्य शापम् ।

तेनोक्तं रुदितस्यान्ते मुनिना सत्यभाषिणा ।
यथाहं भोस्त्वमप्येवं पुत्रशोकाद्विपत्स्यसे ।। ६.१५

जात, एतन्निमित्तमपराधे मां निक्षिप्य पुत्रको रामो वनं प्रेषितः ।

स्पष्टमेव यदिदं कैकेय्या रहस्यरक्षणं प्रतिमानाटकस्य नाटकीयं लावण्यं भूरिशो जनयति ।[१]

स्वप्नवासवदत्तस्य वृत्तस्यारम्भो लावाणकदाहेन भवति । अयं दाहः प्राङ्नियोजित आसीन्मन्त्रिभिः वासवदत्तया च । वासवदत्ता यौगन्धरायणश्च मृताविति मिथ्यावादो घोषितः । अनेन मिथ्यावादेन नाटकीया कथा पञ्चमाङ्कं यावत् प्रपञ्चिता । षष्ठेऽङ्के यौगन्धरायणो वासवदत्ता च प्रत्यक्षीभवतः । तदा यौगन्धरायणः कथयति—

स्वामिन् देव्यपनयेन कृतापराधः खल्वहम् । तत्क्षन्तुमर्हति स्वामीति ।

अविमारके नायकस्य शापवृत्तं केवलं द्वित्रा जना एव जानन्ति । नायिकापि न जानाति । केवलं सप्तमाङ्के रहस्यमिदं सौवीरराजेन सर्वेषां कृत उद्घाटितम् । ततः प्राङ् नायकयोः प्रणयगाथा रहसि प्रवर्तते बहूनां कृते ।

यौगन्धरायणस्य प्रच्छन्नरूपता, प्रतिज्ञा, कार्यसंयोजना च बहुभिर्नायकैरविदिता एव । तद्यथा—

सेनाभिर्मनसानुबद्धजघनं कृत्वा जवे वारणं
सिंहानामसमाप्त एव विरुते त्यक्त्वा सविन्ध्यं वनम् ।
एकाह्ने व्यसने वने स्वनगरे गत्वा त्रिवर्णां दशा
येनैव द्विरदच्छलेन नियतस्तेनैव निर्वाह्यते ।।३.५

एतद्विषयकसंवादोऽधोविधो वर्तते

विदूषकः—'श्लाघनीयं भवेद् यदि लोको जानाति ।
यौगन्धरायणः—न नः कार्यं लोकेन । स्वामिप्रियार्थोऽयमारम्भः ।
विदूषकः—सोऽपि तावन्न जानाति ।

१. अस्मिन्नाटके दशरथस्य मरणमपि भरताद् निगूहितं तृतीयाङ्कस्य पूर्वार्धे ।

यौगन्धरायणः ----काले ज्ञास्यति । इयं द्वितीया प्रतिज्ञा--

सुभद्रामिव गाण्डीवी नागः पद्मलतामिव ।
यदि तां न हरेद् राजा नास्मि यौगन्धरायणः ॥ ३.८

बालचरिते बालकृष्णस्य भरः ( दुष्कृतां विनाशः ) नाटकस्यान्तिमेऽङ्के वसुदेवमुखेन विज्ञाप्यते । तद्यथा--भो भो मथुरावासिनः, अलमलं साहसेन—

ज्येष्ठोऽयं मम तनयस्तु रौहिणेयो
देवक्यास्तनयमिमं च किं न वित्थ ।
सन्नाहं त्यजत किमायुधैश्च कार्यं
कंसार्थं स्वयमिह विष्णुराजगाम ॥ ५१.३

अभिज्ञानशाकुन्तले सामाजिकैः सुविदितः शकुन्तलायाः शापवृत्तान्तः प्रकृतिषु केवलं प्रियंवदयानसूयया च ज्ञात आसीत् । स चासौ नाटकस्यान्तिमेऽङ्के सर्वेषां कृते प्रकाशितो बभूव । तद्यथा---

मारीचः ---- तदैव ध्यानादवगतोऽस्मि दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा नान्यथेति । स चायमङ्गुलीयकदर्शनावसानः ।

शकुन्तला---दिष्ट्याऽकारणप्रत्यादेशी नार्यपुत्रः । न खलु शप्तमात्मनं स्मरामि । अथवा प्राप्तो मया स हि शापो विरहशून्यहृदयया न विदितः । अतः सखीभ्यां सन्दिष्टास्मि---भर्तुरङ्गुलीयकं दर्शयितव्यमिति ।[1]

मारीचः ----

शापादसि प्रतिहता स्मृतिरोधरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव ।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ ७.३२

देवाः शापं शकुन्तलावियोगावसानं विधातुं प्रयत्नपराः सन्तीति रहस्यं सानुमतीवचनेन केवलं प्रेक्षका एव विदितवन्तः । तद्यथा----

सानुमती—श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखाद् यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति, यथाचिरेण धर्मपत्नीं भर्ताभिनन्दिष्यतीति।

मालविकाग्निमित्रे रहस्य-रक्षण-प्रकाशनोपायाः संविदिता एव। तत्र चतुर्थेऽङ्के राजा विदूषकं कथयति—

'जयसेनायास्तावदस्मद्रहस्यं विदितं कुरु' इति।

कापटिकमिदमत्र रहस्यम्। विदूषकस्य सर्पदंशस्तु कपटाचरणम्। तदनु राजा, परिव्राजिका, ध्रुवसिद्धिश्च सर्वे ते कपटवृत्तिका गम्भीरा इव तस्योपचाराय यतन्ते। सामाजिका अपि न जानन्ति कपटाचरणमेतेषां पात्राणाम्।

नागमणिमुद्रां दर्शयित्वा मालविकां मोचयति विदूषक इति वृत्तान्तोऽज्ञात एवासीत् इरावत्या निपुणिकायाश्च पंचमेऽङ्के यावत्सा बकुलावलिकां मालविकां च राजोपासने व्यापृते न पश्यति।[१]

विक्रमोर्वशीये द्वितीयेऽङ्के नायको विदूषकं पृच्छति—

'अपि रक्ष्यते भवता रहस्य-निक्षेपः' इति।

एतद्रहस्यं नायकस्योर्वशी-प्रणयारम्भप्रकरणमेव। न तु विदूषकेण रक्षितमिदमिति तत्रैव प्रवेशकेन परिचीयते।[२]

अस्मिन्नेव नाटक इन्द्रस्याधोलिखितमुर्वशीविषयकं नियोजनं केवलं उर्वशी, गालवपेलवौ च जानन्ति स्म, नान्यानि पात्राणि। तावत्त्वं यथाकामं पुरुरवसमुपतिष्ठस्व यावत् स त्वयि दृष्टसन्तानो भवेदिति।

तत्र रहस्योद्घाटनं पुत्रलाभदिवसे नाटकस्यान्तिमेऽङ्के स्वयमुर्वशी एव करोति—

तदेतवानेव मे महाराजेन सह संवासः।

---

१. तत्र निपुणिकेरावतीं मालविका-विमोचन-रहस्यं निवेदयति—माधविकया-ख्यातम्—एवं खल्वेतन्निवृत्तमिति। ( इति कर्णे कथयति। )

२. चेटी—तृणाग्रलग्नमिवावश्यायसलिलं न तस्मिन् राजरहस्यं चिरं तिष्ठति। विदूषकः—एतां दुष्टचेटिकां प्रेक्ष्य तद् राजरहस्यं हृदयं भित्त्वा निष्क्रामतीव।

गन्धमादनपर्वते कुमारवनं प्रविश्योर्वशी लताभावेन परिणतेति शापरहस्यं न ज्ञातं नायकयोश्चतुर्थाङ्कं यावत् ।

मालविकाग्निमित्रे मालविकाविषय आदेशिकानां भविष्यवाणी परिव्राजिकामुखेन नाटकस्यान्तिमेऽङ्क एव विज्ञाप्यते यत् आसंवत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यतीति

'धारिणी मालविकायाः पाणिग्रहणमग्निमित्रेण सह कर्तुमुद्यतैवेति नायको, विदूषको, नायिका च कल्पयन्ति' इति तेषां वचनैः प्रतिभाति । रहस्योद्घाटनमेतद्विषयकं धारिण्यैवान्तिमे क्षणे क्रियते ।

अननुकूलमाचरन्तीरावती नूनमनुकूलं समाचरितुकामा बभूवेति रहस्यं नाटकस्यान्तिमेऽङ्के तस्या वचनेनोद्घाटयते ।

मृच्छकटिके द्वितीयेऽङ्के दर्दुरकः स्वगतं वदति—'कथितं च मम प्रियवयस्येन शर्विलकेन, यथा किल—'आर्यकनामा गोपालदारकः सिद्धादेशेन समादिष्टो राजा भविष्यति' इति सर्वश्चास्मद्विधो जनस्तमनुसरति । तदहमपि तत्समीपमेव गच्छामि ।' आर्यकस्य राजपदे प्रतिष्ठापनं तु न केनापि नायकेन ज्ञातं दर्दुरक–शर्विलका अन्तरेण । षष्ठेऽङ्केऽपि केवलं चन्दनक एव जानाति तस्य कारागाराद् विनिर्मोचनं भविष्यद्राज्यग्रहणं च । अस्मिन्नेवाङ्के चारुदत्तोऽपि आर्यकमुखेन आर्यकस्य भाव्यभ्युदयं जानाति ।

अष्टमेऽङ्के विटः स्वगतं वदति–भवतु, यत्रार्यशर्विलकचन्दनकप्रभृतयः सन्ति, तत्र गच्छामि । एवं राजविद्रोहस्य साफल्यं तत्सम्बन्धियोजनानां रहस्यरक्षणेन सम्भवति ।

मुद्राराक्षसस्य परमं रहस्यं केवलं चाणक्यस्यैव विदितम् । परतस्तेन विज्ञापितश्चन्द्रगुप्तोऽजानात् । तदेवैकोक्तिद्वारेण नायकभूतः स प्रेक्षकाणांबोधाय प्रथमाङ्के स्पष्टयति—

'अत एवास्माकं त्वत्-(राक्षस-) संग्रहे यत्नः ।

कथमसौ वृषलस्य साचिव्य-ग्रहणेन सानुग्रहः स्यात् ।'''तन्मप्राप्यस्मिन् वस्तुनि न शयानेन स्थीयते । यथाशक्ति क्रियते तद्ग्रहणं प्रति यत्नः । इत्यारभ्य 'वृषल एव केवलं प्रधानप्रकृतिरस्मासु आरोपितराजतन्त्रभारः सततमुदास्ते इति यावत् । पुनरपि तदेव 'स्वच्छन्दमेक-

चरमुज्ज्वलदानशक्तिमित्यादि स्वगतेन प्रेक्षकाणामेव विदितम् ।[1]

सप्तमाङ्के च चाणक्यो रहस्यमिदमुद्घाटयत्यधोविधम्—

'अमात्यराक्षस नेमौ चाण्डालौ' इत्यारभ्य 'किं बहुना । एष संक्षेपतः कथयामि—

भृत्या भद्रभटादयः स च तथा लेखः स सिद्धार्थकः
तच्चालङ्करणत्रयं स भवतो मित्रं भदन्तः किल ।
जीर्णोद्यानगतः स चापि पुरुषः क्लेशः स च श्रेष्ठिनः
सर्वे मे      ( इत्यर्धोक्ते लज्जां नाटयन् )
वृषलस्य वीर भवता संयोगमिच्छोर्नयः ॥

इत्येतत् सर्वेषां कृते महाविस्मयावहम् ।

उत्तररामचरिते रामेण परित्यक्तायाः सीतायाः किमभवदिति रहस्यं तृतीयाङ्कस्य विष्कम्भके तमसा-मुरला-संवादेन केवलं प्रेक्षका एव जानन्ति । तद्यथा------

तमसा------तत्सर्वं श्रूयताम् । अस्ति खलु वाल्मीकितपोवनोपकण्ठात् परित्यज्य निवृत्ते सति लक्ष्मणे सीता देवी प्राप्तप्रसववेदनमतिदुःखसंवेगात्मानं गङ्गाप्रवाहे निक्षिप्तवती । तदैव तत्र दारकद्वयं च प्रसूता भगवतीभ्यां पृथ्वीभागीरथीभ्यामभ्युभाभ्यामभ्युपपन्ना रसातलं च नीता स्तन्यत्यागात्परेण दारकद्वयं च तस्य प्राचेतसस्य महर्षेर्गङ्गादेव्या समर्पितं स्वयम् ।

एतत्सर्वं रामादयः प्रमुखनायकाः सप्तमाङ्कस्य गर्भनाटकप्रयोगस्य दर्शका एव विजानन्ति ।

मालतीमाधवे कामन्दकी चिरं संवृतं कार्यमपावृणोति दशमेऽङ्के । तद्यथा कामन्दकी-मुखेन

श्रावकावस्थायामस्मत्सौदामिनीसमक्षं तयोः प्रवृत्तेयं प्रतिज्ञावाभ्यामपत्यसम्बन्धः कर्तव्य इति ।

---

१. तृतीयाङ्के चाणक्यश्चन्द्रगुप्तं सूचयति----

स हि भृशमभियुक्तो यद्युपेयाद् विनाशं
ननु वृषल वियुक्तस्तादृशेनासि पुंसा । ३.२५

मालती------अहो संवरणम् ।

> यत्प्रागेव मनोरथैर्वृतमभूत्कल्याणमायुष्मतो-
> स्तत्पुण्यैर्मदुपक्रमैश्च फलितं क्लेशैश्च मच्छिष्ययोः
> निष्णातश्च समागमोऽपि विहितस्त्वत्प्रेयसः कान्तया
> सम्प्रीतौ नृपनन्दनौ यदपरं प्रेयस्तदप्युच्यताम् ॥ १०.२४

रहस्यं नाम केनचित् कैश्चिद्वा जनैः कतिपयजनेभ्यो निगुह्यते । तद् रहस्यं प्रेक्षकेभ्यः प्रकटीक्रियतेऽधोविधानेन------

(१) प्रवेशक-विष्कम्भकाभ्याम्—दुर्वाससः शापोऽभिज्ञाने विष्कम्भकेण चतुर्थादङ्कात् प्राक् प्रकाशितः ।

(२) एकोक्तिद्वारेण—मुद्राराक्षसस्य प्रथमाङ्के चाणक्येन राक्षसग्रहणोपाया निवेद्यन्ते ।

(३) स्वगतेनापवारितकेन च मृच्छकटिके दर्दुरकेणार्यकस्य भविष्यराजपदग्रहणमित्यादेशिकवचनं स्वगतेन प्रकाशितं मृच्छकटिके द्वितीयाङ्के ।

(४) स्वपक्षीयेषु जनेषु मन्त्रणेन—प्रतिज्ञायौगन्धरायणे तृतीयेऽङ्के यौगन्धरायणस्य राजरक्षणयोजनाया विवरणानि ।

(५) क्वचिद् देवा एवाकाशवाण्या रहस्यमुद्घाटयन्ति । यथा अभिज्ञानशाकुन्तले—

> दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
> अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥

इत्यनेन शकुन्तलाया गान्धर्वविवाहस्य रहस्यं प्रकाशितमेव सर्वेषाम् ।

(७) गर्भनाटकप्रयोगेणोत्तररामचरिते सप्तमाङ्के रामेण परित्यक्तायाः सीतायाः किमभवदिति रहस्यं प्रकाश्यते ।

# नाट्यनिर्देश-विशेषाः

नाट्यनिर्देशाः सूचनात्मका भवन्ति। तत्र नटस्य कृते किं करणीयं वर्जनीयं वेति प्रस्तूयते। नाट्यनिर्देशाः प्रेक्षणकाणां समक्षं विभावानुभावसंचारिणो यथायोगं पुरस्कृत्य रससम्पत्तिमावर्जयन्ति।

कस्मिन् प्रदेशे ( रङ्गपीठे, रङ्गशीर्षे, नेपथ्ये आकाशेऽन्यत्र वा ) नायकपुरुषा अनायकपुरुषाश्च किं कुर्वन्तु' इति नाट्यनिर्देशेनापि सूच्यते। तद्यथा—

'नेपथ्ये वैतालिकौ पठतः'[1]

अत्र स्थानं निर्दिष्टं नेपथ्य इति।

नाटकेषु, भवन्ति बहुशो नाट्यनिर्देशाः। ते सममेवपाठकानां नटानां नाट्याचार्याणां च कृते प्रयुक्ता भवन्ति। प्रेक्षका नाट्यनिर्देशाभिज्ञा न भवन्ति।

नाट्यनिर्देशष्य बहुविधानि प्रयोजनानि तत्र नाटकेषु प्रगुणीकृतानि वर्तन्ते। तथाहि

१. अभिनय-निर्धारणम्।[2]

२. आहार्याणां विनियोगः।

३. रंगेऽदृष्टानां कार्याणां विज्ञापनम्।

४. रंगे पात्राणां गतिविधिविज्ञापनम्।

५. समुदाचार-प्रदर्शनम्।

६. प्रत्यक्षीभवत्क्रिया निर्देशः।

७. भाषणविधि-निर्देशः—स्वगतम्, प्रकाशम्, जनान्तिकमित्यादि

८. नायकस्य मानसिकस्थितेर्विज्ञापनम्।

९. अकथितमपि स्थितिवशात् संविधानवशाद्वा नायको यच्चेष्टते तत् नाट्यनिर्देशनुसारेण सूत्राधारः शिक्षित्वा रंगे प्रेक्षकेभ्य उपनयति।

---

१. मुद्राराक्षसे ३.१९/२०।

२. अविमारके तृतीयाङ्कस्य प्रारम्भे कुरङ्गी आरोहणं नाटयति। अयं नाट्यनिर्देशः स्पष्टतोऽभिनयनिर्धारणाय वर्तते।

१०. पूर्ववाक्यानुसारि चेष्टा-प्रवर्तनम् ।

एतेषां सोदाहरणं समीक्षा प्रमुखनाटकानि समाश्रित्य बहुलीक्रियते ।

नाट्यनिर्देशस्योपयोगो नाट्याचार्याणां कृते भवतीति स्पष्टमेव । तदनुसृत्य ते नाटकस्याभिनयं नटान् शिक्षयन्ति । नाट्यनिर्दिष्टस्याभिनीतं स्वरूपं पश्यन्ति प्रेक्षकाः । पाठकानां कृते तु सविशेषमुपयोगिनो भवन्ति नाट्यनिर्देशाः । कतिपयस्थलेषु नाट्यनिर्देशाः केवल पाठकानां कृत एवोपयुक्ताः सन्ति, न तु प्रेक्षकाणां कृते तेषां मनागुपयोगस्तत्र स्यात् ।

### अभिनय-नियोगः

अभिज्ञानशाकुन्तलस्य षष्ठाङ्कस्य विष्कम्भके 'कपोतहस्तक कृत्वेति' नाट्यनिर्देशोऽभिनयनियोगात्मकः ।

स्वप्नवासवदत्तस्य प्रथमेऽङ्के—

यौगन्धरायणः —(कर्णं दत्त्वा) कथमिहाप्युत्सार्यते । इत्यत्राङ्गिकाभिनयो निर्दिष्टः श्रवणक्रियायाम्—कर्णं दत्त्वेति नाट्यनिर्देशेन ।[1]

क्वचिदभिनयनियोगेन सह पाठकानां प्रबोधनार्थमपि नाट्यनिर्देशस्योपयोगो वर्तते । तद्यथा स्वप्नवासवदत्ते पञ्चमेऽङ्के—

राजा—(स्वप्नायते) हा वासवदत्ते ।

अत्र नाट्यनिर्देशेन पाठको जानाति यदिदं राज्ञः स्वप्न-वचनम् ।

मुद्राराक्षसे 'कर्णौ पिधायेति' नाट्यनिर्देशः प्रथमाङ्के वर्तते । तृतीयेऽङ्के 'जानुभ्यां भूमौ निपत्येति नाट्यनिर्देशः ।[2] तत्रैव सकोपं मुखं परावर्तयति' इति नाट्यनिर्देशः ।[3]

आहार्याभिनय-नियोगोऽपि क्वचिन्नाट्यनिर्देशेन सूच्यते । तथाहि— अविमारके

ततः प्रविशति चाङ्गेरिकाहस्ता मागधिका, ततः प्रविशति विलासिनी वीजनेन ।

---

१. स्वप्न० १-२/३ । पञ्चमेऽङ्के सहसोत्थाय ६।७ इति वचनेनाभिनयविशेषः प्रकाशितः । तत्रैव 'हस्तौ प्रसारयति' तदेव प्रयोजनं साधयति ।

२. मुद्रा० ३. १७/१८ ।

३. मुद्रा० ३. १९/२० ।

## दृश्यकार्याणां निर्देशः

नाटकेषु बहुविधेषु कार्योपनयनविधिषु दृश्यविधानं सातिशयं महत्त्वं भजते।[1] तदिदं दृश्यसम्पत्तिः केवलं नाट्यनिर्देशेनैव स्फुटीक्रियते नान्यथा। तद्यथा प्रतिमानाटके देव्यौ ससंभ्रममुत्थाय राजानमवलम्बेते। इत्यनेन नाट्यनिर्देशेन राज्ञोऽवलम्बनं देवीभ्यां कृतमिति दृश्यं सूचितम्। तत्रैव

राजा—कथं कथं रथेन केवलेन (इति मूर्च्छितः पतति)
देव्यौ—महाराजः समाश्वसिहि समाश्वसिहि (गात्राणि परामृशतः)
राजा—(किञ्चित् समाश्वस्य)

इत्येतेषु नाट्यनिर्देशा प्रेक्षकाणां दृश्यकार्याणि सूचयन्ति।

अविमारके तृतीयेऽङ्के नायकस्य केवलं दृश्यं कार्यमधोविधेन नाट्यनिर्देशेन प्रकटितम्—

हस्तेन तस्या हस्तं गृहीत्वोत्तिष्ठति। ३.१०।११

पञ्चरात्रेऽपि—

शकुनिः—(गृहीत्वानुवाच्य च) अर्जुनस्य।
( इति क्षिपति। द्रोणस्य पादयोः पतति )

ऊरुभङ्गे 'उभे नियुद्धं कुरुतः' इति नाट्यनिर्देशः।

अभिषेकनाटकस्य प्रथमेऽङ्के बहूनि कार्याणि एकेनैव नाट्यनिर्देशेन प्रकाश्यन्ते। तद्यथा—

वाली—मोहमुपगम्य पुनः समाश्वस्य शरे नामाक्षराणि वाचयित्वा राममुद्दिश्य' इति नाट्यनिर्देशेनाभिनीतानि वालिनो बहूनि कार्याणि प्रेक्षकाः पश्यन्ति।

मृच्छकटिकस्य प्रथमाङ्के नाट्यनिर्देशेन दृश्यं कार्यं विद्यते—

पटान्तेन (दीपं) निर्वाप्य (वसन्तसेना) प्रविष्टा द्वितीयेऽङ्के द्यूतकरो माथुरश्च सवाहकं ताडयत इति 'उभौ बहुविधं ताडयतः' इति नाट्यनिर्देशेन संज्ञापितम्। तदनु त्रिः माथुरः कर्षतीति नाट्यनिर्देशः।

---

१. नात्र श्रव्यदृश्यविधानमस्माकमभिप्रेतम्।

दृश्यकार्याणां नाट्यनिर्देशेन निदर्शनं मृच्छकटिकेऽधोविधं सम्यग्भवति। माथुरः संवाहकमाकृष्य घोणायां मुष्टिप्रहारं ददाति, संवाहकः सशोणितं मूर्च्छां नाट्यन् भूमौ पतति, दर्दुरक उपसृत्यान्तरयति; माथुरो दर्दुरकं ताडयति। दर्दुरको विप्रतीपं ताडयति।

दर्दुरको माथुरस्य पांशुना चक्षुषी पूरयित्वा संवाहकस्यापक्रमितुं संज्ञां ददाति। माथुरोऽक्षिणी निगृह्य भूमौ पतति। संवाहको अपक्रामति।

तत्रैव पंचमेऽङ्के 'वसन्तसेना शृङ्गारभावं नाट्यन्ती चारुदत्तमालिंगति।' चारुदत्तः—'स्पर्शं नाट्यन् प्रत्यालिंग्य' इति नाट्यनिर्देशौ कार्यद्योतकौ।

षष्ठेऽङ्के नाट्यनिर्देशो वर्तते—चन्दनको नाट्येन प्रवहणमारुह्यावलोकयति।

तदनन्तरमपरो नाट्यनिर्देशो वर्तते—चेटस्तथाकरोति। वीरकः प्रवहणमारोढुमिच्छति। चन्दनकः सहसा केशेषु गृहीत्वा पातयति पादेन ताडयति च।

अष्टमेऽङ्के पुनरिमे कार्यदर्शका नाट्यनिर्देशा वर्तन्ते—

(१) वसन्तसेना संज्ञां लब्ध्वा हस्तं दर्शयति।
(२) वसन्तसेना पानीयमाकांक्षति।
(३) वसन्तसेना संज्ञां लब्ध्वोत्तिष्ठति। भिक्षुः पटान्तेन बीजयति।
(४) वसन्तसेना लतां गृहीत्वोत्तिष्ठति।

नवमेऽङ्के नाट्यनिर्देशद्वारेण दृश्यानि कार्याणि सन्ति—विदूषको दण्डकाष्ठमुद्यम्य पूर्वोक्तं पठति। शकारः सक्रोधमुत्थाय ताडयति। विदूषकः प्रतीपं ताडयति। अन्योन्यं ताडयतः, विदूषकस्य कक्षदेशादाभरणानि पतन्ति।

दशमेऽङ्के नाट्यनिर्देशा दृश्यकार्यनिदर्शकाः सन्ति—

(१) चारुदत्तस्तथा तिष्ठति।
(२) प्रहर्तुमीहते। खड्गपतनं हस्तादभिनयन्।
(३) इत्युभौ चारुदत्तं शूले समारोपयितुमिच्छतः।

चारुदत्तश्च–

'आकर्ण्य सहसोत्थाय, स्पर्शसुखमभिनीय निमीलिताक्ष एव सहर्षगद्गदाक्षरणम् ।

वसन्तसेना च----

वध्यमालां चारुदत्तस्य कण्ठादपनीय शकारस्योपरि क्षिपति ।

श्रव्यदृश्यविधाने क्वचिच्छ्रव्यानन्तरं दृश्यं कार्यं नाट्यनिर्देशेन सूच्यते । तथाहि प्रतिमानाटकस्य पञ्चमाङ्के----

रावणः -- -इदं रामस्याश्रमपदद्वारम् । यावदवतरामि । (अवतरति) इति नाट्यनिर्देशेन नायकस्य दृश्यव्यापारः सूचितः प्रेक्षकैर्दृश्यते ।

अपरञ्च प्रतिमानाटके----

लक्ष्मणः ----एह्येहि वत्स । दीर्घायुर्भव । परिष्वजस्व गाढम् । ( आलिङ्गति ) इत्थमालिङ्गतीति दृश्यकार्यं नाट्यनिर्देशेन सूचितम् ।

**नेपथ्यजो विधिः**

स्वप्नवासवदत्तस्य प्रथमेऽङ्के—

ततः प्रविशति परिव्राजकवेशो यौगन्धरायण आवन्तिकावेशधारिणी वासवदत्ता च ।

इत्यनेन निर्देशन यौगन्धरायण-वासवदत्तयोः नेपथ्यजो विधिः प्रकाशितः ।

रूपपरिवर्तन नाट्यनिर्देशेन द्योत्यते । तद्यथा प्रतिमानाटके—

रावणः —(स्वरूपं गृहीत्वा) सीते तिष्ठ, तिष्ठ ।

अत्र रावणस्य राक्षसरूपग्रहणमिति महत्त्वपूर्णं संविधानं नाट्यनिर्देशेन प्रकाशितम् ।

मृच्छकटिके पञ्चमेऽङ्के नायिकाया वसन्तसेनाया अभिसारिका वेशोवर्णितः —

ततः प्रविशत्युज्ज्वलाभिसारिकावेशेन वसन्तसेना, सोत्कण्ठा छत्रधारिणी, विटश्च ।

तदनन्तरं षष्ठेऽङ्के नाट्यनिर्देशानुसारेण—ततः प्रविशत्याच्छादितशरीरा प्रसुप्ता वसन्तसेना ।

तत्रैव नाट्यनिर्देशोऽस्ति—

प्रविशत्यपटीक्षेपेण सम्भ्रान्त एकचरणलग्ननिगडोऽवगुण्ठित आर्यकः परिक्रामति ।

नवमेऽङ्के तत्रैव नाट्यनिर्देशेन शकारस्य वेशो दर्शित :—

ततः प्रविशत्युज्ज्वलवेशधारी शकारः। मुद्राराक्षसे नाट्यनिर्देशानुसारेण—

राक्षसः —नाट्येनात्मानमलंकृत्योत्थाय च ।[1]

अभिज्ञानशाकुन्तले षष्ठाङ्कस्यादौ नाट्यनिर्देशो वर्तते–'ततः प्रविशति पश्चात्तापसदृशवेषो राजा' इत्यनेन राज्ञः सामवसरिकवेषो वर्णितः ।

सप्तमेऽङ्के—ततः प्रविशत्येकवेणीधरा शकुन्तलेति तत्र नेपथ्यात्मको नाट्यनिर्देशोऽस्ति ।

विक्रमोर्वशीयेऽभिसारिकानायिकाया नेपथ्य-वर्णनं नाट्यनिर्देशेन भवति । तद्यथा—

'ततः प्रविशति आकाशयानेनाभिसारिकावेषा[2] उर्वशी चित्रलेखा च' इति ।

## मानसिकस्थितेर्निदर्शनम्

नाट्यनिर्देशेन क्वचित्स्थायिभावाः संचारिभावा अनुभावाश्च संज्ञाप्यन्ते । स्वप्नवासवदत्तस्य तृतीयाङ्कस्यादौ वासवदत्ताया मानसिकस्थितेः सूचनाथोविधनाट्यनिर्देशेन प्रस्ताविता—

ततः प्रविशति विचिन्तयन्ती वासवदत्ता ।

प्रतिमानाटकस्य प्रथमाङ्के लक्ष्मणः —(सक्रोधम्) इत्यनेन नाट्यनिर्देशेन तस्य मानसिकस्थितिर्वर्णिता। एवमेव नाटकेषु सबाष्पम्, सावष्टम्भम्, सरुदितम्, सासूयम्, सामर्षम्, सावज्ञम्, सानुरागम्, सप्रणयम्, सहर्षम्, सशोकम्, ससंभ्रमम् सवितर्कम्, साकूतम्, सवैलक्ष्यम्, सविस्मयम्, सविलक्षस्मितम्, सावेगम्, स्मितं कृत्वा, रुदित्वा, सविषादम्, विमृश्य, साकुलम्, सव्रीडम्, दाक्षिण्यमवलम्ब्य, सस्मितम्, विचिन्त्य, विहस्य, साधिक्षेपम्, सलज्जम्,सनिःश्वासम्, सोद्वेगम्, सनिर्वेदम्,

१. मुद्रा० ५.११/१२ ।

२. मुक्ताभरणभूषितो नीलांशुकपरिग्रहोऽभिसारिकावेषः । ३.९/१०

सचिन्तः, सोत्कण्ठः, सानुनयम्, सकरुणम्, सभयम्, संसाध्वसम्, सकरुण इत्यादयो नाट्यनिर्देशाः सन्ति ।

प्रतिमानाटकस्य पञ्चमेऽङ्के रावणस्य मानसिकस्थितिः— 'मायाप्रकाशनपर्याकुलो भूत्वा' इति नाट्यनिर्देशेन प्रकाशिता ।[1] अविमारकस्य चतुर्थाङ्कस्य प्रवेशके नलिनिकायाः सात्त्विकभावोपपन्नता नाट्यनिर्देशेन प्रकटिताधोविधम्—

ततः प्रविशति सास्रा नलिनिकेति

नलिनिका—अतिक्रान्त उत्सवः । (रोदिति) अत्र सास्रा रोदिति च सात्त्विकभावोपन्नतां प्रकटयतः ।[2]

अङ्केऽस्मिन्नविमारको 'मूर्च्छां नाटयतीति' नाट्यनिर्देशः सात्त्विक-भावं सूचयति नायकस्य ।

मुद्राराक्षसस्यारम्भे नाट्यनिर्देशेन चाणक्यस्य मानसिकस्थितिः सूचिताधोविधम्—

'ततः प्रविशति शिखां परामृशन् कुपितश्चाणक्यः' इति

'इत्यर्धोक्ते लज्जां नाटयित्वा'

तत्रैव स्मितं कृत्वेति तादृशौ नाट्यनिर्देशौ । अभिज्ञानशाकुन्तलस्य प्रथमाङ्के—

शकुन्तला शृङ्गारलज्जां रूपयति, इति नाट्यनिर्देशः ।

द्वितीयाङ्कस्य विष्कम्भकात् पूर्वम्—

'ततः प्रविशति विषण्णो विदूषकः' इति नाट्यनिर्देशेन विदूषकस्य मानसिकस्थितिः सूचिता ।

अभिज्ञाने मालविकाग्निमित्रे च 'ततः प्रविशति कामयानावस्थो राजा' इति नाट्यनिर्देशेन नायकस्य मानसिकस्थितिः द्योतिता ।

अन्यत्र नाटकेऽस्मिन्—निःश्वस्य, मदनबाधां निरूप्य, इत्यादि नाट्यनिर्देशेन मानसिकस्थितिर्विज्ञापिता ।

मालविकाग्निमित्रे पंचमेऽङ्के परिव्राजिका बाष्पं विसृजतीति नाट्य-निर्देशेन सात्त्विकभावो प्रकटीकृतः ।

---

१. अत्र 'मायाप्रकाशन' इति नाटकस्य पाठ्यत्वमपि द्योतयति । पर्याकुल इ[illegible] प्रेक्षका रावणं पश्यन्ति किन्तु मायाप्रकाशनं केवलं पा[illegible] नाटकस्य पठनेन ।

२. मुद्राराक्षसे राक्षसो रोदिति नाट्यनिर्देशे[illegible]

**भावसंवरण-निर्देशः**

नाट्यनिर्देशेन पात्रविषयकं केवलभावानुभावादीनां संज्ञापनं न भवति प्रत्युत भाव-संवरणमपि साध्यते । तद्यथा—

मृच्छकटिकस्य द्वितीयेऽङ्के—

संवाहकः (द्यूतेच्छाविकार-संवरणं बहुविधं कृत्वा)

**प्रत्यक्षीभवत्क्रियानिर्देशः**

स्वप्नवासवदत्तस्य प्रथमाङ्के—

ब्रह्मचारी—(आचम्य) भवतु भवतु । निवृत्तपरिश्रमोऽस्मि इत्यनेन आचमनक्रियासम्पादनं नाट्यनिर्देशेन व्यज्यते ।

तथैव तृतीयेऽङ्के—ततः प्रविशति पुष्पाणि गृहीत्वा चेटीत्यनेन नाट्यनिर्देशेन पूर्वकालिकक्रियानिर्देशः । अतः परं वर्जयित्वा विलोक्येति नाट्यनिर्देशेन तत्रैव पूर्वकालिकक्रिया निर्दिष्टा । षष्ठाङ्के विदूषको वदति—यद्भवानाज्ञापयति । (वीणां गृहीत्वा निष्क्रान्तः) इत्यत्र नाट्यनिर्देशे वीणाग्रहणं पूर्वकालिकक्रियाद्योतकमेव ।

क्वचिन्नाट्यनिर्देशेन सूचितकार्यानुसारि नायकस्य परकार्यं प्रवर्तते । तद्यथा प्रतिमानाटकस्य तृतीयेऽङ्के—

भरतः —(रथवेगं निरूप्य) अहो नु खलु रथवेगः । एते ते
द्रुमा धावन्तीव द्रुतरथगतिक्षीणविषया इत्यादि ।

अत्र 'रथवेगं निरूप्य' इति नाट्यनिर्देशेनः भरतस्य 'द्रुमा धावन्तीव' इत्यादि प्रशंसावचनं प्रसक्तम् ।

स्वप्नवासवदत्तस्य द्वितीयाङ्कास्यादौ—

ततः प्रविशति कन्दुकेन क्रीडन्ती पद्मावती सपरिवारा वासवदत्तया सह इत्यनेन नाट्यनिर्देशेन नायिकायाः पद्मावत्याः कन्दुकक्रीडनं निर्दिष्टम् ।

प्रतिमानाटकस्य तृतीयाङ्कस्य प्रवेशकस्यादौ—

सुधाकारः —(सम्मार्जनादीनिकृत्वा) भवतु, इदानीं कृतमत्र कार्यमार्यसम्भषकस्याज्ञप्तम् । यावन्मूहूर्तं स्वप्स्यामि । (स्वपिति)

इत्यत्र सम्मार्जनं, स्वप्नश्च कार्यद्वयं नाट्निर्देशेन सूचितं प्रत्यक्षीभवति । तत्रैवापरो नाट्यनिर्देशस्तथाविधो वर्तते—

भटः—(चेटमुपगम्य ताडयित्वा) अघो दास्याः पुत्र किमिदानीं कर्म न करोषि। (ताडयति)

अभिज्ञानशाकुन्तलस्य द्वितीयाङ्कस्यान्तिमभागे 'विदूषकं हस्ते गृहीत्वेति नाट्यनिर्देशः पूर्वकालिकक्रियाद्योतकः।

अभिज्ञानशाकुन्तलस्यादौ तद्विधो नाट्यनिर्देशो वर्तते—

ततः प्रविशति मृगानुसारी सशरचापहस्तो राजा रथेन सूतश्च।

अत्र राजा मृगमनुसरन् वर्तत इति महत्त्वपूर्णं दृश्यं नाट्यनिर्देशेनैव साधितम्।

चतुर्थाङ्कस्य विष्कम्भकस्यादौ—

'प्रविशतः कुसुमावचयं नाट्यन्त्यौ सख्यौ' इति

नाट्यनिर्देशेन सख्योः क्रियमाणं कर्म सूच्यते। पञ्चमेऽङ्के ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटीत्यादि वर्तमानं कार्यं चेट्या नाट्यनिर्देशेन सूचितम्। 'ततः परं चूताङ्कुरं क्षिपति' इति तादृशो नाट्यनिर्देशः।

नाट्यनिर्देशेन संकेतिता पूर्वकालिक-क्रिया क्वचिदाङ्गिकगतिमेव द्योतयति। तद्यथाभिज्ञाने शकुन्तला—पूर्वार्धेन शयनादुत्थाय[१]

विक्रमोर्वशीयस्य प्रथमाङ्के नायकयोः परस्परः प्रणयगन्धिव्यवहारपदं प्रत्यक्षीभवति नाट्यनिर्देशेन। तद्यथा—

'उर्वशी रथावतारक्षोभं नाटयन्ती सत्रासं राजानमवलम्बते' इति।

मालविकाग्निमित्रे च

'ततः प्रविशति संगीतरचनायां कृतायामासनस्थो राजा सवयस्यः' इत्यत्र 'संगीतरचनाया कृतायाम्' इति 'ततः प्रविशत्याचार्यः, 'राज्ञो हस्तात् कटकमाकर्षति' इति प्रत्यवेक्ष्यमाणाङ्गसौष्ठवा मालविका' इति उपगानं कृत्वा चतुष्पदवस्तु गायति इति च प्रत्यक्षीभवत्कार्यं सूचयन्ति।

## वाक्यानुसारिकार्यनिर्देशः

किमपि पात्रेणोच्यते। तस्यवाक्यानुसारिकार्यं क्वचित् नाट्यनिर्देशेनोपनीयते। तद्यथा स्वप्नवासवदत्ते षष्ठेऽङ्के।

---

१. अभिज्ञान० ३.७/८

धात्री—प्रेक्षताम्, प्रेक्षताम् भर्तृदारिका ।

( चित्रफलकं दर्शयति )

इत्यनेन नाट्यनिर्देशेनान्वर्थककार्यं प्रकाशितम् । प्रतिमानाटके-प्रथमाङ्केऽवदातिका सीतायै वल्कलं ददाति । अलङ्करोतु भट्टिनीति कथयति । तदनु

सीता—आनय तावत् । (गृहीत्वालङ्कृत्य) इति नाट्यनिर्देशो वाक्यानुसारिकार्यं द्योतयति ।

तत्रैव चेटी—नास्ति वाचा प्रयोजनम् । इमानि प्रहर्षितानि तनूरुहाणि मन्त्रयन्ते । (पुलकं दर्शयति) इति नाट्यनिर्देशो वाक्यानुसारी प्रवर्तते ।

तत्रैव सीता—आभरणान्यवमुच्य ददातीति नाट्यनिर्देशस्तथैव । क्वचित् 'तथा करोतीति' नाट्यनिर्देशेन वाक्यानुसारिकार्यं विधीयते ।[1]

प्रतिमानाटके भरतः सूतं कथयति—

स्फुरति हृदयं वाहय रथम् । ३.१

तदनु सूतः—यदाज्ञापयत्यायुष्मान् । (रथं वाहयति)

अत्र रथवाहनं तथाविधं वाक्यानुसारिकार्यम् ।

पुनश्च प्रतिमानाटकस्य चतुर्थाङ्के—

भरतः—आर्य, न खलु न्याय्यम् । क्रमेण शुश्रूषयिष्ये । अहमेवयास्यामि । (कलशं गृहीत्वा, निष्क्रम्य, प्रविश्य) इत्यनेन नाट्यनिर्देशेन वाक्यार्थानुसारिकार्यं सम्पाद्यते ।

अविमारके चतुर्थेऽङ्के—

अविमारकः—तस्मिन् ( अग्नौ ) प्राणाहुतिं करिष्यामि—( अग्नि प्रविश्य सकुतूहलम् ) इत्यत्र नाट्यनिर्देशेन पूर्ववाक्यानुसारिकार्यं विधीयते ।

मुद्राराक्षसेऽपि—

चाणक्यः—वत्स मसीभाजनं पत्रं चोपनय ।

१. प्रतिमाना० १.४/५

शिष्यः —( तथा करोति ) इति नाट्यनिर्देश· पूर्वोक्तवाक्यानुसारि कार्यसम्पादनं प्रकटयति ।

पुरुषः —आसीनोऽयम् । यावदार्यचाणक्यादेशं सम्पादयामि ।

( राक्षसमपश्यन्निव तस्याग्रतो रज्जुपाशेन कण्ठमुद्बध्नाति )

अभिज्ञानशाकुन्तले—

शकु०—शिथिलय तावदेतत् ।

अन०—तथा ( शिथिलयति )

इत्यत्र नाट्यनिर्देश आज्ञानुसारि कार्यं द्योनयति ।

तत्रैव प्रथमाङ्के कलशमावर्जयति ।

अभिज्ञाने विलसति सर्वोत्तममुदाहरणं एतद्विधस्य नाट्यनिर्देशस्य । तथाहि—

अपरिक्षतकोमलस्य यावत् कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते सदयं सुन्दरि गृह्यते रसोऽस्य ॥३.२१

(मुखमस्याः समुन्नमयितुमिच्छति । शकुन्तला नाट्येन परिहरति ।) इति नाट्यनिर्देशः ।

अभिज्ञानशाकुन्तलस्य षष्ठेऽङ्के

राजा—धनुस्तावत्

यवनी—भर्तः एतद् हस्तावापसहितं शरासनम् । तदनु नाट्यनिर्देशो वर्तते—राजा सशरं धनुरादत्ते ।

सप्तमेऽङ्के च—'अधरं दर्शयति' इति हस्तं प्रसारयति क्रीडनकमादत्ते। इति च वाक्यानुसारिनाट्यनिर्देशस्योदाहरणानि ।

तादृशो नाट्यनिर्देशो मालविकाग्निमित्रे 'दंशं दर्शयति' इति नाट्य-निर्देशो 'नन्वेते द्वे दंशनपदे' इति वाक्यमनुसरति ।

## नाट्यनिर्देशानुसारिकार्यस्योक्तिः

नाट्यनिर्देशेन सूचितं कार्यं क्वचित् तद्व्याख्यायिवाक्येनानुस्त्रियते । तद्यथा—

राक्षसः —( खड्गमाकृष्य ) नन्वनेन व्यवसायसुहृदा निस्त्रिंशेन ।

अत्र खड्गाकर्षणं नाट्यनिर्देशेन सूचितम्। तदेव परतो व्याख्यातम्।

विक्रमोर्वशीय एतद्विधो नाट्यनिर्देशो वर्तते प्रथमाङ्के। तथाहि 'उर्वशी साभिलाषं पश्यति' इति नाट्यनिर्देशस्य व्याख्याधोविधा दृश्यते–

चित्रलेखा—सखि किं प्रेक्षसे

उर्वशी—ननु समदुःखगतः पीयते लोचनाभ्याम्।

## कारण-वचनम्

नाट्यनिर्देशेन कारण-वचनं सूच्यते। तत्समाश्रित्य परतः प्रकाशं ब्रूयते। तद्यथा—

राजा—(दोहदलक्षणं विभाव्य) भवतु, अनिर्वर्णनीयं परकलत्रम्।[१]

अत्र दोहदलक्षणं विभाव्येति 'अनिर्वर्णनीयं परकलत्रम्' इति वाक्यस्य कारण-वचनम्।

विक्रमोर्वशीये पुत्रस्य पितरं प्रति समुदाचारोऽधोविधं वर्णितो नाट्यनिर्देशेन—

कुमारश्चापगर्भमञ्जलि बद्ध्वा प्रणमतीति,[२] कुमारो राजानमुपगम्य पादग्रहणं करोतीति च।[३]

नारदागमने 'सर्वं उत्तिष्ठन्ति' इति तत्रैव नाट्यनिर्देशः।[४]

## पात्रसज्जा

अभिषेकस्य चतुर्थेऽङ्के 'सम्पुटिकाहस्तौ शुकसारणौ च' इति नाट्यनिर्देशेन तयोः पात्रयोः सज्जा निर्दिष्टा।

मृच्छकटिकस्य नवमेऽङ्के—

'ततः प्रविशति गृहीताभरणो विदूषकः' इति नाट्यनिर्देशेन पात्रसज्जा निर्दिष्टा

मुद्राराक्षसे चरः प्रथमाङ्के प्रविशति। तदधिकृत्य—ततः प्रविशति यमपटेन चरः इति पात्रसज्जाद्योतकम्। अन्यत्रापि

ततः प्रविशत्यध्वगवेषः पुरुषः[५]

---

१. अभिज्ञाने ५.१३/१४ २. वि० ५.९/१०
३. वि० ५.११/१२ ४. वि० ५.१९/२०
५. मुद्राराक्षसे चतुर्थाङ्कस्य प्रवेशके

ततः प्रविशति लेखमलङ्करणस्थगिकामुद्रिकामादाय सिद्धार्थकः।[1]

ततः प्रविशति पुरुषेणानुगम्यमानः संयतः सिद्धार्थकः।[2]

ततः प्रविशति रज्जुहस्तः पुरुषः।[3]

ततः प्रविशति यथानिर्दिष्टः सशस्त्रो राक्षसः।[4]

ततः प्रविशति द्वितीयचाण्डालानुगतो वध्यवेशधारी शूलं स्कन्धेनादाय कुटुम्बिन्या पुत्रेण चानुगम्यमानश्चन्दनदासः।[5]

ततः प्रविशति जवनिकावृतशरीरो मुखमात्रदृश्यश्चाणक्यः।[6]

विक्रमोर्वशीये नाट्यनिर्देशो वर्तते—

ततः प्रविशति औपहारिकहस्तपरिजना देवी चेटी चेति।[7]

अत्र परिजनानां सज्जाभिहिता।

यवनी—चापहस्ता प्रविश्येति नाट्यनिर्देशो वर्तते विक्रमोर्वशीये।[8]

तत्रैव 'चापहस्तेन कुमारेण तापस्या च सह प्रविष्टः कञ्चुकीति नाट्य. निर्देश स्तादृगेव।

मालविकाग्निमित्रे 'ततः प्रविशति शयनस्था देवी' इत्यादि नाट्य-निर्देशः सज्जात्मकः।

नागानन्दे बृहत्तरो नाट्यनिर्देश ईदृशो वर्तते। तथा हि—ततः प्रविशति मत्तो विचित्रविह्वलवेशश्चषकहस्तो विटः स्कन्धारोपित-सुराभाण्डश्चेटः।[9] 'स्वशिरःशेखरात् पुष्पाणि गृहीत्वा चषके विन्यस्य जानुभ्यां स्थित्वा नवमालिकाया उपनयति।[10]

## यवनिकाविधानम्

क्वचिन्नाटकेषु कार्यसापेक्षं भवति यवनिकाविधानम्। तद्यथा प्रतिमानाटकस्य द्वितीयाङ्कस्यान्तिमे भागे—

१. मुद्रा० पञ्चमाङ्कस्य प्रवेशकस्यारम्भे

२-६. मुद्रा० ५.८/९; ६.३/४; ६. ४/५; ६.२/३; ७.५/६।

७. वि० ३. ११/१२

८. वि२ ५.३/४

९. नागा० तृतीयाङ्कस्यादौ।

१०. नागा० ३.३/४

काञ्चुकीयो यवनिकास्तरणं करोति' इति नाट्यनिर्देशो वर्तते।
ऊरुभङ्गेऽपि 'यवनिकास्तरणं करोतीति नाटयनिर्देशो वर्तते।

### समुदाचारवाक्यनिर्देशः

आसनादुत्थाय, सबहुमानम्, पादयोः पतति, प्रणमति, परिष्वजते' पादयोर्निपत्य, पुत्रं परिष्वज्य, मूर्ध्न्याघ्राय, (आशीर्वादकाले) बाहू उद्यम्य, (आशीर्वादग्रहणकाले) सप्रणामम्, सादरम्, फलान्युपहरतः[१], सप्रणामं परिगृह्य[२], अभ्युत्थातुमिच्छति[३], प्रियंवदामाश्लिष्य[४] पितुः पादयोरपनम्य[५], भूयः पितरमाश्लिष्य[६], परस्परं हस्तौ स्पृशतः[७], हस्ते गृहीत्वैनामुपवेशयति[८], प्राञ्जलिः प्रणम्य[९] इत्यादीनि समुदाचारनिर्देशात्मकानि वाक्यानि सन्ति।

### कृतस्य कार्यस्य विज्ञापनम्

नाटकेषु नाट्यनिर्देशमात्रेण महत्त्वपूर्णस्यापि कृतस्य कार्यस्य विज्ञापनं भवति। तद्यथा—प्रतिमानाटकस्य सप्तमेऽङ्के—

ततः प्रविशति कृताभिषेको रामः सपरिवारः।[१०] इति नाट्यनिर्देशेनाभिषेक इति विशिष्टकार्यसम्पत्तिः पाठकानां कृते सूचिता।

### कालदर्शनम्

स्वप्नवासवदत्तस्य प्रथमेऽङ्के—

ब्रह्मचारी—(ऊर्ध्वमवलोक्य) स्थितो मध्याह्नः। इत्यत्रोर्ध्वमवलोक्येतिपदाभ्यां मध्याकाशगतसूर्यदर्शनेन मध्याह्नो व्यज्यते ब्रह्मचारिणा। अभिज्ञानशाकुन्तले तु सूर्यमवलोक्येति नाट्यनिर्देशः कालनिर्देशनार्थं प्रयुक्तः।[११]

१-६. अभिज्ञाने २.१६/१७ ३.१४/१५; ४.४/५; ४.१९/२०; ४.२०/२१

७-९. विक्रमोर्वशीये १.१५।१६; २.१६/१७; ३.६/७

१०. अत्र पाठकास्तु पठनेन ज्ञास्यन्ति यद्रामोऽभिषिक्तो वर्तते। प्रेक्षकाः पुना रामस्याभिषेकसज्जां दृष्ट्वैव रामाभिषेकं प्रत्येष्यन्ति।

११. इमामुग्रामातपवेलां' इत्यादि मध्याह्नसूचक तृतीयाङ्कस्यादौ। विक्रमोर्वशीये 'सूर्यमवलोक्य' इति नाट्यनिर्देशेन कालसूचनं भवति। तृतीयाङ्कस्य विष्कम्भके। तत्रैव चन्द्रमसमवलोक्येति नाट्यनिर्देशेन कालसूचनम्।३.७/८

### नेपथ्यविहितकार्याणां सूचना

प्रतिज्ञायौगन्धरायणस्य चतुर्थेऽङ्के 'नेपथ्ये हाहाकारः क्रियते' इत्यनेनादृष्टसमूहस्य कार्यं निर्दिष्टम् ।

### पात्रविशेषसूचना

प्रतिज्ञायौगन्धरायणस्य चतुर्थेऽङ्के 'ततः प्रविशति यौगन्धरायणो बद्धबाहुः फलकशयनेनानीयमानः' इति नाट्यनिर्देशेन नायकस्य दशा-विशेषाः सूचिताः । प्रतिमानाटकस्य प्रथमाङ्के लक्ष्मणः —

ततः प्रविशति धनुर्बाणपाणिलक्ष्मणः इत्यनेन लक्ष्मणस्य शस्त्रग्रहण-विशेषो वर्णितः ।

### पात्राणामन्योऽन्यसान्निध्यगमनम्

स्वप्नवासवदत्तस्य प्रथमेऽङ्के—

यौगन्धरायणः —(उपसृत्य) 'भोः किं कृतेयमुत्सारणा' इत्यत्रोप-सृत्यपदेन कंचुकिसमीपगमनं निर्दिष्टम् ।[१] तथैव उपगम्य, उपश्लिष्य आदि पदानि प्रयुज्यन्ते ।

### निष्क्रमण-सूचना

प्रायः सर्वेषु नाटकेषु 'निष्क्रान्ताः' इत्यनेन नाट्यनिर्देशेन पात्राणां रङ्गपीठान्निर्गमनं सूच्यते ।

### प्रवेशसूचना

स्वप्नवासवदत्तस्य प्रथमेऽङ्के—

ततः प्रविशति परिव्राजकवेशो यौगन्धरायण आवन्तिकावेषधारिणी वासवदत्ता च ।[२] इत्यनेन यौगन्धरायण-वासवदत्तयोः प्रवेशः सूच्यते ।

कथं पात्रं रङ्गं प्रविशतीत्यन्यत्र निर्दिष्टम्—प्रविश्यापटीक्षेपेण सम्भ्रान्तः (संवाहकः) मृच्छ० २.०।१

१. स्वप्नवासवदत्तस्य प्रथमाङ्के उपगम्य ।१.१०/११

२. स्वप्न० १.२/३ प्रथमेऽङ्के ततः प्रविशति काञ्चुकीयः । ततः प्रविशति पद्मावती सपरिवारा चेटी च । १.९/८ ततः प्रविशत्युपविष्टा तापसी । १.७/८ ।

### पात्राणां गतिविधिः स्थितिश्च नाट्यनिर्देशेन

परिक्रम्य अवलोक्य, निष्क्रान्तः, प्रविश्य, प्रविशति उपगम्य, उपेत्य उपसृत्य, निष्क्रम्य, उपविशति आकर्ण्य, प्रस्थितः, सर्वतो विलोक्य, ऊर्ध्वमवलोक्य, सहसोत्थाय, किञ्चिद् गत्वावलोक्य, प्रविश्यावलोक्य। इत्यादीनि पदानि पात्राणां गतिविधि सूचयन्ति।

कुत्रावस्थानं पात्रस्येति निर्धारणं दृश्यते क्वचिन्नाट्यनिर्देशे। तथा हि मालविकाग्निमित्रस्यादौ प्रथमाङ्कस्य।

'ततः प्रविशत्येकान्तस्थितपरिजनो मन्त्रिणा लेखहस्तेनान्वास्यमानो राजेति। परिजनो यथाव्यापार राजानमभितः स्थितः। तत्रैव गणदासहर-दासयोः स्थितिविषये निर्दिष्टम्—

उभौ परिजनोपनीतयोरासनयोरुपविष्टौ।[१]

### पुरोगमनावलोकनयोर्निर्देशः

स्वप्नवासवदत्तस्य द्वितीयेऽङ्के—

चेटी—( परिक्रम्यावलोक्य ) अम्मो इयं भर्तृदारिका इत्यनेन पुरोगमनावलोकनयोर्निर्देशः स्पष्टीकृतो नाट्यनिर्देशेन।

### वक्तव्येऽकथनीये सति नाट्यनिर्देशावसरः

मृक्छकटिकेऽधिकरणिकश्चारुदत्तं पृच्छति—आर्य गणिका तव मित्रम्। ततः परं नाट्यनिर्देशोऽवसरति—

'चारुदत्तो लज्जां नाटयति' इति।

यतो हि नाम चारुदत्तः किमपि वक्तुं नापारयत्।

### श्रव्यविषयादनवधानार्थं नाट्यनिर्देशः

उत्तररामचरिते चित्रदर्शनप्रकरणे लक्ष्मणः कथयति ( सीतां प्रति ) एष मन्थरावृत्तान्तः इति। तदा नाट्यनिर्देशो। वर्तते—

रामः —सत्वरमन्यतो दर्शयन्निति।

### मौने सति नाट्यनिर्देशावसरः

मृच्छकटिकस्य दशमेऽङ्के शकारश्चारुदत्तं कथयति अरे चारुदत्त

---

१ माल० १.११/१३।

वटुक, न प्रत्ययत एष पौरजनः। तदात्मीयया जिह्वया भण—मया वसन्तसेना मारितेति। अत्र नाटयनिर्देशो वर्तते—'चारुदत्तस्तूष्णीमास्ते' इति।

विक्रमोर्वशीये च—राजा तूष्णीमास्ते।[1]

## भाषा-परिवर्तनम्

यदि नाम कश्चित् प्राकृतभाषी नायकः कार्यवशात् संस्कृतं वदति, तदा तस्य भाषा-परिवर्तनं नाटयनिर्देशेन सूच्यते। तथा हि--सम्कृत-माश्रित्येति नाटयनिर्देशो मुद्राराक्षसस्य द्वितीयाङ्कस्यारम्भे भवति, यदा प्राकृतिभाषयाकाशभाषितं कृत्वाहितुण्डिकः स्वगतं संस्कृतेन वदति।

## निमित्त-सूचना

परवर्तिकार्यसूचकस्य निमित्तस्य नाटयनिर्देशो भवति। तथा हि मुद्राराक्षसे--

राक्षसः—वामाक्षिस्पदनं सूचयित्वात्मगतमिति।[2] अभिज्ञान-शाकुन्तले वा—

राजा—इदमाश्रमद्वारम्। यावत् प्रविशामि। ( प्रविश्य, निमित्तं सूचयन् )

अत्र 'निमित्तं सूचयन्' इति नाटयनिर्देशेन प्रभवति श्लोकः—

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य। १.१६

## अनुभाव-निदर्शनम्

नाटयनिर्देशेनानुभावस्य निदर्शनं कार्यते। तद्यथा मुद्राराक्षसे--

राक्षसः--शस्त्रमाकृष्य ससंभ्रममिति नाटयनिर्देशेन।[3]

चाणक्यः—सकोपम्। भूमौ पादं प्रहृत्य।[4]

---

१. वि० २.९/१०

२. मुद्रा० २.१०/११

३. मुद्रा २.१२/१३।

४. मुद्रा २.२८/ ९।

## कार्यस्थल-निर्देशनम्

नाट्यनिर्देशेन 'नेपथ्ये' किं भवतीति सूच्यते । तद्यथा वेणीसंहारे--

( नेपथ्ये ) आः दुरात्मन् द्रौपदीकेशाम्बरकर्षणमहापातकिन्.......
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः । ३.४७

## भाषण-विधिनिर्देशः

आत्मगतम् ( स्वगतम् ), प्रकाशः, जनान्तिकम्, अपवारितकम्, आकाशे, नेपथ्ये, कर्णे इत्यादीनि भाषण-प्रकारं निर्वचन्ति । मुद्राराक्षसे प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वेति नाट्यनिर्देशेन भाषणविधिनिर्देश उपस्थापितः ।[1]

## पुनरुक्तिनिर्देशः

कस्यचित् पात्रस्यावश्यकतानुसारेण यदि नाम पूर्वोक्तस्य वचनस्य पुनरुक्तिरपेक्षिता स्यात्, तर्हि 'पुनस्तदेव पठतीति' नाट्यनिर्देशेनैवं संकेत्यते ।[2] 'बहुशस्तदेव पठित्वा' इति नाट्यनिर्देशेन तस्य पुनः पुनः पाठो निर्दिश्यते ।

## भाषण आक्षेपसूचना

प्रतिमानाटकस्य द्वितीयेऽङ्के —

कौसल्या—महाराज, वत्स लक्ष्मण-( इत्यर्धोक्ते ) इति नाट्यनिर्देशेन कौसल्यावचसि आक्षेपः सूचितः ।

अभिज्ञानशाकुन्तलस्य प्रथमाङ्के

अनसूया—ततो वसन्तोदार-रमणीये समये तस्या उन्मादयितृ रूपं प्रेक्ष्य-( इत्यर्धोक्ते लज्जया विरमति ) इति नाट्यनिर्देशेन भाषण आक्षेपः सूच्यते । सप्तमेऽङ्के —

शकुन्तला—जयत्वार्यपुत्रो ज
'अर्धोक्ते वाष्पकण्ठी विरमति' इति निर्देशः ।

---

१. मुद्रा १.१३/१४ । प्रथमाङ्कस्यान्तेऽपीदृशो नाट्यनिर्देशो वर्तते १.२५/२६ मुद्रा ५.६।७ ।

२. स्वप्ने ५.६/७ । मृच्छकटिके प्रायोऽयं नाट्यनिर्देशः प्रयुक्तश्चारुदत्त-विषये ।

### सम्बोध्यजनस्य निर्देशः

स्वप्नवासवदत्तस्य प्रथमाङ्के—

यौगन्धरायणः—( कांचुकीयमवलोक्य ) गच्छामस्तावदित्यत्र काञ्चुकीयमवलोक्यपदाभ्यां सम्बोध्यो निर्दिष्टो नाट्यनिर्देशविधिना ।

यदि नाम देवता आमन्त्रणीयाः सन्ति तर्हि नाट्यनिर्देशो भवति—'आकाशमवलोकयन्' ।[१]

### स्थितिवशात् वर्त्तमानस्य कार्यस्याभिनयः

दूतघटोत्कचे भटवाक्यं श्रुत्वा धृतराष्ट्रो विषीदति—हन्त जयद्रथो हतः ।

'तच्छ्रुत्वा दुःशला रोदिति' इति नाट्यनिर्देशेन रोदनं दर्शितम् ।

### रहस्य निवेदनम्

क्वचिदाङ्गिकसङ्केतेन किमपि रहस्यमुद्घाटयते । तन्नाट्यनिर्देशेन विव्रियते । तद्यथाभिज्ञानशाकुन्तलस्य प्रथमाङ्के—

'शकुन्तला सखीमङ्गुल्या तर्जयति' इति नाट्यनिर्देशः ।

### परिकर्म-निवेदनम्

नाट्यनिर्देशेन क्वचित् परिकर्म निवेद्यते । तद्यथाभिज्ञानशाकुन्तले—

'ततः प्रविशति कुशानादाय यजमानशिष्यः' इति नाट्यनिर्देशे कुशादानं तु परिकर्म ।

### अनुगतिककार्यनिवेदनम्

अनुगतिकं कार्यं क्वचिन्नाट्यनिर्देशेन सूच्यते । अभिज्ञाने मदनलेखमधिकृत्य शकुन्तला सख्यौ कथयति—शृणुतं तावत् संगतार्थं नवेति । उभे वदतः—अवहिते स्वः । तदनुगतिकं कार्यं मदनलेखवाचनं 'वाचयति' इति नाट्यनिर्देशेन सूचितम् ।

### कार्यात्पूर्वमुद्यमः

इच्छामात्रद्योतको व्यवसायो नाट्यनिर्देशेन सूच्यते । तद्यथा—अभिज्ञानस्य पञ्चमेऽङ्के—

१. मुद्राराक्षसे २.५/६ ।

विदूषकः—'तिष्ठ तावत् । अनेन दण्डकाष्ठेन कन्दर्पबाणं नाशयिष्यामि ।'
अतःपरं नाट्यनिर्देशोऽस्ति—
दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति इति ।

**सङ्केत-निर्देशनम्**

क्वचित्पात्रं संकेतेन किंचिद् ग्राहयति अपरं पात्रमिति नाट्यनिर्देशेन संज्ञाप्यते। तद्यथा मालविकाग्निमित्रे राजा देवीं परिव्राजिकायै दर्शयति।[१]

**नाट्यनिर्देशशैली**

नाट्यनिर्देशः संक्षेपेण विरच्यते । तद्यथा—मुद्राराक्षसे प्रथमाङ्के—
'मुद्रामवलोक्य गृहीत्वा राक्षसस्य नाम वाचयति' इति ।
चाणक्यः —शस्त्रमुत्सृज्योत्थाय चाकाशे लक्ष्यं बद्ध्वा[२] इति
विक्रमोर्वशीये नाट्यनिर्देशस्य संक्षिप्तिः परिलक्ष्यते द्वितीयेऽङ्के। तथा हि–
उर्वशी नाट्येन ससम्भ्रममभिलिख्यान्तरा क्षिपति ।
नागानन्दे 'उत्थाय चन्दनपल्लवं गृहीत्वा, निष्पीड्य हृदये ददाति'[३] इति नाट्निर्देशः कतिपयकार्याणां सपदि निदर्शनं कारयति ।

**उपसंहारः**

संस्कृत-नाटकेषु नाट्निर्देशा रङ्गसज्जा-विधानं कल्पयितुं नैव समाश्रिताः । साधारणतो मुख्यकथाधारया प्रसक्ता एव औपचारिकान् नाट्यार्थान् अभिनयविषयान् वा बहुविधान् प्रकाशयितुमेव नाट्यनिर्देशाः प्रयुक्ताः सन्ति । इमे नाट्यनिर्देशा बहुविधानि प्रयोजनानि साधयन्ति । यद्यपि ते रङ्गे भाषण-सम्भाषणभ्यां न प्रकटन्ति, किन्तुताननुसृत्य चतुर्विधाभिनय-सम्पत्तिर्भूयिष्ठं विलसतीति सम्प्रधार्यं तेषामनुशीलनं महितं सताम् । केवलं दृश्यमेव वस्तु तु नाट्यनिर्देशेनैव पात्रेभ्यः सूच्यते । तदनुसृत्य पात्राणां रमणीयतमोऽभिनयः सम्भवति ।[४] यत्कार्यं पात्राणां वाण्या न प्रकाश्यते तद्रङ्गनिर्देशविशेषैः प्रशिक्षितानि पात्राणि नाट्यन्ति ।

---

१. माल० १.१७/१८          २. मुद्रा० ३.३०/३१

२. नागानन्दे द्वितीयाङ्कस्यादौ ।

४. शकुन्तला—न माननीयेष्वात्मानमपराधयिष्ये । (उत्थाय गन्तुमिच्छति) इति राजा बलादेनां निवर्तयतीति च नाट्यनिर्देश उत्कृष्टमुदाहरणं प्रस्तुतस्तद्विषस्य दृश्यस्य ।

# नाटके मिथ्याचारस्य महिमा

बहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्
पराव्यूहस्थानान्यपि तनुतराणि स्थगयति।
जनं विद्वानेकः सकलमतिसन्धाय कपटै-
स्तटस्थः स्वानर्थान् घटयति च मौनं च भजते। भवभूतिः

मिथ्याचारस्तु लौकिकव्यवहारेषु सातिशयं महत्त्वं भजते। अत एव साहित्ये तस्य प्रतिष्ठा स्वाभाविकी वर्तते। न केवलं कार्यार्थमपितु विशुद्ध-मनोरञ्जनार्थमपि वैदिककालत एव मिथ्याचारः कविभिः सस्पृहं पुरस्क्रियमाणो लक्ष्यते। नाट्यसाहित्ये विचित्रतरं संविधानं प्रेक्षकेभ्यस्तत्स्थं मनोरञ्जनं च प्रस्तुवन् मिथ्याचारो नित्यं नवं नवं रूपं विदधाति।

न खलु मिथ्याचारोऽधमानां वा दुर्वृत्तानामेवासाधुकार्येषु प्रयुज्यतेऽपितु सद्वृत्तानामपि देवानां राज्ञामृषीणां च साधिष्ठ-प्रयोजनेष्वपि भूयिष्ठं विलसतीति दर्शनीयमत्र। मिथ्याचारं विना तु नाट्यं न सम्यक् प्रवर्तत इति विचित्रं किन्तु सत्यमेव[1]। नानारूपधरो मिथ्याचारः संवरण-मृषाभाषणार्धसत्यभाषणान्यथाकरण-भावनिगूहन-परिहासवचन-श्लिष्टपदावली-छायात्मककृतक-प्रयोगेन्द्रजालादिभिर्नाट्यशरीर आद्यन्तं व्याप्नोति। नाट्यशास्त्र आरभटीवृत्तिर्बहुकपटवञ्चनोपेता दम्भानृतवचनवती, रौद्रभयानकयो रसयोः समाविष्टा मिथ्ययाचारं सङ्केतयति। वस्तुतो मिथ्याचारः सर्वासु वृत्तिषु **अन्यतममथ** च विशिष्टं स्थानं भजते।

मिथ्याचारेण प्रायो वञ्चना विधीयते, किन्तु क्वचन मिथ्याचारोऽभ्युदयावहो भवति। अनेन बहुविधानि प्रयोजनानि साध्यन्ते संविधान-क्षेत्रे। भासो नाटके मिथ्याचारस्य प्रथमः प्रवर्तकः। अनिच्छन्नपि कश्चिज्जनो मिथ्याचारो भवत्येवेति निदर्शने भासः पटिष्ठः।

---

१. अन्यच्च—नाट्येऽरामो रामो भवतीत्यतोऽधिकः क्व मिथ्याचारः।

## भासनाटकेषु

स्वप्नवासवदत्ते मन्त्रिणां कापटिकयोजनया मिथ्याचारः प्रारम्यते। लावाणकदाहे वासवदत्ता दग्धा, यौगन्धरायणो दग्धश्च। यौगन्धरायण-स्तदनु तपस्वी ब्राह्मण इति निगूढः, वासवदत्ता च तस्य भगिनी आवन्तिकेति प्रच्छन्ना बभूव[1]।

प्रच्छन्ना वासवदत्ता नाटकेऽस्मिन् बहुशो मिथ्याचारस्य प्रभवः। यथा हि—

प्रथमेऽङ्के—

(क) यौगन्धरायणः—प्रोषितभर्तृका[2]मिमामिच्छामि अत्र भवत्या-किञ्चित्कालं परिपाल्यमानाम्।

द्वितीयेऽङ्के—

(ख) चेटी—भर्तृदारिके, यदि स राजा विरूपो भवेत्।
वासवदत्ता—नहि नहि दर्शनीय एव।
पद्मावती—आर्ये कथं त्वं जानासि।
वासवदत्ता—हला एवमुज्जयिनीयो[3] जनो मन्त्रयते।

तृतीयेऽङ्के—

(ग) चेटी—शक्यं भणितुं शरचापहीनः कामदेवः।
वासवदत्ता—भवत्वेतावत्।
चेटी—किं निमित्तं वारयसि।
वासवदत्ता—अयुक्तं परपुरुषसंकीर्तनं[4] श्रोतुम्।
(घ) वासवदत्ता—इदं तावदौषधं किं नाम
चेटी—सपत्नीमर्दनम्।
वासवदत्ता—इदं न गुम्फितव्यम्।

---

१. योरपेऽपि प्रच्छन्नपात्राणां महिमाभूयानासीत्। तद्यथा
A large element of the charm of romantic comedy lies in its improbability and unreality— indisguised heroes and heroines. Shakespeare saw this so clearly.
Millet : the Art of the Drama, p.97

२–४. एतानि मिथ्यावचनानि।

चेटी—कस्मात्

वासवदत्ता—उपरता तस्य भार्या ।

चतुर्थेऽङ्के

(ङ) पद्मावती—एकः खलु मे सन्देहः ।

वासवदत्ता—किं किम् ।

पद्मावती—यथा ममार्यपुत्रस्तथैवार्याया वासवदत्ताया इति ।

वासवदत्ता—अतोऽप्यधिकम् ।

पद्मावती—कथं त्वं जानासि ।

वासवदत्ता—यद्यल्पः स्नेहः, सा स्वजनं न परित्यजति ।[1]

(च) विदूषकः —भवति, वातनीतेन काशकुसुमरेणुनाक्षिनिपतितेन साश्रुपातं खलु तत्र भवतो मुखम् । तद् गृह्णातु भवतीदं मुखोदकम् ।

राजा—पद्मावति

शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि ।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥

पञ्चमेऽङ्के—

(छ) विदूषकः —चिरात् खलूपरता वासवदत्ता ।

षष्ठेऽङ्के—

राजा—पद्मावती ।

कन्या मयाप्यपहृता न च रक्षिता सा ।[2]

यौगन्धरायणः —न खलु न खलु प्रवेष्टव्यम् । मम भगिनी खल्वेषा ।

भारतानां कुले जातो विनीतो ज्ञानवाञ्छुचिः ।
तन्नार्हसि बलाद् हर्तुं राजधर्मस्य देशिकः ॥६.१६

प्रतिज्ञायौगन्धरायणे तु बलवत्तरो मिथ्याचारो भूयिष्ठं विलसति । तत्र प्रथमाङ्के मिथ्या वर्तते मल्लिकासालप्रच्छादितशरीरस्य नखदन्तवर्जमेकनीलस्य हस्तिनः कथातस्य मृगया च ।

---

१. इदमर्धसत्यम्

२. अज्ञानादिदं मिथ्या । एतादृशमेव—

दृढमपहृता कन्या भूयो मया न च रक्षिता ॥६.८
कथं सा न मया शक्या स्मर्तुं देहान्तरेष्वपि । ६.११

यौगन्धरायणस्तु पुरुषान्तरितो भवति ।[1] द्वितीयेऽङ्के तदनु प्रच्छादितशरीरो भगवान् द्वैपायनः प्राप्तः ।[2] तृतीयेऽङ्के प्रच्छन्नानां यौगन्धरायणविदूषक-रुमण्वदादीनां वार्ता तु प्रायशः मिथ्यैव । चतुर्थेऽङ्के प्रच्छन्नरूपा राजसेवका उज्जयिन्यां मिथ्याचरन्तो वत्सराजं रक्षन्ति यौगन्धरायणनियोगेन ।

नाटकीया वञ्चना यौगन्धरायणेन सम्यग्वर्णिता । तद्यथा—

यौगन्धरायणः—किं छलेनेति । तत् पुनरिदानीं युक्तम्

या सा मल्लिकसालवृक्षरचिता नागाश्रिता वञ्चना
बद्धः सेवितवान् हि नो नरपतिर्बाहूपधानां क्षितिम् ।
राज्ञो वारणनिग्रहे परिचयाद् वीणाश्रिता वञ्चना
पूर्वं प्रस्तुतमेव यामि भवता नैवापराधो मम ॥ ४.१६

प्रतिमानाटकस्य षष्ठेऽङ्के कैकेय्या मिथ्याचारः कविकल्पनासु शिखरायते । न तु स्वार्थवशादपितु रामस्य प्राणरक्षार्थमेव सा तस्य वनवासेनात्मनो वैधव्यमङ्गीकुरुत इति उदात्ताभिप्रायदर्शी मिथ्याचारः । तद्यथा—

कैकेयी—जात, एतन्निमित्तमपराधे मां निक्षिप्य पुत्रको रामो वनं प्रेषितः, न खलु राज्यलोभेन। अपरिहरणीयो महर्षिशापः पुत्रविप्रवासं विना न भवति ।

अस्मिन्नेव नाटके मिथ्याचारो भृशं प्रवर्तते पञ्चमेऽङ्के । तत्र रावणः परिव्राजकवेषः कथयति—

नियतमनियतात्मा रूपमेतद् गृहीत्वा
खरवधकृतवैरं राघवं वञ्चयित्वा ।
स्वरपदपरिहीणां हव्यधारामिवाहं
जनकसुतां तां हर्तुकामः प्रयामि ॥५.७

स मायाप्रकाशनपर्याकुलो वदति—( स्वगतम् ) यावदहमपि ब्राह्मणसमुदाचारमनुष्ठास्यामि—( प्रकाशम् ) भोः काश्यपगोत्रोऽस्मि । साङ्गो-

---

१. यौगन्धरायणः—पुरुषान्तरितं मां द्रक्ष्यति स्वामी ।

२. उन्मत्तसदृशो वेशो धारितस्तेन साधुना ।
मोचयिष्यति राजानं मां च प्रच्छादयिष्यति ॥१.१७

पाङ्गं वेदमधीये, मानवीयं धर्मशास्त्रं, माहेश्वरं योगशास्त्रम्' इत्यादि। स मिथ्यैव रामं शिक्षयति–हिमवति काञ्चनपार्श्वा नाम मृगाः। तैस्तर्पिताः सुतफलं पितरो लभन्ते।[1] स मायया मारीचं काञ्चनपार्श्वमृगीकृत्य रामस्य समक्षं प्रस्तौति। तदर्थं रामे बहिर्गते रावणो मनसि कुरुते—

माययापहृते रामे सीतामेकां तपोवनात्।
हरामि रुदतीं बालाममन्त्रोक्तामिवाहुतिम् ॥५.१५

अभिषेके तु रामस्यापि मिथ्याचारः कविना न निगूहितो यतो हि नाम तस्याभिनिवेशेन यस्य कस्यापि मिथ्याचारो भवेत्तु मनोहारि भवति। वालिर्वर्णयति—

महता सौम्यरूपेण यशसो भाजनेन च।
छलेन मां प्रहरता प्ररूढमयशः कृतम् ॥११८

भो राघव चीरवल्कलधारिणा वेषविपर्यस्तचित्तेन मम भ्रात्रा सह युद्धव्यग्रस्याधर्म्यः खलु प्रच्छन्नो वधः।

रामो व्यर्थमेव स्वमिथ्याचारं समर्थयति—

वध्यत्वाच्च मृगत्वाच्च भवाञ्छन्नेन दण्डितः ॥१.१९

लङ्कायां तु मिथ्याचारस्य प्रागल्भ्यं संवर्तते। अत एव सीता हनुमन्तं दृष्ट्वा विचारयति—को नु खल्वयं पापराक्षस आर्यपुत्रसम्बन्धीत्यात्मानं व्यपदिश्य वानररूपेण मां वञ्चयितुकामो भवेत्। तत्र रावणो वदति—

अपास्य मायया रामं त्वया राक्षसपुंगव।
भिक्षुवेषं समास्थायच्छलेनापहृता हि सा ॥३.१८

शुकसारणौ राक्षसौ वानररूपधारिणौ रामसमीपमानीतौ। तौ कथयतः —

आवां खलु राक्षसराजस्य विप्रतिपत्त्या विपद्यमानं राक्षसकुलं दृष्ट्वा-स्पदमलभमानौ आर्यसंश्रयार्थं वानररूपेण सम्प्राप्तौ। वस्तुतो यथा विभीषणः कथयति—

एतौ हि राक्षसेन्द्रस्य सम्मतौ मन्त्रिणौ नृप।
प्राणान्तिकेऽपि व्यसने लंकेशं नैव मुञ्चतः ॥४.२०

अपरं च भ्रातृद्वयस्य कृत्रिमशिरसी राक्षसो दर्शयति सीताम्—

सीत पश्य पश्य तयोर्मानुषयोः शिरसी।

---

१. प्रतिमा० ५.१०

बालचरितस्य प्रथमाङ्कान्ते वसुदेवो नन्दस्य पुत्री गृहीत्वा देवक्या हस्ते निक्षिप्य कंसं वञ्चयति ।[1] कंसोऽपि दैवं वञ्चयितुं संकल्पते ।[2] तदनु कृष्णं हन्तुं बहुविधा मायाचाराः प्रवर्तिताः । तथा हि—

पूतना राक्षसी नन्दगोपीरूपं धारयित्वा विषस्तनं पायितवती, शकटोदानवः शकटवेषं धारायित्वा, सम्मर्दयितुमागतः, यमलार्जुनौ दानवौ वृक्षरूपौ हन्तुमागतौ, प्रलम्बदानवो नन्दगोपवेषं धृत्वा संकर्षणं हन्तुमियेष, धेनुको गर्दभवेषं धृत्वा ताडयितुमागतः, केशी दानवोऽश्वरूपं धृत्वागतः, मुखे कूर्परेण हतः[3] ।

बालचरितस्य पञ्चमेऽङ्के कंसः स्वकीयं मिथ्याचारं वर्णयति—

श्रुत्वा व्रजे विपुलविक्रमवीर्यसत्त्वं
दामोदरं सह बलेन समाचरन्तम्
आदिश्य कार्मुकमहं तमिहोपनीय
मल्लेन रङ्गगतमद्य तु घातयामि ॥५.१

पञ्चरात्रे शकुनेर्मिथ्याचारः प्रभवति ।[4] स दुर्योधनं पृच्छति—

अनृतवचनान्मोचयितव्यो भवान् ननु । तस्यच्छलं परामृश्य द्रोणाचार्यस्तं शंसति—

ये कर्तुकामैश्छलनं भवद्भिः संवत्सरैर्द्वादशभिर्न दृष्टाः ।
ते पञ्चरात्रेण मयोपनेया वरं ह्यदत्तं विशदाक्षरेण ॥ १.४८

---

१. वसुदेवः —इमां गृहीत्वा देवक्या हस्ते निक्षिप्य दुरात्मानं कंसं वञ्चयामि मयापि नामानृतं वक्तव्यं भविष्यति ।

अथवा कुमारक्षार्थमनृतमपि सत्यं पश्यामि । किमिदानी करिष्ये । भवतु दृष्टम् । (प्रकाशम्)

दारिका प्रसूता तया ॥२.१३/१४

२. कंसः —

दारिका वा कुमारो वा हन्तव्यः सर्वथा मया ।
दैवं पुरुषकारेण वञ्चयिष्याम्यहं ध्रुवम् ॥ २.१४

३. तृतीयेऽङ्के

४. पाण्डवानां विराटेश्वरसमाश्रये प्रच्छन्नवासस्तु मूलतो मिथ्याचार एव न वञ्चनामयोऽपितु कल्याणोदर्क एव ।

तस्मिन् प्रकरणे भीष्मोऽवदत्—

आचार्यस्य यदाहर्षो धैर्यमुत्क्रम्य सूचितः।
शङ्के दुर्योधनेनैष वञ्च्यमानेन वञ्चितः॥ १.५४

कौरवाणां गोग्रहणं परामृश्य भटो विराटेश्वरमुपनयति—

एता हि दस्युकर्मप्रच्छन्नविक्रमैर्धार्तराष्ट्रैर्ह्रियन्ते गाव इति।

पञ्चरात्रे कस्यचिद् नायकस्य भावस्यान्यथाख्यानमिति विरलविरलो मिथ्याचारः प्रवर्तितः। तद्यथा—

भीमसेनः —अर्जुन

बृहन्नला—अथ किम्, अथ किम्। अर्जुनपुत्रोऽयम्।

अत्र भीमोऽनवधानात् प्रच्छन्नवासनियमविरुद्धं स्वभ्रातरं नाम्ना सम्बोधयति। तस्य त्रुटिं निराकरोति बृहन्नला 'अर्जुनपुत्रोऽयम् इति अप्रासङ्गिकीं भीमस्यानभिप्रेतां पदावलिं संयोज्य।

आत्मनिगूहनार्थं बृहन्नलाया मिथ्याभाषणं सर्वोत्कृष्टं विलसति। स्वयमेव विराटेश्वरस्य गावो रक्षित्वा कौरवांश्च ध्वंसयित्वापि स उत्तरं निरुत्तरयितुमधोविधं मिथ्या भाषते—

अयं बाल्यात्तु सम्भ्रान्तो न वेत्ति प्रहरन्नपि।
कृत्स्नं कर्म स्वयं कृत्वा परस्येत्यवगच्छति॥ २.६२

एतन्मे परिहार्याणां व्यावर्तनकृतं किणम्।
सन्निरोधविवर्णत्वाद् गोधास्थानमिहागतम्॥२.६४

## कुन्दमालायाम्

कुन्दमालायां सीताया द्वितीयं वनवास-प्रस्थानं मिथ्याचारेण भवति। रामः स्पष्टमेव तत्स्वीकरोत्यधोवचनेन—

लक्ष्मणः —समादिष्टोऽहमार्येण—त्वमनेन गङ्गागमनव्याजेन—कस्मिंश्चिद् वनोद्देशे सीतां परित्यज्य निवर्तस्व। तदहमपि स्वजनविस्रम्भनिर्विशङ्कां देवीमुपादाय गृहहरिणीमिव वध्यभूमिं वनमुपनयामि।

तिलोत्तमया अकृतोऽपि मिथ्याचारः कविना वर्णितोऽधोविधम्—प्रभावनिर्मितेन सीतारूपेण तिलोत्तमया रामस्य दर्शनपथमवतीर्य रामः सीताया उपरि सानुकम्प नवेति ज्ञातुं नु इच्छामि।[1]

---

1. चतुर्थाङ्कस्य विष्कम्भके।

## मृच्छकटिके

मृच्छकटिके तु परिहासप्रिया नटी मिथ्याचारप्रपन्ना पत्या तर्ज्यते। तद्यथा प्रस्तावनायाम्—

सूत्रधारः —किमस्माकं गेहे सर्वमस्ति। अथवा परिहससि।

नटी—( स्वगतम् ) परिहसिष्यामि तावत्। ( प्रकाशम् ) आर्य, अस्त्यापणे।

सूत्रधारः —आः अनार्ये, एवं तवाशा छेत्स्यति। अभावं च गमिष्यसि। इत्यादि।

अस्मिन् प्रकरणे मूर्तिमान् मिथ्याचारः शकारो विटस्य मिथ्याचारेण वञ्च्यते यदा स रदनिकां वसन्तसेनीकृत्य शकारहस्ते निग्राहयति।

द्वितीयेऽङ्के पलायमानो द्यूतकरो विप्रतीपाभ्यां पादाभ्यां देवकुलं प्रविशति।

अत्र मिथ्याचारस्य शिक्षकोऽपि लक्षितः। विदूषकश्चारुदत्तं शिक्षयति—

अहं खल्वपलपिस्यामि—केन दत्तम्। केन गृहीतम्। को वा साक्षी।

उदात्ताभिप्रायेण मिथ्याचार इति निदर्शितं चारुदत्तवध्वा पूर्वोक्तावसरे स्वकीयरत्नावली-प्रदानेन। न खलु शौण्डीर्योत्तमश्चारुदत्तो वसन्तसेनाया आभरणभाण्डस्य निष्क्रयार्थं स्वपत्न्या रत्नावलीं ग्रहीष्यति। तत्साधयितुं सा कापटिकसंरचनां विधत्ते विदूषकस्य मध्यमतया तस्मै सा रत्नावल्या दानं करोति च। तद्यथा—

वधूः —हञ्जे किं भणसि—अपरिक्षतशरीरो आर्यपुत्र इति। वरमिदानीं स शरीरेणापरिक्षतो न पुनश्चारित्र्येण। साम्प्रतमुज्जयिन्या जनो मन्त्रयिष्यते—'दरिद्रतया आर्यचारुदत्तेनैवेदृशमकार्यमनुष्ठितम्' इति। ( ऊर्ध्वमवलोक्य, निःश्वस्य च ) भगवन् कृतान्त, पुष्करपत्र-पतितजल-बिन्दुचञ्चलैः क्रीडसि दरिद्रपुरुषभागधेयैः। इयं च मे एका मातृगृहलब्धा रत्नावली तिष्ठति। एतामपि अतिशौण्डीर्यतयार्यपुत्रो न ग्रहीष्यति। हञ्जे आर्यमैत्रेयं तावच्छब्दय। आर्यमैत्रेये समागते तेन सह तस्या अधोविधः संवादो भवति।

वधूः —आर्य पुरस्तान्मुखो भव। प्रतीच्छेमाम्।

विदूषकः—किं न्विदम् ।

वधूः—अहं खलु रत्नषष्ठीमुपोषितासम् । तत्र यथाविभवानुसारेण ब्राह्मणः प्रतिग्राहयितव्यः । स च न प्रतिग्राहितः । तत्तस्य कृते प्रतीच्छेमां रत्नमालिकाम् ।

विदूषकः—( गृहीत्वा ) स्वस्ति गमिष्यामि ।

उदारचरितानामपि परिस्थितिवशान्मिथ्याचारपद्धतिः स्वीकरणीया भवतीति सम्यग्दर्शितं मृच्छकटिके अन्यत्रापि । नायकश्चारुदत्तो महानुभावानां महत्तमस्तत्र कथयति विदूषकम्—

मैत्रेय, गच्छ रत्नावलीमादाय वसन्तसेनायाः सकाशम् । वक्तव्या च सा मद्वचनात्—

यत्खल्वस्माभिः सुवर्णभाण्डमात्मीयमिति कृत्वा विस्रम्भाद् द्यूते हारितम् । तस्य कृते गृह्यतामियं रत्नावली' इति ।

नाटकेऽस्मिन् मिथ्याचारस्य भूयसी वृत्तिः शोभते । तत्र मिथ्याचारस्य ततिः प्रवर्तते मदनिकाया बुद्धिवैभवेन । तद्यथा—

( १ ) सा शर्विलकं शिक्षयति—

तस्यैव ( चारुदत्तस्य ) सम्बन्धी भूत्वेममलंकारकमार्याया उपनय ।

मदनिका वसन्तसेनां कथयति—आर्ये एष खलु चारुदत्तस्य सकाशाद् ब्राह्मण आगतः ।

( २ ) शर्विलक ( वसन्तसेनां प्रति )- सार्थवाहस्त्वां विज्ञापयति—जर्जरत्वाद् गृहस्य दूरक्ष्यमिदं भाण्डम् । तद् गृह्यताम् ।

तदनु वसन्तसेनायाः प्रतिसन्देशो वर्तते—

( ३ ) प्रतीच्छत्वार्यो मदनिकाम् । अहमार्यचारुदत्तेन भणिता—य इममलंकारक समर्पयिष्यति तस्मै त्वया मदनिका दातव्या । तत्स एवैतां ददातीत्येवमार्येणावगन्तव्यम् ।

स्वगतेन मिथ्याचारः प्रायशो प्रवर्त्यते । अत्र वक्तुः पक्षमवधार्य किञ्चिदुच्यते प्रकाशम्, किन्तु स्वान्तर्भावना प्रकाशविरुद्धा स्वगतेन प्रेक्षकाणां कृते विधास्यते । तद्यथा—

चारुदत्तः—( प्रकाशम् )

यस्यार्थस्तस्य सा कान्ता धनहार्यो ह्यसौ जनः ।

( स्वगतम् )

न गुणहार्यो ह्ययसौ जनः ।

( प्रकाशम् )

वयमर्थैः परित्यक्ता ननु त्यक्तैव सा मया ॥ ५.९

षष्ठेऽङ्के गोपालदारक आर्यको वसन्तसेना-विनिमयेन प्रवहण अपवारितो नीयते। चन्दनकस्तस्य शरणदो भवति। राजनियोगमनवधार्य स प्रवहणादवतीर्य वीरकं कथयति—दृष्ट आर्यः— न, आर्या वसन्तसेना। तदेषा भवति—युक्तं नेदम्, सदृशं नेदम्, यदहमार्यचारुदत्तमभिसर्तुं गच्छन्ती राजमार्गे परिभूता।

स्वभावतो वीरके संशयिते स मिथ्या वदति—वयं दाक्षिणात्या अव्यक्तभाषिणः —दृष्टो दृष्टा वा आर्यः आर्यका वा।

विषमे समुपस्थिते चन्दकः कर्णाटकलहप्रयोगं करोति। अयं प्रयोगस्तुमिथ्याचारेण साध्यते।

अन्तेऽपि चन्दनकस्य मिथ्याचारः प्रस्फुटति तस्याधोवचनेन—

गच्छ रे प्रवहणवाहक, गच्छ। यदि कोऽपि पृच्छति तदा भण—चन्दनकवीरकाभ्यामवलोकितं प्रवहणं व्रजति। आर्ये वसन्तसेने, इदं चाभिज्ञानं ते ददामि ( इति खड्गं प्रयच्छति। )

मिथ्याचारेण कापटिकयोजनेन च यद्वैषम्यमापतति तदेव दुर्भाग्यविलसितेन भ्रान्त्या वसन्तसेनाया भवति, यत्सा शकारस्य प्रवहणमध्यासिता। इदं दुर्दैवस्य कृतो मिथ्याचारः।

सदुपयोगदिशा मिथ्याचारस्य निर्दशनमत्र वर्तते विटस्य वसन्तसेनारक्षणे[1]। स मिथ्यैव वदति—सत्यं राक्षस्येवात्र प्रतिवसति। यदि पुनरुद्यानपरम्परया पद्भ्यामेव नगरीमुज्जयिनीं प्रविशावः, तदा को दोषः स्यात्।

विटश्चेटश्च वसन्तसेनाया हन्तारौ इति शकारः पुनः पुनर्मिथ्यारोपणं करोति।[2]

शकारस्याधिकरणे व्यवहार-वर्तनं भृशं मिथ्यैव। स स्वकर्तव्यनिष्ठां कथयति—

चारुदत्तविनाशाय करोमि कपटं नवम्। ८.३५

---

१. विट.—( वसन्तसेनाम् ) न भेतव्यम् न भेतव्यम्। भवतु, एनं ( शकारं वञ्चयामि ) ८.१७/१८

२. शकारः —(विटं प्रति) वसन्तसेनां मारयित्वा कुत्र पलायसे। ८.४३/४४

नवमेऽङ्के मिथ्याचाराः प्रवर्धन्ते। तत्र शकारस्य व्यवहार एव मिथ्या। सत्यंधरस्य चारुदत्तस्य रक्षणार्थं मिथ्या वदति वसन्तसेनाया माता—

वृद्धा—( अवलोक्य ) सदृशमेतत्। न पुनस्तत् (अलंकारभाण्डकम्)। चारुदत्तोऽपि 'त्वयैवोक्तमिति' मिथ्या कथयन् दोषभाक् सिद्ध :।

मिथ्यैवाधिकरणिकस्य राज्ञश्च दण्डाज्ञा—अपराधी चारुदत्तः शूल आरोप्यतामिति। तद्यथा चारुदत्तो विनिर्णयति—

अथ रिपुवचनाद्वा ब्राह्मण मां निहंसि।
पतसि नरकमध्ये पुत्रपौत्रैः समेतः॥ ९.४३

मिथ्याचारस्य निदर्शनं दशमेऽङ्के शकारस्य चेटायोत्कोच-दानेन भवति। शकारोऽपवारितकेन चेटाय कटकं प्रयच्छति कथयति च—'एतद् गृहीत्वान्यथा भण। स चारुदत्तस्य निर्दोषतापक्षे चेटेन यत्कथितं तद् दूषितवान्। स कथयति—अलीकं भट्टारकाः। अहो एष चेटः सुवर्णचोरिकया मया गृहीतस्ताडितो मारितो बद्धश्च। तत्कृतवैर एव यद् भणति किं सत्यम्। चेटो यदा कथयति—पश्यत पश्यत भट्टारका, अहो सुवर्णेन मां प्रलोभयति।' तदा कटकमाच्छिद्य स कथयति—एतत्सुवर्णकं, यस्य कारणन्मया बद्धः। हंहो चाण्डालाः मया खल्वेष सुवर्णभाण्डारे नियुक्तः सुवर्णं चोरयन् मारितस्ताडितः। तद्यदि न प्रत्ययध्वं तदा पृष्ठं तावत्-पश्यत।

## मुद्राराक्षसे

मुद्राराक्षसे चाणक्यस्य कुटलनीतिलता मिथ्याचाररूपा प्रारम्भत एव भृशायते। चाणक्यः स्वयमेवैकपदे राक्षसग्रहणाय स्वकृतं कपटप्रबन्धं प्रकटयति। तद्यथा—

( १ ) वृषलपर्वतकयोरन्यतरविनाशेनापि चाणक्यास्यापकृतं भवतीति विषकन्यया राक्षसेनास्माकमत्यन्तोपकारि मित्रं घातितस्तपस्वी पर्वतक इति सञ्चारितो जगति जनापवादः।

( २ लोकप्रत्ययार्थमस्यैवार्थस्याभिव्यक्तये पिता ते चाणक्येन घातित इति रहसि त्रासयित्वा भागुरायणेनापवाहितः पर्वतकपुत्रो मलयकेतुः।

( ३ ) शक्यः खल्वेष (मलयकेतुः) राक्षसमतिपरिगृहीतोऽपि व्युत्तिष्ठमानः प्रज्ञया निग्रहीतुम् ।

( ४ ) प्रयुक्ता नानाव्यञ्जनाः प्रणिधयः ।

( ५ ) क्षपणकलिंगधारीन्दुशर्मा (चाणक्यस्य मित्रम्) सर्वैर्नन्दामात्यैः सह सख्यं ग्राहितो विशेषतश्च तस्मिन् राक्षसः समुत्पन्नविस्रम्भः । तेनेदानीं महत्प्रयोजनमनुष्ठेयं भविष्यति ।

अयं चाणक्यः सिद्धार्थकमधोविधं मिथ्याचारे नियोजयति—

प्रथमं तावद् वध्यस्थानं गत्वा घातकाः सरोषदक्षिणाक्षिसङ्कोचसज्ञां ग्राहयितव्याः । ततस्तेषु गृहीतसंज्ञेषु भयापपदेशादितस्ततः प्रद्रुतेषु शकटदासो वध्यस्थानादपनीय राक्षसं प्रापयितव्यः । तस्माच्च सुहृत्प्राण—परितुष्टात् पारितोषिकं ग्राह्यम् । राक्षस एव किञ्चित् कालं सेवितव्यः । ततः प्रत्यासन्नेसु परेषु प्रयोजनमिदमनुष्ठेयम् । ( कर्णे एवमेवम् )

अत्र यत्कर्णेऽभिहितं तदेव मिथ्याचारस्य मूलम् ।

मिथ्याचारेण चाणक्यः स्वजनेन जीवसिद्धिना राक्षसमित्रं शकटदासं वध्यस्थानाद् रक्षित्वा तेन सह राक्षसपार्श्वं सांगुलिमुद्रं लेखमर्पयित्वा गमयति ।

चन्दनदासश्चाणक्यस्य मिथ्याचारं सम्यग् बोधति व्याख्याति च तस्य वचनम्—

उपक्षिप्तमनेन जनेन दुष्टेन किमपि ।

चन्दनदास आत्मनो मिथ्याचाररूपं वाक्छलं स्वीकरोति कथयति च—एतावदेवास्ति मे वाक्छलम् । चाणक्यस्तमच्छलं विधातुं साधयति ।

अन्ते चाणक्यस्य मिथ्याचारस्तस्य स्वगतप्रकाशवचनयोर्वैषम्येण प्रतीयते । तद्यथा—

चाणक्यः ( स्वगतम् )—साधु चन्दनदास साधु ।

सुलभेष्वर्थलाभेषु परसंवेदने जनः :
क इदं दुष्करं कुर्यादिदानीं शिबिना विना ॥

प्रकाशम् स तर्जयति चन्दनदासमधोविधम्—

दुरात्मन् दुष्टवणिक्, अनुभूयतां तर्हि नरपतिक्रोधम् । वृषल एवास्य प्राणहरं दण्डमाज्ञापयिष्यति ।

तथैव प्रथमाङ्कान्ते भागुरायणादीनामपि अपक्रमणं श्रुत्वा तस्य प्रकाश-स्वगतवचनयोः प्रतीपत्वं मिथ्याचारमेव चाणक्यस्य द्योतयति।

मुद्राराक्षसे मिथ्याचारस्य मिथ्याचारेण प्रतीकार इति विरलैव नाट्य-सम्पद् विलसति।[1] अत्र राक्षसेन नियुक्तश्चाणक्येनानादिष्ट एव दारुवर्मा कनकतोरणन्यासादिभिः संस्कृतवान् प्रथमराजभवनद्वारम् (तस्य पातनेन चन्द्रगुप्तादीनां मारणमुद्दिश्य)। तदनु परितुष्टेनेव चाणक्येन सुचिरं दारुवर्मणो दाक्ष्यं प्रशस्याभिहितम्—अचिरादस्य दाक्ष्यस्यानुरूपं फलमधिगमिष्यसि।[2] तथैव राक्षसनियोजितोऽभयदत्तो वैद्यश्चन्द्रगुप्तमारणार्थे विषप्रयोगे स्वयमेव चाणक्ययोजनया मारितः।[3] अपरं च राक्षसनियुक्तश्चन्द्रगुप्तस्य शयनाधि-कृतः प्रमोदकश्चाणक्येन विचित्रवधेन व्यापादितः।

चाणक्यस्य छलछद्मात्मकान् मिथ्याचारान् राक्षसोऽपि प्रबोद्धुमसमर्थ आसीत्। तेषां वागुरायां गृहीत एव स सर्वैः परित्यक्तश्चाणक्यशरणं ययौ। चाणक्येन प्रवर्तिता मिथ्याचारिणः स्वद्वैतभावेन राक्षसस्या-त्मीया इव भूत्वा तस्य विनाशाय नित्यमेव स्वय कापटिकवृत्तिभिश्चाण-क्यार्थं साधितवन्तः। पदे पदे मिथ्याचार एवानुरञ्जयति प्रेक्षकान्। अद्भुतरसस्य परमा सृष्टिरत्र मिथ्याव्यवहारैर्निष्पद्यते।

## कालिदासीयनाटकेषु

अभिज्ञानशाकुन्तले नायकेन द्वितीयेऽङ्के शकुन्तलाप्रणयवार्ता विदूषकं प्रति मिथ्या क्रियते—परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः। दुष्यन्तो राजर्षिरासीदाश्रमस्य त्राता। किं राजर्षिरपि स महर्षेः कण्वस्य तपोभूमिं कामक्रीडाप्रसङ्गेन निगूढमेव ग्रामीकरोति। अयं प्रच्छन्नाचारो मिथ्याचर्या कोटिं विगाहते यतो हि नाम राजर्षिता क्वावतिष्ठत एता-

---

१. तद्यथा राक्षसेन वर्णितम्—

कन्या तस्य वधाय या विषमयी गूढं प्रयुक्ता मया
दैवात् पर्वतकस्तया स निहतो यस्तस्य राज्यार्धहृत्।
ये शस्त्रेषु रसेषु च प्रणिहितास्तैरेव ते घातिता
मौर्यस्यैव फलन्ति पश्य विविधश्रेयांसि मन्नीतयः॥ २.१६

२. दारुवर्मा (चाणक्यादेशेन) वैरोचकपुरस्सरेण पदातिलोकेनैव लोष्ट-घातं हतः।

३. अभयदत्त औषधिस्थाने चन्द्रगुप्ताय विषं दातुकामो मारितः।

दृशानां निगूढचरितानाम् । किं न शकुन्तलया साधु भणितम्—पौरव रक्ष विनयम् मदनसन्तप्तापि न खल्वात्मनः प्रभवामि । तदा कामुको दुष्यन्तो धर्मीकरोति—

भीरु, अलं गुरुजनभयेन । दृष्ट्वा ते विदितधर्मा तत्रभवान्न तत्र दोषं ग्रहीष्यति कुलपतिः । अपि च—

गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥३.२०

अत एव साधु प्रोक्तं शार्ङ्गरवेण शकुन्तलां प्रति—किं पुरोभागे स्वातन्त्र्यमवलम्बसे ।

पुनश्च दुर्वासश्शापस्य सन्निवेशेन कालिदासो शापभ्रान्तस्य दुष्यन्तस्य मिथ्याचाराभासमपि वैशद्येन निरूपयति पञ्चमाङ्के । अत्र मिथ्याभियोगः परस्परं कविकौशलेन भूयिष्ठं विजयते ।

षष्ठेऽङ्के मातलेर्मिथ्याचारः प्रवर्तते । स विदूषकेण व्याजयुद्धं करोति । राजा तं पृच्छति —अथ माढव्यं प्रति भवता किमेवं प्रयुक्तम् ?

मातलिः --तदपि कथ्यते । किंचिन्निमित्तादपि मनःसन्तापाद् आयुष्मान् मया विक्लवो दृष्टः ।

प्रकरणेऽस्मिन् मिथ्याचारस्योपयोगिता प्रमाणिता । सन्निमित्तमुद्दिश्यायं मिथ्याचारः ।

अन्यानि सन्ति मिथ्याचारस्य प्रकरणानि नाटकेऽस्मिन्

(१) शकुन्तलायाः प्रथमाङ्के वचनम्—अभिनवकुशसूचिपरिक्षतौ मे चरणौ, कुरबकशाखा-परिलग्नं च मे वल्कलम् । तत्प्रतिपालयतं मां यावदेतत् मोचयामि । नाट्यनिर्देशो वर्तते—शकुन्तला राजानमवलोकयन्ती सव्याजं विलम्ब्येत्यादि । नायकस्य कंचित्कालमधिकं दर्शनं लब्धुं विक्रमोर्वशीयेऽपि तादृशः प्रकल्पः स्वीकृतः ।

(२) द्वितीयेऽङ्के विदूषकोऽङ्गभङ्गविकल इव भूत्वा स्थास्यति कथयति च राजानं—न मे हस्तपादं प्रसरति । संक्षोभितसन्धिबन्धानां मम गात्राणामनीशोऽस्मि संवृत्तः ।[1]

---

१. यदा राजाकथयत्—अनतिक्रमणीयं मे सुहृद्वाक्यम् विदूषको गन्तुमिच्छति ।

(३) द्वितीयेऽङ्के राज्ञोऽभिप्राय आसीत् ममापि काश्यपसुतामनुस्मृत्य मृगयां प्रति निरुत्सुकं चेतः। किन्तु सोऽभिप्रायमिमं न प्रकटयति। स कथयति—मन्दोत्साहः कृतोऽस्मि माधव्येन।

(४) सेनापतेर्मिथ्याचारस्तु तस्याधोवचनेन द्वितीयाङ्के प्रकटति—

( जनान्तिकम् ) सखे स्थिरप्रतिबन्धो भव। अहं तावत्स्वामिनश्चित्त-वृत्तिमनुवर्तिष्ये। ( प्रकाशम् ) प्रलपत्वेष वैधेयः।

(५) तृतीयेऽङ्केऽधोव्याजेन सख्यौ दूरं गते—

प्रियंवदा – ( सदृष्टिक्षेपम् ) अनसूये, एहि यथैष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति। एहि संयोजयाव एनम्।

( उभे प्रस्थिते। )

अस्यैवाङ्कस्य विष्कम्भकेण यजमानशिष्यः प्रियंवदाया मिथ्याव्याहारेणान्यथा बोध्यते। तद्यथा—

प्रियंवदे, कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि नीयन्ते ? ( आकर्ण्य )

किं ब्रवीषि ? आतपघलंनाद् बलवदसुस्था शकुन्तला, तस्याः शरीरनिर्वापणार्येति। मिथ्यावचनेनानेन सन्ध्याकाले गौतमीहस्तेन वैतानिकं शान्त्युदकं प्रेष्यते।

गौतमी—अनेन दर्भोकेन निराबाधमेव ते शरीरं भविष्यति। ( शकुन्तलामभ्युक्ष्य )

अभिज्ञानस्य पञ्चमाङ्कस्याभिनये यद्यपि प्रेक्षका जानन्ति यन्नायं राजा दुष्यन्तो मिथ्याचारी वा सदोषो वा यतो हि नाम स शापप्रभावेण शकुन्तलां विस्मृतवानस्ति, तथापि शकुन्तला–गौतमी—शार्ङ्गरव—शारद्वतादयः शकुन्तलाप्रत्याख्यानेन तस्य मिथ्याचारं प्रत्यक्षीकुर्वन्त्येव। दुष्यन्तश्च शकुन्तलामधिक्षिपति मिथ्याभियोगेन—

व्यपदेशमाविलयितुं समीहसे जनमिमं च पातयितुम्।<br>
कूलंकषेव सिन्धुः प्रसन्नमम्भः तटतरुं च ॥५.२१

नाटकाभिनये मिथ्याचार–प्रयोगस्योद्देश्यं सम्यगेव परिपूर्यतेऽनेन संविधानेन रसनिष्पत्तिसापेक्षत्वेन। अत्रैव कालिदासस्य मिथ्याचाराभिनेवेशकला शिखरायते। अन्यत्र विरलमेव मिथ्याचारेण प्रतारितानां जनानां तादृशं ज्ञानं साम्प्रतिकं भवति यद् वयं मिथ्याचाराभिभूताः स्मः।

मालविकाग्निमित्रे सारभूत एव मिथ्याचार आद्यन्तं विलसति काव्य-कौतुकं च नितरां प्रतनोति। राजकुमारीभूता मालविका चेटी संजाता तया सह प्रच्छन्नप्रणयानुबन्ध एव मिथ्याचारोऽग्निमित्रस्य राज्ञः। तत्र न केवलं परिजना अपितु परिव्राजिका कौशिकी[1], विदूषकः, गणदासश्च प्रच्छन्नरूपेण राज्ञो मालविकया प्रणयमुत्सेचयितुं निर्बाधं वर्धयितुं च व्यापृता एव सर्वे मिथ्याचारा सन्ति। गणदासहरदत्तयोः कलहस्तु कृतक एवास्ति। तदधिकृत्य देव्या धारिण्या परिवाज्रिका तर्जितैवाधोविधम्— मूढे परिव्राजिके मां जाग्रतीमपि सुप्तामिव करोषि। किन्तु धारिणी विदूषकेण प्रवर्तितं मालविकाग्निमित्रयोः प्रणयचक्रं न पश्यति यदा राजप्रणयानुरोधेन स दोलातः परिभ्रंशेन तस्याः चरणौ सरुजौ करोति।

वाचनिकमिथ्याचारस्योदोहारणमधोविधं मालविकाग्निमित्रे वर्तते—

विदूषकः —( वकुलावलिकां प्रति ) भवति, युक्तं नामात्र भवति प्रियवस्योऽयमशोको ननु वामपादेन ताडयितुम्। गृहीतार्थया त्वयात्र-भवतीदृशमविनयं कुर्वन्ती कस्मान्न निवारिता।

अहो माहात्म्यं मिथ्याचारस्य मालविकाग्निमित्रे। मालविकां कारातो बहिष्कर्तुं विदूषक आत्मनः सर्पदंशस्य मिथ्यावार्तां प्रचारयति।[2] अस्मिन् प्रकरणे स जयसेनां ध्रुवसिद्धिं च स्वपक्षे भेदयति। पात्रद्वयं विदूषकस्य छद्मनिर्भरां योजनां सम्पादयितुं किं किं न करोति। ध्रुवसिद्धेः प्रपञ्चेन नागमुद्रा प्राप्यते। अनेन प्रकारेण मिथ्याचारद्वारेण नायकयो-र्मिलनं भवति—

> इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा।
> सन्दिग्धमेव सिद्धौ कातरमाशंकते हृदयम्॥ ४.५

तदनु मिथ्याचार एवाधोवृत्तं विदूषकेण कल्पितम्—

बकुलावलिके, एष बालाशोकवृक्षस्य पल्लवानि लंघयति हरिणः। एहि निवारयाव एनम्।

---

१. कौशिकी यतिवेषा पीठमर्दिकास्ति। १.१३/१४

२ अहं पुनर्जाने यन्मया केतकीकण्टकैर्दंशं कृत्वा सर्पस्योपर्यंयशः कृतम्।

अनेन मिथ्याचारेण नायकयोः कृते विश्रब्धः परिसरः साधितः ।

अतः परं स्वाभाविकलज्जावशाद् मिथ्याचारस्य शृङ्गारात्मकं पररूपं प्रकटति[1]—

हस्तं कम्पयते रुणद्धि रशनाव्यापारलोलाङ्गुलीः
स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥ ४.१५

सुप्तो मिथ्याचारमूर्तिर्विदूषको भुजङ्गकुटिलेन दण्डकाष्ठेन प्रहार्यते । स प्रबुध्य राजानं कथयति—भो वयस्य सर्पो मे उपरि पतितः । एवंविधं सोऽपि मिथ्याचारेणाभिभूयते ।

विक्रमोर्वशीयं चेटया निपुणिकाया विदूषकं प्रति मिथ्यावचनेन प्रारभ्यते । तद्यथा—

'यन्निमित्तं पुनर्भर्ता उत्कण्ठितः तस्याः स्त्रिया नाम्ना भर्त्रा देवी आलपिता'

अनेन मिथ्यावचनेन[2] 'ब्रह्मबन्धुः ( विदूषकः ) अतिसन्धातव्यः' इति अस्याः कार्यं प्रारभ्यते । मिथ्यावचनस्य ततिरनुक्रामति राजानं प्रति विदूषकवचनेन तत्रैव—

भोः एवं मया जिह्वा संयन्त्रिता येन भवतोऽपि नास्ति प्रतिवचनम् ।

विदूषकोऽपि मिथ्याचारे प्रतिष्ठतः मृषैव वदति—'परिश्रान्तोऽस्मि-

---

१. स्वाभाविक-लज्जावशान्मिथ्याचारस्य प्रसिद्धान्युदाहरणान्यधोविधानि विलसन्ति—

**रत्नावल्याम्**

सुसंगता—सखि, यस्य कृते त्वमागता सोऽपि ते पुरतस्तिष्ठति ।

सागरिका—(सासूयम्) सुसंगते कस्य कृतेऽहमत्रागता ।

सुसंगता—(विहस्य) अयि अन्यशङ्किते, ननु चित्रफलकस्य ।

राजा सागरिकायास्तादृशीं शङ्कितां लज्जावशात्स्थितिं वर्णयति—

प्रणयविशदां दृष्टिं वक्त्रे ददाति न शंकिता
घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ । ३.९ इत्यादि

२. विदूषकोऽङ्कारम्भे बोधति चेटया मिथ्यावचनस्य प्रभावम् । स कथयति—वञ्चितोऽस्मि दुष्टदास्या निपुणिकया । अन्यथा कथमेवं पृच्छति वयस्यः । १.२/३

एतस्या मृगतृष्णिकाया वयस्यं निवर्तयितुम्' इति । वस्तुतः स्वपदेनापि स राज्ञः प्रणय-पथसहायोऽभवत् ।

## रत्नावल्याम्

आभिजात्यान्मिथ्याचारस्योदाहरणं रत्नावल्यां वर्तते—

वासवदत्ता—आर्यपुत्र मम पुनरेतं चित्रफलकं प्रेक्षमाणायाः शीर्ष-वेदना समुत्पन्ना । तदनु राजा विदूषकाय स्पष्टयति—

यान्त्याभिजात्यान्निगूढो न लक्षितस्त्वया देव्याः कोपानुबन्धः ।[1]

अत्र नायिका रत्नावली राजकुमारी सती प्रच्छन्नरूपेण राज्ञ्याः परि-जनो भवति । सा मदनमहोत्सवावसरे कामदेवभूतं राजानमेवार्चति—नमस्ते भगवन् कुसुमायुध इति । सा काम इति नायकं चित्रयति रतिरिति स्वयमेव सुसंगतया तेन सह चित्रिता । ततः परं तस्या मिथ्याभावोदयोऽ-धोविधं वर्णितः —

सागरिका—( विलोक्य सासूयम् ) कस्मात्त्वयाहमत्रालिखिता ।

सुसंगता—( विहस्य ) सखि किमकारणं कुप्यसि। परिहास-विजल्पितः सुसङ्गताया मिथ्याचारोऽधोविधं प्रकटितः —

राजा—इदं ते पारितोषिकम् ( कर्णाभरणं प्रयच्छति ) ।

सुसंगता—( प्रणम्य सस्मितम् )—मयापि भर्तुः प्रसादेन क्रीडितमेव । तत्कि कर्णाभरणेन । पुनश्च तस्याः प्रणयोपचारिणी मिथ्यावाणी नन्द्यते—

भर्तः अतिकोपना खल्वेषा । तद् हस्ते गृहीत्वा प्रसादयैनाम् ।[2]

सखि, अतिनिष्ठुरेदानीमसि त्वं यैवं भर्त्रा हस्ते गृहीतापि कोपं न मुञ्चसि । ततः परं विदूषकस्य श्लिष्टां वाणीं—'एषा खल्वपरा देवी वासवदत्तेति' श्रुत्वा मिथ्यार्थ-ग्रहणेन नायकयोः प्रणयव्यवहारः सान्तरायः सन् तयोः सम्भ्रमं कारयति ।[3]

असत्यभाषणस्य परं निदर्शनमस्मिन् प्रकरणेऽधोविधं वर्तते—

केन सागरिकाया उदयनस्य चेह चित्रं कृतमिति वासवदत्तायाः

---

१. रत्नावली २.२०/२१

२. एतेन प्रकरणेन 'प्रणयप्रकरणस्य काचिद् विलोमार्थप्रतिपादिका भाषा' प्रतीयते । इदं तु नाट्यशैल्या जीवितमिव विलसति ।

३. राजा विदूषकं कथयति—
मम हस्ताद् भ्रंशिता भवता । २.१९

प्रियवयस्येन स्वचित्रं कृतमिति राज्ञो मुखेन च स्वचेतसैव परिकल्प्यालिखिता कन्यकेति सर्वं मिथ्यावचनं नाट्योचितमेव। विदूषकस्य तत्रैव मिथ्याशपथः —

शपे ब्रह्मसूत्रेण यदीदृशी कदापि अस्माभिर्दृष्टपूर्वा।

मिथ्याचारस्य परं वैभवमधोलिखितश्लोकेन प्रकटति—

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः।
न मे दोषोऽस्तीति त्वमिदमपि न ज्ञास्यसि मृषा

इति सर्वं मिथ्याचारं विनान सम्भवेत्।

वासवदत्ता कथयति—'सत्यमेव मां शीर्षवेदना बाधते। इति वस्तुतः परमसत्यम्।

अतः परं सुसंगताया मिथ्याचारोपायः फलति, येन सा काञ्चनमालावेषा देवीवेषां सागरिकां नायकमुपनेतुं यतते। अयमुपायो देव्या सागरिकावेषया काञ्चनमालया च सुसंगतावेषया नायकं प्रतार्य विफलीक्रियते। अत्र मिथ्याचारेण मिथ्याचारस्य प्रतीकारो रोचक एव।

तपस्वी विदूषकस्तु स्वमिथ्याचारस्य पाशेन बन्दीभूतः शोचति। तस्य श्लिष्टं वाक्यं सत्यासत्यविशेषकमेवाधोविधं वर्तते—

विदूषकः —( दृष्ट्वा सविस्मयम् ) एषा स्फुटमेव देवी वासवदत्ता।

वासवदत्ता—( साशङ्कमात्मगतम् ) कथं ज्ञातास्मि। मिथ्याचारो नायको व्यक्तं प्रच्छन्नं चात्मस्वरूपं वर्णयति—

राजा—अयि मिथ्यावादिनी खल्वसि। कुतः

श्वासोत्कम्पिनि कम्पितं कुचयुगे मौने प्रियं भाषितं
वक्त्रेऽस्याः कुटिलीकृतभ्रुणि तथा यातं मया पादयोः।
इत्थं नः सहजाभिजात्यजनिता सेवैव देव्याः परं
प्रेमाबन्धविवर्धिताधिकरसा प्रीतिस्तु या सा त्वयि। ३.१८

रत्नावल्याश्चतुर्थेऽङ्के ऐन्द्रजालप्रयोगस्तु महान् मिथ्याचारः, यतो हि नाम न तत्रासीत् वास्तविकोऽग्निः, न चाग्नौ राज्ञो वासवदत्ताया विदूषकस्य वसुभूतेर्बाभ्रव्यस्य च प्रवेशो वास्तविकः। अग्निप्रवेशानन्तरमपि ते सर्वेऽक्षतशरीरा निवर्तन्ते।

यौगन्धरायणः स्वीयां मिथ्याचार-प्रवणतां सलज्जं वर्णयति—

देव्या मद्वचनाद्यदाभ्युपगतः पत्युर्वियोगस्तदा। इत्यादि ४.२०

स एव लावाणकदाहस्य कूटकारकः, ऐन्द्रजालिकेन प्रयोगेणाग्निदाहदृश्यस्यायोजकश्च।

## वेणीसंहारे

वेणीसंहारे तु मूलकथानुसारेण सत्यव्रतस्य युधिष्ठिरस्य मिथ्योक्त्या —अश्वत्थामा हतो नरो वा कुञ्जरो वेति वचनेन द्रोणः शस्त्रं परित्यजन् हतः। अत्रापि मिथ्याचारहीने प्रधानकथानके कविना राक्षसस्य कापटिकं वृत्तं षष्ठेऽङ्के योजयति। सर्वं खलु राक्षसेन प्रोक्तं कृतं चासत्यमेव। भीमस्य मिथ्याचारस्तु तस्यार्जुनं प्रति वचनेन प्रकटति[1]--

मूढ, अनुल्लंघनीयः सदाचारः। न युक्तमनभिवाद्य गुरून् गन्तुम्। ......वन्दनीया गुरवः। इति

## भवभूतेर्नाटकेषु

भवभूतिस्तु विहायोत्तररामचरितमन्यत्र स्वीयां मिथ्याचार-प्रवणतां सम्यक् प्रतनोति। महावीरचरिते तु मिथ्याचारस्य बाहुल्यमेव। तत्र मन्थराशरीरे शूर्पणखा प्रविशति कूटप्रयोगाणां निष्पत्तये। सा रामं कथयति—पुत्रक पुरा प्रतिज्ञातौ द्वौ वरौ महाराजं ज्ञापयामीत्यादि।[1] तदनु लेखमर्पयति—अस्त्वेकेन वरेण वत्स भरतो भोक्ताधिराज्यस्य मे।

मिथ्याचारस्यैकं प्रयोजनं भवति प्रवञ्चनम्। तत्तु कामन्दकीवचसा मालतीमाधवे प्रतिष्ठितमेव 'प्रतार्यौ राजनन्दनौ' इति। अपरं च—कपटै-रतिसन्धानमभीप्सितमेव'।[2] लवंगिका स्वगतं वदति 'प्रस्तावना खल्वेषा कपटनाटकस्य' इत्यनेन मिथ्याचारपरत्वमस्य नाटकस्य व्यक्त-मेव। कामन्दकी 'चीरचीवरविरुद्धः परिचयः' इति लवंगिकां वदन्ती मिथ्याचार-प्रवणतामेव स्वव्यापारस्य सङ्केतयति।

सा धूर्त्ता कामन्दकी मदयन्तिकां प्रति कथयति—वत्से मदयन्तिके वर्धसे भ्रातुर्मालतीलाभेन।' एतत्तु परममसत्यमनभीप्सितं च कामन्दक्या, यतो हि नाम सा माधवं प्रति ब्रूते—'भूरिवसुं नृपतिमुक्तवान्—प्रभवति निजकन्यकाजनस्य महाराजः'——न खलु महाराजस्य निजकन्यका मालती। कन्यका-प्रदाने च नृपतिः प्रमाणमिति नैवंविधो धर्माचार-समयः।

षष्ठाङ्के लवंगिका-स्थानगतो माधवो लवंगिकेति मालत्या परिष्व-ज्यते। सा माधवं प्रति तदा ब्रूते—( आलिङ्ग्य सानन्दम् ) सखि कठोर-कमलगर्भपक्ष्मलोऽन्यादृश एव तेऽद्य निर्वापयति मां शरीरस्पर्शः।

---

१. महावीरचरिते ४.४०/४१

२. मालतीमाधवे १.१५

मालती यदा वस्तुस्थिति परिचिनोति सा कथयति—अहो लवंगिकया मालती विप्रलब्धा ।

अयं शृङ्गारोत्सेचको मिथ्याचारः ।

तदनन्तरं कामन्दकी नवीनं मिथ्याचारं उपन्यस्यति । तद्यथा—

कामन्दकी—वत्स मकरन्द, अनेनैव वैवाहिकेन मालती–नेपथ्येनापचारितः प्रवर्तस्व परिणयायात्मन ।

तदनु कथयति मकरन्दः —एषोऽस्मि मालती संवृत्तः ।

माधवश्च—(गाढं मकरन्दं परिष्वज्य) भगवति, कृतपुण्य एव नन्दनः । यतः प्रियवयस्यमीदृशं मनसा मुहूर्तमपि कामयिष्यति ।

अयं मिथ्याचारः परिहासस्य परिणतौ शिखरायते यतो हि नाम तदनु सुश्लिष्टमालतीनेपथ्य–लक्ष्मीविप्रलब्धनन्दनकरग्रहोऽमात्यभूरिवसुमन्दिरे भगवत्याः संविधानेन क्षेमेण गोपायितोऽद्य मकरन्दः । ·· ···साम्प्रतं च त्वरमाणकाम. कामयितुं सपादपतनमभ्यर्थ्य पुनर्बलात्कारेणाभिद्रवन्मकरन्देन निष्ठुरं प्रतिहतो जामाता ।

अयं कामन्दकीकृतो मिथ्याचारः परिहासदिशि भूयिष्ठं प्रभवति ।

लवंगिका तु परमधूर्ता मदयन्तिकां प्रति मालत्या (वस्तुतः मकरन्दस्य) विषये मिथ्या प्रपञ्चयति—सखि मेनां प्रतिबोधय । एषा चिरं दुर्मनायमानेदानीमेवेषन्मन्ये प्रसुप्तेति । ··· ··· ते भ्रातरं भर्तारमासाद्य न दुर्मनायिष्यते मे सखी ( मालतीवेषो मकरन्दः ) । मिथ्याचारस्य प्रभावोऽयं यत् मदयन्तिकामुखात् श्रूयते—अहो इदमन्यदेव वर्तते ।

मिथ्याचारेण बहुशः छायानाट्यं प्रकर्षं लभते । भावस्यान्यथाप्रदर्शनेन रूपपरिवर्तनेन, वेशपरिवर्तनेन, प्रतिरूपस्थापनेन, कृत्रिमाङ्गाद—प्रदर्शनेन, हृदयानुप्रवेशेन च मायाविनां कार्यसाधनप्रक्रिया भूयिष्ठं विलोभयति प्रेक्षकान् । अयमेव मिथ्याचारस्य छायानाट्यात्मकश्चरमो विलासो येन वशीकृताः कवयो मिथ्याचारं सस्पृहं कल्पयन्ति सन्निवेशयन्ति च तं काव्येषु । पात्राणां वाचिको मानसिकः शारीरिकश्च द्वैधीभावो मिथ्याचारोपपत्त्या सहृदयाह्लादाय साध्यते निपुणं भारतीयमनीषिभिः ।

# अन्तिमेऽङ्के पूर्ववृत्तानां सारसंग्रहः

अभिनवगुप्तः समीक्षते—साररूपाश्च पदार्थाः पर्यन्ते कर्तव्याः ।[1]

अन्तिमेऽङ्के नाटकस्य शेषाङ्कानां कथोपक्षिप्यते । तद्यथाभिज्ञान-शाकुन्तले—

राजा—भगवन्, इमामाज्ञाकरीं वो गान्धर्वेण विवाह-विधिनोपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत् सगोत्रस्य कण्वस्य । पश्चादङ्गुलीयकदर्शनादूढ-पूर्वामिमां तद्दुहितरमवगतोऽहम् । तच्चित्रमिव मे प्रतिभाति ।

मारीचः—वत्स, अलमात्मापराधशङ्कया । सम्मोहोऽपि त्वय्यनुप पन्नः । श्रूयताम् । यदैवाप्सरस्तीर्थावतरणात् प्रत्याख्यानवैक्लव्यां शकुन्तलामादाय मेनका दाक्षायणीमुपगता तदैव ध्यानादवगतोऽस्मि दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा नान्यथेति । स चायमङ्गुलीयकदर्शनावसानः ।

शकुन्तला—……अथवा प्राप्तो मया स हि शापो विरहशून्यहृदयया न विदितः । अतः सखीभ्यां सन्दिष्टास्मि भर्तुरङ्गुलीयकं दर्शयितव्यमिति ।

मारीचः—वत्स कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठित-जातकर्मादिक्रियः पुत्र एष शाकुन्तलेयः ।

राजा—अत्र खलु मे वंशप्रतिष्ठा ।[2]

मारीचः—तथा भाविनमेनं चक्रवर्तिनमवगच्छतु भवान् ।

**मृच्छकटिके**

दशमेऽङ्के कथासार-संग्रहोऽधोविधो वर्तते—

चारुदत्तः—प्रियं त्वं किल मया हतेति—

पूर्वानुबद्धवैरेण शत्रुणा प्रभविष्णुना ।
नरके पतता तेन मनागस्मि निपातितः ॥१०.४४

---

१. ना० शा० १८.४२ अधिकृत्य भारती ।

२. अनेन वाक्येन वैखानस-वचनानुगृहीतमधोविषबीजं पुनरुच्यते-पुत्रमेवं गुणोपेतं चक्रवर्तिनमाप्नुहि । १.१२

भिक्षुः —न प्रत्यभिजानाति मामार्यः। अहं स आर्यस्य चरणसंवाहचिन्तया संवाहको नाम द्यूतकरैर्गृहीत एतयोपासिकयार्यस्यात्मीय इत्यलंकारपणनिष्क्रीतोऽस्मि। तेन च द्यूतनिर्वेदेन शाक्यश्रमणकः संवृत्तोऽस्मि। एषाप्यार्या प्रवहणविपर्यासेन पुष्पकरण्डकजीर्णोद्यानं गता। तेन चानार्येण न मां बहु मन्यस इति बाहुपाशबलात्कारेण मारिता मया दृष्टा।[1]

तत्र शर्विलकश्चारुदत्तेन पृष्टः ब्रूते—

येन ते भवनं भित्त्वा न्यासापहरणं कृतम्।
सोऽहं कृतमहापापस्त्वामेव शरणं गतः ॥१०.४९

## नागानन्दे

नागानन्दस्यान्तिमेऽङ्के शङ्खचूडो जीमूतकेतवे पूर्ववृत्तानां सारसंग्रहं प्रस्तौत्यधोविधम्—

श्रूयताम्। शङ्खचूडो नाम नागः खल्वहम्। आहारार्थं वासुकिना वैनतेयाय प्रेषितः। संक्षेपतः कथयामि—

विद्याधरेण केनापि करुणाविष्टचेतसा।
मम संरक्षिताः प्राणा दत्त्वात्मानं गरुत्मते ॥५.११

तदनु जीमूतकेतुः प्रतिबोधति यन्मम पुत्रो जीमूतवाहन एव प्राणान् दत्त्वा रक्षकोऽस्ति।

अन्येऽपि श्लोकाः पूर्वाङ्कानां सारं प्रस्तुवन्ति। यथा—

आर्वाजतं मया चञ्च्वा हृदयात्तव शोणितम्। ५.१७
उत्प्रेक्षमाणा त्वां तार्क्ष्य चञ्चुकोटिविपाटितम्
त्वद्दुःखदुःखिता नूनमास्ते सा जननी तव ॥ ५.२९

अन्यच्च—

मलयवती—भगवति गौरि, त्वयाज्ञप्तम् यथा विद्याधर-चक्रवर्ती भर्त्ता ते भविष्यतीत्यनेन गौर्या आशीर्वाद-प्रकरणं समुपस्थापितम्।

## वेणीसहारे

नितरां स्पष्टमेव नाटकस्य सारसंग्रहो युधिष्ठिरवचनेनान्तिमेऽङ्के निगदितम्। तद्यथा—

तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम्।

---

१. मृच्छ १०.४४/४५

भीमेन प्रियसाहसेन रभसात् स्वल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिता ।।६.१

पुनश्च कथासारं निगद्यते तत्रैव पाञ्चालकेनाद्योविधम्—

शृणोतु देवो देवी च। अस्तीह देवेन हते मद्राधिपतौ शल्ये गान्धार-राजकुलशलभे सहदेवशस्त्रानल-प्रविष्टे इत्यादि

भ्रातुर्दुःशासनस्य स्रवदसृगुरसः पीयमानं निरीक्ष्य । ६ ८ ।

तदनु कञ्चुकीवचनेन पूर्वाङ्कानां कथा संग्राह्यते । यथा—

एष भुजबल-परिक्षेपोत्तीर्णकौरवपरिभव-सागरस्येत्यारभ्य मङ्गलानि कर्त्तुमाज्ञापयति देवो युधिष्ठिर इत्यन्तेन ।

वेणीसहार-विषयिणी प्रथमाङ्कस्य भीम-प्रतिज्ञा साररूपेण संगृहीता युधिष्ठिरवचनेन—'गच्छतु भवान् । अनुभवतु तपस्विनी वेणीसंहारम् । पुनरपि नाटकस्य कथासारं युधिष्ठरमुखेन—

क्रोधान्धैः सकलं हतं रिपुकुलं पञ्चाक्षतास्ते वयं
पाञ्चाल्या मम दुर्नयोपजनितस्तीर्णो निकारार्णवः । ६.४५

**भवभूतीयेषु नाटकेषु**

महावीरचरितस्य सप्तमेऽङ्के पूर्वाङ्कानां कथा समग्रं विलसति। तथा हि—

षष्ठाङ्कस्य रावणविजयो विभीषणस्याभिषेकश्च

उत्खातस्त्रिभुवनकण्टकोऽतिदृप्यद्—
दोर्दण्डाञ्चितमहिमाप्ययं निकारः ।
देव्याश्च प्रतिशमितस्तथात्रसन्धा
निर्व्यूढा प्रगुणविभीषणाभिषेकात् ॥ ८

अनन्तरं वानरैः सेतुनिर्माणम्[1], वालिमरणम्, दुन्दुभिकबन्धक्षेपणम्, हनुमति सीताया उत्तरीयस्य दर्शनम्,[2] जटायोर्यशःशरीरावलम्बनम्,[3] शूर्पणखा-खरदूषणादीनां निधनम्,[4] इत्येतादृशाः पूर्वाङ्कोचिताः कथांशाः सप्तमेऽङ्के साररूपेण संगृहीताः सन्ति ।

१. महावीरचरिते ७.१०
२. महा० ७.१५
३. महा० ७.१८
४. महा० ७.१९

## उत्तररामचरिते

सप्तमेऽङ्के गङ्गाया अधोवचनं रामस्याद्यां प्रतिज्ञां पुरस्करोति—

इक्ष्वाकूणां　कुलधनमिदं　यत्समाराधनीयः
कृत्स्नो लोकस्तदिह विषमे कि स वत्सः करोतु ।

तदनु कुशलवयोः शस्त्रप्राप्तिर्भवति । सा तु प्रथमाङ्के चित्रदर्शनकाले रामेण प्रतिज्ञातमासीत् ।[1] अत्र पुनर्गङ्गा कथयति—

जगत्पते रामभद्र स्मर्यतामालेख्यदर्शने मां प्रत्यात्मवचनम्—सा त्वमम्ब स्नुषायामरुन्धतीव । शिवानुध्यानपरा भवेति तदनृणास्मि ।

तथैव वसुन्धरापि तदन्वनृणा भवति ।

तृतीयाङ्के रामेण कथितमासीत्—

'अस्ति चेदानीमश्वमेधसहधर्मचारिणी मे हिरण्मयी प्रतिकृतिः ।

एतदेव सप्तमेऽङ्के पुनरुच्यते । यथा—

अरुन्धती—जगत्पते रामभद्र

नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम् ।
हिरण्मय्याः प्रतिकृतेः पुण्यां प्रकृतिमध्वरे ॥ ७.२०

तदनु—

रामलक्ष्मणौ—'दिष्ट्या तथैवैतत्'

इति वचनं पञ्चमषष्ठाङ्कयोर्लवकुशपरिज्ञानप्रकरणमनुहरति ।

**उद्देश्यम्**—

अन्तिमेऽङ्के शेषाङ्कानां कथाया उपक्षेपेण समग्रनाटयकथाविलास एककाले रसोद्भावकतां यातीति महदुद्देश्यमस्या योजनायाः ।



1　उक्तमासीदार्येण सर्वथैतानि त्वत्प्रसवमुपस्थास्यन्तीति ।

# नाटकस्यान्तिमेऽङ्के नायकानां सम्पातः

दिष्टया शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत् समागतम् ॥

अभिज्ञानशाकुन्तले ७.२९

एवमेव प्रायः सर्वेषु नाटकेषु अन्तिमेऽङ्के कवयः कार्यवशात् पृथग्भूतानामपि महत्त्वपूर्णपात्राणां सामग्र्यं संविधान-सौकर्येण व्यवस्थापयन्ति । अपरेष्वङ्केषु तेषां संख्या रङ्गे द्वित्राः पञ्चषा वा भवति ।

यदि नाम किञ्चिन्महत्त्वपूर्णं पात्रं न संगच्छते, तत्तु स्मर्यत एव संविधानसौकर्येण ।

**भासनाटकेषु**

स्वप्नवासवदत्तस्यान्तिमेऽङ्के—

१. उदयनो नायकः
२. पद्मावती अभिनवनायिका राजपत्नी
३. यौगन्धरायणः नायकामात्यः
४. आवन्तिका (वासवदत्ता) प्रथमा नायिका राजपत्नी

इति नायकाः क्रमश आगत्य सम्मिलन्ति । एतान् व्यतिरिच्य नास्ति कश्चिन्मध्यमसामान्यवचनानुसारेण नायकोऽवशिष्टः ।

अविमारकस्यान्तिमेऽङ्के क्रमशः सर्वे नायका अधोलिखिताः समायान्ति—

१. कुन्तिभोजो नायिकायाः पिता
२. सौवीरराजः नायकस्य पिता
३. भूतिकः —कुन्तिभोजस्यामात्यः
४. सुदर्शना—नायकस्य माता
५. अविमारकः —नायकः
६. कुरङ्गी—नायिका

---

१. अत्र नायको मध्यमसामान्यवचनः । तदनुसृत्य नायकस्तु प्रधाननायकः ( कार्यनायकः, फलनायकश्च ), तस्य नायिका, प्रतिनायकः, उपनायकः, अनुनायकश्च भवति मध्यमसामान्यवचनेन । अपरेऽपि केचिन्महत्वपूर्णनायकः तत्र भवन्तु नामान्तिमेऽङ्के ।

प्रतिमानाटकस्यान्तिमेऽङ्के क्रमश इमे नायका रङ्गं प्रविशन्ति—

१. रामः—नायकः
२. सीता—नायिका
३. लक्ष्मणः —अनुनायकः
४. भरतः समातृकः
५. कैकेयी भरतस्य माता
६. शत्रुघ्नः —भरतस्य भ्राता

तत्र विभीषण-सुग्रीवादयो रामस्याभिषेकावसरे तं संवर्धयन्ति ।
अभिषेकनाटके पुनरन्तिमेऽङ्के समायान्ति—

१. रामः —नायकः
२. लक्ष्मणः —अनुनायकः
३ विभीषणः —उपनायकः
४. हनुमान्—वीरसहायः
५. अग्निः

देवर्षयः सिद्धाश्च तं रामं संवर्धयन्ति

बालचरितस्यान्तिमेऽङ्के

१. राजा—कंसः प्रतिनायकः
२. दामोदरः —नायकः
३. सङ्कर्षणः —अनुनायक
४. वसुदेवः —नायकस्य पिता
५. अग्रसेनः —राजा
६. नारदः —देवर्षिः

इत्येते नायकाः सम्मिलन्ति ।

## कुन्दमालायाम्

कुन्दमालाया अन्तिमेऽङ्केऽधोलिखिता नायकाः सम्मिलन्ति—

१. रामः —फलनायकः प्रधानः
२. लक्ष्मणः —अनुनायकः
३. सीता—नायिका
४. वाल्मीकिः प्रकरीनायकः
५. कुशलवौ—प्रधाननायकपुत्रौ
६. पृथ्वी—विश्वम्भरा भगवती

## मृच्छकटिके

मृच्छकटिकस्यान्तिमेऽङ्केऽधोविधा नायकाः प्रकटन्ति—

१ चारुदत्तः — नायकः
२. वसन्तसेना — गणिका नायिका
३. रोहसेनः — नायकपुत्रः
४. विदूषकः —नायकसहायः
५, शकारः — प्रतिनायकः
६. स्थावरकः — शकारस्य चेटः
७. भिक्षुः — नायिकासहायः

८. शर्विलकः — पालकस्य हन्ता आर्यकस्य प्रतिष्ठापकश्च
९. चन्दनः — आर्यकस्य रक्षकः
१०. धूता — चारुदत्तस्य पत्नी
११. रदनिका — नायकस्य चेटी

तत्र नायाति राजा आर्यको रङ्गपीठमन्तिमेऽङ्के। यदि नाम स रङ्गपीठमागमिष्यत्तर्हि चारुदत्तस्य नायकत्वं व्यलुपिष्यत्

### मुद्राराक्षसे

मुद्राराक्षसेऽन्तिमेऽङ्केऽधोविधा नायकाः प्रकटन्ति—

चन्दनदासः — राक्षसस्य सुहृत्तमः
राक्षसः — प्रतिनायकस्य मन्त्री
चाणक्यः — कार्यनायकः, नायकस्य मन्त्री
राजा (चन्द्रगुप्तः) — फलनायकः
सिद्धार्थकः } – राजपुरुषौ
समिद्धार्थकः } ( चाण्डालौ )
मलयकेतुः — पर्वतकराजस्य पुत्रः प्रतिनायकः
प्रायः सर्वे कार्यपुरुषा अङ्केऽस्मिन् समुपस्थिता भवन्ति।

### कालिदासीयेषु नाटकेषु

मालविकाग्निमित्रस्यान्तिमेऽङ्के सर्वे कार्यपुरुषाः सम्पतन्ति। यथा,

१. अग्निमित्रः — नायको राजा
२. विदूषकः — नर्मामात्यः
३. धारिणी — देवी नायिका
४. मालविका — नूतननायिका
५. परिव्राजिका — पीठमर्दिका ( कौशिकी )

तथैव विक्रमोर्वशीयस्यान्तिमेऽङ्के सर्वे कार्यपुरुषाः सङ्गताः। ते सन्ति—

१. राजा पुरूरवा — नायकः
२. विदूषकः — नर्मामात्यः
३. आयुष्कुमारः — राजकुमारः
४. उर्वशी — नायिका
५. नारदः — महेन्द्रस्य सन्देशवाहकः

प्रमुखनायकेषु केवलं काशिराजस्य कन्या महादेवी नायाति रङ्गपीठम् । तस्या अभावं पश्यन् कविर्योजयति—

उर्वशी—(कुमारं हस्ते गृहीत्वा) एहि वत्स ज्येष्ठमातरमभिवन्दस्व ।

अत्र ज्येष्ठमाता सैव काशिराजकन्या ।

### अभिज्ञानशाकुन्तले

अन्तिमेऽङ्के

१. राजा दुष्यन्तः — नायकः
२. मातलिः — नायकस्य सारथिः
३. भरतः — नायकस्य पुत्रः
४. शकुन्तला — नायिका
५. मारीच — शकुन्तला-पालक ऋषिः

महत्त्वपूर्णकार्यपुरुषेषु कण्व[1] एवावशिष्यते। स चासौ स्मयतेऽधोविधिनादितिमारीचाभ्याम्—

अदितिः — भगवन्, अस्या दुहितृमनोरथसम्पत्तेः कण्वोऽपि तावच्छ्रुतविस्तरः क्रियताम्। तथाप्यसौ प्रियमस्माभिः प्रष्टव्यः इत्यादि

### नागानन्दे

अन्तिमेऽङ्केऽधोविधा नायकाः संगच्छन्ते—

१. जीमूतवाहनः — नायकः
२. जीमूतकेतुः — नायकस्य पिता
३. मलयवती — नायिका
४. शङ्खचूडः — नायकेन रक्षितो नागः
५. गरुडः — नायकस्य भक्षयिता
६. गौरी — भगवती देवी

### वेणीसंहारे

अत्र क्रमशः सर्वे कार्यपुरुषाः अन्तिमेऽङ्के समापतन्ति। तथाहि—

१. युधिष्ठिरः — फलनायकः
२. द्रौपदी — नायिका
३. भीमसेनः — कार्यनायकः
४. कृष्णः — अर्जुनस्य सारथिः
५. अर्जुनः — अनुनायकः

---

१. कण्वस्यान्तिमेऽङ्के सहावस्थानमसम्भवमस्ति तस्योच्चपदात्, देशान्तरभावाच्च ।

## भवभूतीयेषु नाटकेषु

महावीरचरितस्यान्तिमेऽङ्के

राम: नायक:

सीता नायिका

लक्ष्मण: अनुनायक:

विभीषण: नायकस्य सहायो लङ्केश्वर:

हनुमान्—कर्मशूर:

भरतशत्रुघ्नौ—नायकस्यानुजद्वयम्

वसिष्ठ: —कुलगुरु:

कौसल्यादय —रामादीनां मातर:

कैकेयी – रामस्य विमाता इत्येते प्रमुखा: सर्वे नायका उपतिष्ठन्ते रङ्गे।

मालतीमाधवस्य दशमेऽङ्केऽधोलिखितानि पात्राणि वर्तन्ते—

१. कामन्दकी — योगिनी–पीठमर्दिका
२. मदयन्तिका — प्रतिनायकस्य भगिनी
३. लवंगिका — मालत्या: सखी
४. मकरन्द: — माधवस्य मित्रम्
५. माधव: — नायक:
६. मालती — नायिका
७. सौदामिनी -- कामन्दक्या: शिष्या योगिनी
८. अवलोकिता -- कामन्दक्या: परिचारिका
९. बुद्धरक्षिता — कामन्दक्या: सखी
१०. कलहंस: —माधवस्य सेवक: इत्येतानि महत्त्वपूर्णपात्राणि सन्ति रङ्गपीठे।

नायिकापितुर्भूरिवसो: स्मरणं पुन:पुनर्मालतीमाधवस्यान्तिमेऽङ्के वर्तते—यथा—

सौदामिनी—भगवती, एतत्प्रहृष्टनन्दनाभिनन्दितेन राज्ञा पद्मावतीश्वशुरेण भूरिवसो: प्रत्यक्षमभिलिख्य पत्रमायुष्मतो माधवस्य प्रेषितम्।

प्रतिनायको नन्दन: स्मर्यते। यथा—

अविगणय्य नृपं सहनन्दनं चरणयोर्नतमग्निचये पतन्। १०.१६

भूरिवसुरधोविधमन्यत्रापि स्मर्यते तत्रैव—

( नेपथ्ये )

मालत्यपायमधिगम्य विरक्तचेताः सांसारिकेषु विषयेषु च जीविते च ।
निश्चित्य वह्निपतनाय सुवर्णबिन्दु-मभ्येति भूरिवसुरित्यधुना हताः स्मः ॥

अन्यच्च भूरिवसुस्मरणप्रकरणम्—

सपदि भूरिवसुर्विनिवर्तितो मम गिरा गुरुसंमदविस्मयः ॥ १०,१९

कामन्दकी—एह्येहि भूरिवसुजीवितदानपुण्य—१०,२०

अपरं महत्त्वपूर्णं पात्रमघोरघण्टोऽधोविधं स्मर्यते—

कामन्दकी—कथमघोरघण्टवध-विजृम्भितमेतत् ।

## उत्तररामचरिते

सप्तमेऽङ्के प्रमुखनायका अधोविधा विलसन्ति—

| | |
|---|---|
| १. रामः | ७. वाल्मीकिः |
| २. सीता | ८. जनकः[1] |
| ३. लक्ष्मणः | ९. चन्द्रकेतुः[2] |
| ४. गङ्गा | १०. कुशः |
| ५. पृथिवी | ११. लवः |
| ६. अरुन्धती | |

इत्येत एव प्रमुखनायका उत्तररामचरितस्य ।

बालरामायणस्यान्तिमेऽङ्केऽधोलिखितानि पात्राणि सन्ति—

| | | | |
|---|---|---|---|
| १. | रामः | ६. | विभीषणः |
| २. | लक्ष्मणः | ७. | हनुमान् |
| ३. | सीता | ८. | वसिष्ठः |
| ४. | त्रिजटा | ९. | भरतः |
| ५. | सुग्रीवः | १०. | शत्रुघ्नः |

कविर्नाट्ये प्रतीकरूपाणां नायकानामन्तिमेऽङ्के सम्पातेन सर्वेष्वङ्केषु विकीर्णां तेषां चतुर्विधाभिनेयभूतां सामग्रीं साकल्येन सपदि समर्थयति । अनेन विधिना स काव्यशरीरेऽङ्गाङ्गिभूतानि रसोद्भावकतत्त्वानि सम्मिश्र्य भूयिष्ठमास्वदयतीति सद्यः परनिर्वृतये संजायते ।

१. एष राजर्षिजनको मातामहः । ७.२०/२१

२. रामः— इमौ पुनर्वत्सौ ( लवकुशौ ) कुमारचन्द्रकेतुसमां प्रतिपत्तिं लम्भयितव्यौ । ७.१/२

## नाटकेष्वसंवादः

संवादे प्रायः 'उत्तरादुत्तरं वाक्यं वदतां सम्प्रजायते'। तत्रोत्तर-प्रत्युत्तरं विशिष्यते किन्तु वस्तुप्रपञ्चकलासौष्ठववशादुत्तरानपेक्षि-कथनमपि भूयो भूयो विलसति नाटकेषु यत्र नायकस्य स्वविचारः परि-निष्ठितः, नापरेषां केषाञ्चिन्मतम पेक्षते। स्वविचारं वक्तात्मन्येव निगूढं रक्षति अथवा सम्मुखीना जनाः सत्यमपि विचारं श्रुत्वोद्विग्ना भवेयुः, अवसरो वा न भवेद् रहस्योद्घाटनस्य तदा स प्रेक्षाकाणामेव विज्ञानाय प्रत्युत्तरानपेक्षि वचनं ब्रवीति। अन्यत्र नायकमुखेन काव्योत्कर्षकाणि वर्णनानीतिवृत्तोपनयपथे सन्निवेश्यन्ते। प्रायशस्तत्रापि संवादं विनैव काव्यप्रवृत्तिर्जयते।

कस्यचित् नाटकस्योत्कर्षः काव्यगुणापेक्षया व्याहारेणापि वर्धते। अपरविधेषु काव्येषु व्याहार एव महत्त्वं भजते, संवादो विरल एव वर्तते। नाट्य-संवादे श्रोतुर्मनोदशादीनामपेक्षया वैचित्र्यमावर्ज्यते। साधारणतः श्रोतुर्मध्यमतया संवादेन पात्रं प्रेक्षकान् प्रभावयति। व्याहारे पुनः स्वयमेव स प्रेक्षकान् प्रति गौणत आत्मीयान् भावादीन् प्रकटयति। अत्र संलापस्य संवादस्य वा छायापि न भवति।

अभिनवगुप्तः पृच्छाया व्याख्याप्रकरणे—तन्नोत्तरमपेक्षते तस्यैव प्रत्यायकत्वात् इत्यनेन संवादस्य सत्तां दृढीकरोति नाट्ये।

नाटके संवादस्य महिमा राजते। संवादद्वारेणेतिवृत्तस्योपनयो रोचिष्णुतमो भवतीपि सत्यमेव। अतएव संवादमुखेन नैकपुरुषाणां मनो-भावा विचाराश्च परस्परं विनिमीयमाना एव प्रकटीक्रियन्ते।

उत्तर-प्रत्युत्तर-समवेतः संवादः कमपि जनं प्रत्युक्तो भवति। तत्र रङ्गे नैकनायकानां परस्परं वचांसि प्रतिवचांसि च युगपद्विलसन्ति। नाटके प्रायशः संवादा भवन्ति। अपवादरूपेण व्याहारा अपि तत्र बहु-विधा भवन्ति। एकोक्तिः (Soliloquy) स्वगतरूपोऽसंवादः प्रतीत एव। असंवादो न कस्मैचित् श्राव्यते, यदि कश्चित् शृणोति स तं नावदधाति। सुप्रसिद्धं तावच्छर्विलकस्य चौर्यप्रकरणमसंवादेन तृतीयेऽङ्के ख्यातं मृच्छकटिकस्य—

कृत्वा शरीरपरिणाहसुखप्रवेशं
शिक्षाबलेन च बलेन च कर्ममार्गम्।
गच्छामि भूमिपरिसर्पणघृष्ट-पार्श्वो
निर्मुच्यमान इव जीर्णतनुर्भुजङ्गः ॥ ३.९

इत्यारभ्य—शर्विलकः ( रदनिकां हन्तुमिच्छति, निरूप्य ) कथं स्त्री। भवतु गच्छामि। ( इति निष्क्रान्तः ) इत्यन्तं सर्वमसंवाद एव।

शर्विलकोऽस्मिन् कथांशे आत्मनश्चारुदत्तगृहप्रवेशं, चन्द्रास्तमनं, चौर्यौदात्त्यं, सन्धिभेद-विमर्शं, देवनमस्कारं, यज्ञोपवीतोपयोगं, प्रदीप-शिखां, परमार्थसुप्तपरोक्षणं, चारुदत्तस्य दारिद्र्यस्य परीक्षणम्, चौर्यविक्रमं[1] च स्वैरं स्वैरं विवृणोति। एतद्विधस्य रोचकव्याहारस्य महाप्रीतिजननं सुप्रतीतमेव।

भासस्तु एकाकिव्याहारेण नाट्य उपनयस्य रीतिं प्रागेव सम्यक् प्रवर्तितवान्। अविमारके नाटके तृतीयेऽङ्के तत्र नायकोऽविमारक एकाकी सन् यौवनं वर्णयति, स्वशक्तिं परिचाययति तमो रूपयति मानिन्या मान-भावनं सूचयति, दीपप्रभां दर्शयति चौरं निदर्शयति च। स रात्रिचारं निर्दोषयति। यथा—

अविमारकः—एतद् राजकुलम्। अहो स्थिरत्वमुच्छ्रितत्वं प्राकारस्य। इह खलु प्रयुज्यते पुरुषाणां कक्ष्याबन्धः अथवा प्रविष्ट एवाहं चिन्तयितव्यः। यदि स्थिराः कपिशीर्षकाः, इह स्थित्वा रज्जुं प्रक्षिपामि। नमः प्रजापतये। नमः सर्वसिद्धेभ्यः। प्रसीदन्तु बलिशम्बरमहाकालाः' इत्यारभ्य

हंसाः स्वपन्ति मणिरत्नशिलातलेषु
वैदूर्यमौक्तिककृताः सिकताप्रतानाः।
स्तम्भाः प्रबालविहिताः किमिह प्रलापै—
र्मन्दीभवन्ति मणिदीपहताः प्रदीपाः ॥ ३.१६

---

१. मार्जारः क्रमणे मृगः प्रसरणे श्येनो ग्रहालुञ्चने
सुप्तासुप्तमनुष्यवीर्यतुलने श्वा सर्पणे पन्नगः।
माया रूपशरीरवेशरचने वाग्देशभाषान्तरे
दीपो रात्रिषु संकटेषु डुडुभो वाजी स्थले नौर्जले ॥ ३.२०

भुजग इव गतौ गिरिः स्थिरत्वे पतगपतेः परिसर्पणे च तुल्यः।
शश इव भुवनावलोकनेऽहं वृक इव च ग्रहणे बले च सिंहः ॥ ३.२१

मृच्छकटिक एकाकी भिक्षुरष्टमाङ्कस्य प्रारम्भेऽनुपस्थितानपि अज्ञान् वदति—

अज्ञाः कुरुत धर्मसंचयम्—

संयच्छत निजोदरं नित्यं जाग्रत ध्यानपटहेन ।
विषमा इन्द्रियचौरा हरन्ति चिरसंचितं धर्मम् ॥ ८.१

इत्यारभ्य पुष्करिण्यां प्रक्षाल्य लघु लघु अपक्रमिष्यामि' इत्यन्तम् । तत्रैवाङ्कान्ते पुनस्तस्य भिक्षोरसंवादो वर्तते ।

तथैव नवमाङ्कस्यारम्भे शोधनक–शकारयोः पृथक् पृथग्भाषणमसंवाद-कोटिकम् ।

अस्मिन्नाटकेऽसंवादा एव दशमेऽङ्के चारुदत्तस्याधोविधं वचनम्—

नयनसलिलसिक्तं पांशुरूक्षीकृताङ्गं
पितृवनसुमनोभिर्वेष्टितं मे शरीरम् ।
विरसमिह रटन्तो रक्तगन्धानुलिप्तं
बलिमिव परिभोक्तुं वायसास्तर्कयन्ति ॥ १० ३

अत्र चारुदत्त आत्मदुर्दशां न कमपि श्रावयति । केवलं प्रेक्षका एव विभावाधीनास्तं शृण्ववन्ति ।

### आत्मपरिचयार्थो व्याहारः

रङ्गपीठं प्रविशत्पात्रमात्मपरिचयमेकाकि सत् प्रेक्षकेभ्योऽसवादरूपं श्रावयति । यथा प्रथमाङ्कस्य मिश्रविष्कम्भके मालविकाग्निमित्रे—

गणदासः —कामं खलु सर्वस्यापि कुलविद्या बहुमता । न पुनरस्माकं नाट्यं प्रति मिथ्या गौरवम् । तथा हि

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम् ॥

अत्र रङ्गे न कश्चित् जनो गणदासस्य पूर्वोक्तं वचः शृणोति । अतः संवादस्य का वार्ता ।

अन्यत्र रंगं प्रविशत् पात्रं स्वकर्तव्यादिकमपि असंवादरूपेण प्रकट-यति । यथा मृच्छकटिके—

वीरकः —

पादप्रहारपरिभवविमाननाबद्धगुरुकवैरस्य ।
अनुशोचत इयं कथमपि रात्रिः प्रभाता मे ॥ ९.२३

तद्यावदधिकरणमण्डपमुपसर्पामि । सुखमार्यमिश्राणाम् ।

**प्रवेशक-विष्कम्भकयोरसंवादः**

विष्कम्भकस्तु—

एकानेककृतः शुद्धः सङ्कीर्णो नीचमध्यमैः ।

तत्रैककृतविष्कम्भकेऽसवादस्यैव स्थानं भवितुमर्हति । यथा मालती-माधवस्याष्टमाङ्कस्य—

अवलोकिता—वन्दिता मया नन्दनावसथ-प्रतिनिवृत्ता भगवती । तद्यावन्मालतीमाधवसकाशं गच्छामि । ( परिक्रम्य ) एतौ तौ परिनिव-र्तितदिवसावसानमज्जनौ दीर्घिकातीरशिलातलमलंकुरुत. । तदुपसर्पामि ।

अभिज्ञानशाकुन्तलस्य चतुर्थाङ्कात् प्राग् विष्कम्भके सुप्तोत्थितः शिष्योऽनसूया च पृथक् पृथगेव भाषणं कुरुतः । तयोर्भाषणं संवादकोटिं नार्हति ।

एतादृशी एव कस्यापि नायकस्य रङ्गप्रवेशकाले प्रथमकक्ष्यायामेका-किनः स्वीकारोक्तिः । तद्यथा मृच्छकटिकस्य पञ्चमेऽङ्के—

( प्रविश्य )

विदूषकः —अहो गणिकाया लोभोऽदक्षिणता च यतो न कथापि कृता अन्या । इत्यारभ्य कथं प्रियवयस्यो वृक्षवाटिकायामुपविष्टस्तिष्ठति । तद्यावदुपसर्पामि’ इति यावत् ।[1]

**स्वकार्यवर्णनम्**

अभिज्ञानशाकुन्तलस्य प्रथमाङ्के सूतस्य निष्क्रमणाद् पश्चादेकाकी राजा परिक्रम्यावलोक्य च कथयति—

इदमाश्रमद्वारम् । यावत्प्रविशामि । ( प्रविश्य निमित्तं सूचयन् )

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
इत्यारभ्य यावदिमां छायामाश्रित्य प्रतिपालयामि ।

---

१. मृच्छ. ५.६/७

तृतीयाङ्कस्यारम्भेऽपि तादृश एवासंवादो वर्तते । तथाहि—

राजा—( निःश्वस्य )

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम् ॥३.१

इत्यारभ्य श्रोष्यमि आसां विस्रम्भकथितानि ।

**नेपथ्योक्तिः**

नेपथ्योक्तिस्तु वस्तुतोऽसंवाद एव । तद्यथाभिज्ञाने भो भोस्तपस्विनः सन्निहितास्तपोवनसत्त्वरक्षायै भवत इत्यारभ्य

धर्मारण्यं विरुजति गजः स्यन्दनालोकभीतः । १.३०

इति यावत् ।

**स्वगतम्**

स्वगतं संस्कृतनाटचविधायाः सारभूतं वर्तत एव । तत्र नास्ति क्वचिदपेक्षा प्रतिवचनस्य, यतो हि नाम स्वगतं न कश्चिच्छृणोति रङ्गपीठे ।

**दूरतो विलोक्य वर्णनम्**

दूरं स्थित्वा कश्चिज्जनो यत्किञ्चिद्भाषते न तच्छ्रूयते दूरस्थैर्जनैः । ईदृशोऽसंवादोऽभिज्ञानशाकुन्तलेऽधोविधं वर्तते कञ्चुकीमुखेन—

( राजानमवलोक्य ) अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम् । एवमुत्सुकोऽपि प्रियदर्शनो देवः । तथाहि—

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं
बिभ्रत् काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः ।
चिन्ताजागरणप्रताम्रनयनस्तेजोगुणैरात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ ६.६

अभिज्ञानशाकुन्तलस्य सप्तमेऽङ्के राजा दूरत एव तपस्विनीभ्यामनुबध्यमानं बालमवलोक्य कथयति—

अये ! को नु खल्वयमनुबध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः ।

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ ७.१४

किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे हृदयम् । नूनमनपत्यता मां वत्सलयति ।

मृच्छकटिकस्य चतुर्थाङ्के वसन्तसेना गवाक्षकेण मदनिका-शर्विलकयोः प्रणयव्यापारं पश्यन्ती असंवादरूपं वदति—

'कथमेषा केनापि पुरुषकेण सह मन्त्रयमाणा तिष्ठति। इत्यारभ्य साधु मदनिके साधु। अभुजिष्येव मन्त्रितम्।

इति यावत् तस्याः प्रतिक्रियोक्तयोऽसंवादः।

तथैवैकाकी नायकोऽवलोक्योर्ध्वं दुर्दिनं वर्णयति पञ्चमाङ्कस्यादौ षड्भिः श्लोकैः। वसन्तसेनापि तथैवासंवादरूपं दुर्दिनवर्णनं करोत्यभिसारिकावेषा।

तथैव परिक्रम्यावलोक्य च संवादरूपेण नायको वदति। यथा मृच्छकटिकस्य नवमेऽङ्के चारुदत्तः शुष्कवृक्षस्थितो ध्वांक्ष इत्यादिना सर्वथा देवताः स्वीकरिष्यन्ति इत्यन्तेन।

'समन्तादवलोक्य' क्वचिदसंवादः प्रवर्तते। तद्यथा मृच्छकटिके नवमेऽङ्के।

चारुदत्तः —( प्रविश्य, समन्तादवलोक्य )

तत्रैव 'विचिन्त्य, परिक्रामतः, सशङ्कम् सवितर्कम्' च बहवः श्लोकाश्चारुदत्तेन पठ्यन्ते।[1]

## विज्ञापनार्थम्

लक्ष्मणस्य संवाद-विहीना विज्ञापना कुन्दमालायां भगवतीं गङ्गां, मुनीन्, वनदेवता, हिंस्रान्, लोकपालान्, शैलराजान् प्रति निवेद्यते। तद्यथा गङ्गां प्रति—

जातश्रमां कमलगन्धकृताधिवासैः
काले त्वमप्यनुगृहाण तरङ्गवातैः।
देवी यदा च सवनाय विगाहते त्वां
भागीरथि प्रशमय क्षणमम्बुवेगम्॥ १.२२

गङ्गायाः प्रत्युत्तरं नास्ति। इदं स्तुतिरेव

## घोषणा

एकपक्षीयं वचनं घोषणा भवति विज्ञप्त्यर्थम्। न तत्र प्रत्युत्तरस्य सम्भवः। तद्यथा मृच्छकटिकस्य दशमेऽङ्के

चाण्डालौ — शृणुतार्याः शृणुत। एष सार्थवाहविनयदत्तस्य नप्ता सागरदत्तस्य पुत्रक आर्यचारुदत्तो नाम इत्यादिना यद्यपर ईदृशमुभयलोकविरुद्धमकार्यं करोति तमपि राजा पालक एवमेव शास्ति।

---

१. मृच्छ० ९.७–१६

## वर्णन-प्रसङ्गेन

वर्णनानि प्रायशः प्रत्युत्तरं नापेक्षन्ते । तद्यथा मृच्छकटिके—

विटः —( वसन्तसेनामुद्दिश्य )

अपद्मा श्रीरेषा प्रहरणमनङ्गस्य ललितम्
कुलस्त्रीणां शोको मदनवरवृक्षस्य कुसुमम् ।
सलीलं गच्छन्ती रतिसमयलज्जाप्रणयिनी
रतिक्षेत्रे रङ्गे प्रियपथिकसार्थैरनुगता ॥ ५.१२

तत्र यथापूर्वं कवेरनुत्तमा काव्यसृष्टिरेतादृशेषु वर्णनरूपासंवादेषूच्चरति ।

## अङ्कान्तेऽसंवादः

अङ्कस्यान्तिमे भागे बहुशो नायका निर्गच्छन्ति । क्वचिदेक एव नायको वर्तते । स तदा स्वकार्यक्रममपरेषामपि भाविनियोगं संवादविरहितं व्याहारेण श्रावयति । तथा हि मृच्छकटिके षष्ठाङ्कस्यान्ते—

चन्दनकः —( नेपथ्याभिमुखमवलोक्य ) अरे निष्क्रमतो मे प्रियवयस्यः शर्विलको पृष्ठत एवानुलग्नो गतः । भवतु, प्रधानदण्डधारको वीरको राजप्रत्ययकारो विरोधितः । तद्यावदहमपि पुत्रभ्रातृपरिवृत एवमेवानुगच्छामि ।

नाटके संवाद एव विलसतीति बाहुलकेनैव सत्यम् । पूर्वोक्तविवेचनेन प्रमीयते यदसंवादसहानि बहूनि स्थलानि सन्त्येव । बहुषु स्थलेषु असंवाद एवाश्यकः पात्राणां मनोगतानि प्रेक्षकेभ्यो विज्ञापयितुम् । अन्यत्रासंवादस्य कलात्मक सौष्ठवं प्रक्रिया-वर्णनेऽनुपममेव सौन्दर्यं विदधाति । यथा शर्विलकादीनां चौर्यनिदर्शनम् ।



# वृत्तिविधानम्

समुत्थानं तु वृत्तीनां व्याख्यास्याम्यनुपूर्वशः ।
यथावस्तूद्भवं चैव काव्यानां च विकल्पनम् ॥

नाट्यशास्त्रे २०.१

अभिनवगुप्तानुसारेण वृत्तयस्तु वस्तुतः कायवाङ्मनसां चेष्टा एव कविभिर्विशिष्टेन हृदयावेशेन युक्ता नाट्योपकारिण्यः ।[1]

किमपि वृत्तमितिवृत्तं वा कविः काव्य-क्रियायै विचिनोति । काव्ये तस्य वृत्तस्य प्रपञ्चो नेतिहासकृतां ज्ञानगौरवार्जन-पद्धत्या भवितुमर्हति अपि तु रससार-समुत्थानमभिलक्ष्य वृत्तं तु सूत्रमिव गृहीत्वा कविः संविधान-रूपाणि सन्ध्यन्तर-सन्ध्यङ्ग-वीथ्यङ्गादीनि वैचित्र्यमयानि विविधानि पुष्पाणीव सङ्ग्रन्थयते । तत्रैकविंशतिः सन्ध्यन्तराणां त्रिषष्टिः सन्ध्यङ्गानां द्वादश वीथ्यङ्गानां कवेः पुरतो विलसन्ति । एतेषु कानि कानि सन्ध्यन्त-राणि सन्ध्यङ्गानि वीथ्यङ्गानि च ग्रन्थनीयानीत्युपपत्तये वृत्तीनां विधानं पुरस्कृतम् ।

प्रथमं तावत् कवी रसवृत्तानुरूपां वृत्तिं सम्प्रधारयति । तद्यथा राजशेखरः प्रथयति—चेष्टाविन्यासक्रमो वृत्तिः ।[2] यदि नाम वीररसो युद्धवृत्तं च वर्तेते तत्र सात्त्वती आरभटी च द्वयोर्वृत्तयोरवसरो भवति । तदनु विभा-वाश्रयादीन् विचार्य स विनिर्णयति यदत्र सात्त्वती आरभटी वा प्रभवेत् । रामरावणयुद्धे रामस्योत्तमप्रकृतिमुद्दिश्य कविस्तत्र सात्त्वतीं वृत्तिं स्वीकरोति । इमामेव सात्त्वतीमनुरुध्य सन्ध्यङ्गादीनि स प्रचिनुते ।

यद्यपि सर्वासां वृत्तीनां परस्परं सामञ्जस्यं सहचारिता वा वर्तत एव तथापि बाहुल्येन किमपि काव्यं वृत्तिविशेषेणाभिख्यां लभते । तथा हि—अभिज्ञानशाकुन्तले कैशिकी वृत्तिर्विलसति । अस्मिन् नाटके यदि नाम सात्त्वतीवृत्तेः आरभटी वृत्तेर्वा प्रकरणानि समायान्ति तर्हि संक्षेपेण तानि

---

१. ना० शा० २०.१ अधिकृत्य भारती । राजशेखरानुसारेण चेष्टाविन्यास-क्रमो वृत्तिः ।

२. अत्र क्रमस्तु कविकर्म ।

वर्ण्यन्ते । तद्यथा दुष्यन्तेन दानवगणस्य पराजयः । तत्र युद्धं रङ्गपीठे दृश्यं नास्त्येव । केवलं श्रव्यविधिना मातलिवचनेन तद् वर्णितम् ।[1] अपरञ्चारभटीवृत्तिपरा दुर्वाससः शापघटना सूचनयैव विष्कम्भकेण नेपथ्यवचनेन चोपक्षिप्यते । मातलिना कृता विदूषकस्य दुर्दशापि नेपथ्येन सूचिता ।

कैशिकीवृत्तिकेषु काव्येषु यत्किञ्चित् कविः सामाजिकेभ्यो दर्शयति, तत्तु प्रायशो मधुरं सुन्दरं रोचकमेव पक्षं प्रकाशयति न विपरीतम् । तथा लोकरक्षकस्वरूपं तपस्विनाम्—

एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बाल-पादपेभ्यः पयो दातुमित एवाभिवर्तन्ते । अथवा सप्तमेऽङ्के—अहो उदाररमणीया पृथ्वी ।

### वृत्तेरनुबन्धाः

नाटके या वृत्तिः प्रधाना, तत्सम्बन्धिकार्याणि दृश्यत्वेनाङ्कभागे निवेशनीयानि । शेषाणि तु अर्थोपक्षेपकेण, इतरेण वा सूच्यविधिना सामाजिकेभ्यो विज्ञापनीयानि ।

वृत्तीनां रसैः सम्बन्धो वर्तते । तेषां रसानां स्वपक्षीया विरोधिनश्च रसा भवन्त्येव । तर्हि कस्यचित् काव्यस्य या वृत्तिस्तामनुरुध्य रसा निबन्धनीयाः अथवा काव्ये यो रसोऽपेक्ष्यते तस्यानुरोधेन वृत्तयः संचीयन्ते ।

एवमेव रसानुरूपाणां वृत्तीनां रीतिभिः, प्रदेशैश्च यथाशक्यं सामञ्जस्यमवधारणीयम् ।

**कैशिकीवृत्तेः सन्ध्यङ्गानि**

विलोभनम्, प्राप्तिः, विधानम्, विलासः, विधूतम्, शमः, नर्म, पर्युपासनम्, पुष्पम्, प्रसादनम्, संग्रहः, छलनम् इति ।

**आरभटी-वृत्तेः सन्ध्यङ्गानि**

निरोधनम्, वज्रम्, अभूताहरणम्, अभिसन्धिः, तोटकम्, उद्वेगः, संभ्रमः, द्युतिः, विरोधनम्, विचलनम् इति ।

**सात्त्वतीवृत्तेः सन्ध्यङ्गानि**

परिभावः, भेदः, व्यवसायः, उपगूहनमिति ।

---

१. अभि ७.३–५

**कैशिकीवृत्तेः सन्ध्यन्तराणि**

प्रदानम्, प्रत्युत्पन्नमतित्वम्, गोत्रस्खलितमिति ।

**आरभटीवृत्तेः सन्ध्यन्तराणि**

वधः, दण्डः, माया, क्रोधः, साहसम्, भयम्, भेद इति ।

**सात्त्वतीवृत्तेः सन्ध्यन्तराणि**

ओजः, प्रत्युत्पन्नमतित्वम्, हेत्ववधारणमिति ।

भारतीवृत्तेरेव सर्वाणि वीथ्यङ्गानि भवन्ति ।

वृत्त्यननुरूपा भूमिका रङ्गे परिहरणीया । अभिज्ञाने कैशिकीवृत्तिः प्रधाना । सा तु सौन्दर्यशालिनी । तत्रासुन्दरस्य दुर्वाससो रङ्गे प्रवेशो न भवेदिति नेपथ्यादेव तस्य वचनं श्राव्यते ।



# नाटकस्योद्देश्यम्

'A thing of beauty is a joy for ever.'

कस्य चरितं कीदृशं वा चरितमभिनेयार्थं भवेदिति नाटककारस्य सविशेषमवधानमर्हति। स एव नायकः तदेव वा वस्तु स्वनाटकेनानुकरणीयं विधेयं यस्य सदृक्षं लोके विरलविरलमेव दृश्येत। तथा हि नाटकोचितो नायको भीमो वर्तते यः कथयितुं योग्य :—

शपामि सत्येन भयं न जाने ज्ञातुं तदिच्छामि भवत्समीपे।

मध्यमव्यायोगे ४१

अथवा स राम एव नायको भवितुमर्हति य आत्मानं प्रकाशयत्यधोविधम्—

स्नेहं दयां च सौख्य च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥

स नाट्यकविर्यदा रामं, कृष्णं, चारुदत्तं, वा निरूपयति तस्यान्तरिकोऽभिलाषोऽयमेव वर्तते यल्लोके रामाः, कृष्णाः, चारुदत्ता भूयिष्ठाः सन्तु। अत एव वदामि—लोकशिक्षकः कविर्विजयते।

महापुरुषपराणि उदात्तचरितात्मकानि नाटकानि पुनः पुनरभिनीतानि नवतां विदधते। न तेषां जरतां वा विस्मृतिं वा लोक उत्सहते।

न केवलं रङ्गपीठेऽनुकरणीयोऽपितु लोकेऽपि योऽनुकरणीयोऽभिमतः कविना, स एव नायको भवितुमर्हति। तदेव वृत्तमपि नाट्ये प्रयोज्यं यदनुकृतं लोके कविं प्रीणयति।

न केवलं चरितमेव लोकस्योदात्तं विधातुं नाटकं यततेऽपितु सम्भाषणमार्जवं सौष्ठवं पाटवं प्रत्युत्पन्नमतित्वं च लोकस्य कथं स्यादित्यादर्शो नाटके समुपस्थाप्यते। एतानि शिक्षणीयतत्त्वानि तु नाटकेषु पदे पदे विनिवेश्यन्ते तथापि। प्रकृष्टमेकमुदाहरणमधोविधं वर्तते—

उर्वशी पुरूरवसोऽनुज्ञां कामयते—महाराजेनाभ्यनुज्ञाता इच्छामि प्रियसखीमिव महाराजस्य कीर्तिं सुरलोकं नेतुम्।[1]

---

१. विक्रम० १.१७/१८

यत् किञ्चिन्मानवकृतिषु निसर्गेषु वा ललितं, वैभवशालि, समृद्धमुदारं, रमणीयं च प्रतिभाति तदेव संगृह्य विभावादिसम्पत्तिदर्शनं कथं कुर्यादिति दृष्टिं सहृदयानां जीवितं सार्थयितुं समुपकल्पते महाकविविशेषतोऽभिनेयार्थेषु काव्येषु प्रत्यक्षीकरणेन ।

यथा वेदेभ्यः कार्याकार्यबुद्धिर्वर्णत्रयस्य भवति तथैव नाट्यात्तु वर्णचतुष्टयस्य कर्तव्याकर्तव्यज्ञानं भवतीति विशुद्धाभिप्रायो भरतस्याधो वचनस्य—

न वेद व्यवहारोऽयं संश्राव्यः शूद्रजातिषु ।
तस्मात् सृजापरं वेदं पञ्चमं सार्ववर्णिकम् । ना० शा० १.१२

नाटकं तु वस्तुतः काव्यमेव । आचार्यमम्मटेन काव्यस्योद्देश्यं परिशीलितम्—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्ता सम्मिततयोपदेशयुजे इति ।

नाटके नाट्ये वा किं भवतीति भरतेन निगदितम्—लोकोपदेशजननम्,[1] विश्रान्तिजननम्,[2] धर्म्यम्, यशस्यम्, आयुष्यम्, हितम्, बुद्धिविवर्धनम्[3] इत्यादि ।

त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम् ।
क्वचिद् धर्मः क्वचित्क्रीडा क्वचिदर्थः क्वचिच्छमः ।
क्वचिद् हास्यं क्वचिद्युद्धं क्वचित्कामः क्वचिद्वधः ॥

अतो भरतो निर्देशयति कवीनधोविधम् ।

१. एतानि पूर्वोक्तानि तत्त्वानि नाटकेषु पुरस्करणीयानि ।

२. नैतेषां तत्त्वानां विरोधो नाटके भवेत् । इति

---

१. लोकोपदेशजननं नाट्यमेतद् भविष्यति । ना० शा० १.११५

२. विश्रान्तिजननं काले नाट्यमेतद् भविष्यति । ना० शा० १.११४

३. धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् । ना० शा० ४.१२; १.११५
गेटे तदनुसरन्निव कथयति —
What the author brings forward of a graceful life and the culture of a high soul. The high personality of the author should reflect from the drama. This alone influences the cultivation of the people. European Theories of Drama, p. 334.

न ह्येतेषां तत्त्वानां सर्वतो विवृद्धिः कस्मिंश्चिन्नाटके दृश्येत, किन्तु तानि स्वल्पं वा प्रचुरं वा विलसन्त्येव।

नाटके रसस्रोतस्विनी तु परमोद्देश्यं भवत्येव। किन्तु सा पुष्पलता-प्रतानमिव समाजसौष्ठवादर्शं न भञ्जयेदपितु तमेव नित्यं पोषणतत्त्व—प्रदानेन संवर्धयेदिति।

'निरङ्कुशाः कवयः' इति प्रायोवादः। बहवः कवय आदिकालतः पूर्वोक्तान् मूलभूतानुच्चादर्शानवहेलयन्त इव समाजं पातयितुं यतमाना दृश्यन्ते। तद्यथा प्रहसनभाणकोटिके रूपके किं किं विगर्हितं न वर्तते।[1] स्वयं भरत एव लक्षयति प्रहसन-विषये—कापुरुषसम्प्रयुक्तं भवति। तत्र वेश्या-चेट-नपुंसक-विटधूर्ता बन्धकी च भवन्ति। ततः परमपि धूर्तप्रविवाद-सम्पन्नो दम्भसंयोगो भवति।

भाणादिगर्हितसाहित्यस्य रचयितारः स्वयमेव परापातिनः पाठका-नपि पातयितुं प्रभवन्तीति कस्य नाविदितम्। धनाभिलाषो वा लोक-प्रियताकामना वा क्वचित् प्रतिभाशालिनोऽपि कवीन् पतनाभिमुखीं काव्यप्रवृत्तिं स्वीकर्तुमुत्तेजयति। भास्कर आत्मविडम्बनामस्यां दिशि विरौति स्वोपज्ञे शृङ्गारलीलातिलकभाणे—

निर्लज्जतायाः कस्याश्चिन् निर्बन्धाद् रचितं मया।
इदं हास्यैकसक्तानां विदुषामस्तु तुष्टये॥

कतिपयकवीनामुद्देश्यमासीत् प्रच्छन्नलोकानां दुश्चरितस्य प्रकाश-नम्। शंखधरो लटकमेलकप्रहसनस्य प्रस्तावनायां स्वाभिप्रायं प्रकटितवान्—

चित्रं चरित्रं स्खलितव्रतानां शीलाकरः शंखधरस्तनोति। १.७

नाटके न केवलं भरतो गेटे वा लोकसंस्कारो भवेदिति परमावश्यकं मन्येते, वर्नार्डशा तथैव मन्यमानः प्रतिपादयति—Its (Don Juan Play's) morals, its manners, its philosophy, its influence on the young are for you to justify.[2]

पाश्चात्यालोचकेषु कतिपयप्रमुखा अपि विद्वांसो नाटकादीनामुद्देश्य-म्मनोरञ्जनमेव मन्यन्ते। तथापि महत्तराः सन्ति समीक्षाधुरीणा येषां

---

१. अत्रादि लोकोपदेशजननं दर्शयित्वात्मविगर्हणां विदूषयन्ति केचन कवयः। तथा हि रससदनभाणे 'तदेतासु कदाचिदपि न विश्वसनीयं पुरुषेण'

2. Letter of Arthur—Bingham Walkley

मतेन मनोरञ्जनेन सहोपदेशोऽपि नाटकस्योपेयः ।[1]

**लोकोपदेशजननम्**

लोकोपदेशजननं तु विचित्रेण विधिना सम्भवति । तद्यथा शूद्रकेण मृच्छकटिके दिङ्मात्रं निदर्शितं भिक्षुवचनद्वारेण—

भिक्षुः—इदमीदृशमनित्यत्वं प्रेक्ष्य द्विगुणा तरो मम प्रव्रज्यायां बहुमानः सवृत्तः।

इति संन्यासिनां कृते उपदेशजननमिष्यते । अपरविधानां सहृदयानामवरदृशोपदेशा मृच्छकटिके भूयिष्ठा एव विलसन्ति ।

अभिनवगुप्तो नाटकस्योद्देश्यं प्रीतिव्युत्पत्तिप्रदानत्वं मन्यमानः कथयति-

'दृश्यमिति हृद्यं श्रव्यमिति व्युत्पत्तिप्रदम्'[2] । व्युत्पत्तिः कस्येति स स्पष्टयति—नाटकादिश्चतुर्वर्गोपायोपदेशी[3]

पी. मालेकिन तदेव समर्थयति योरपीयनाटकानुबन्धेन । तद्यथा—

Great comedy and great tragedy are valuable not because they are entertainment but because they re-orientate our attitude to life and to ourselves. In doing so they give a joy which few things can give. —Aryan Path, March, 1957.

योरपीयनाटकेषु ट्रेजेडी मूलतो मानवस्य पावनतां विधातुमुद्दिष्टा ।[4] साक्षादुपदेशो वर्जित एव । व्यञ्जनयैव कथादिशा प्रेक्षकाः सत्प्रवृत्तिं नाटकेभ्यो गृह्णन्ति ।

---

१. ना० शा० १.११ अधिकृत्य भारती ।

२. ना० शा० ९.१७३ अधिकृत्य भारती ।

3. योरपेऽपि—On the other hand, for centuries critics had followed critics in echoing the judgment that delight and instruction were twin aims of the dramatist. A certain practical purpose is implied in Aristotle's famous purgation theory. —A Nicoll ; The Theory of Drama P. 69.

4. In tragedy the ennobling or purification of manners is the end towards which all effort is dircted. In it there are verses instructive, pleasing and moving that they tend to purge of passion the mind of the hearer.

—European Theory of Drama, P. 58.

# औचित्यम्

अनौचित्यं तु परमं रसविधातकमित्याचार्याणां मतं सम्यगुपनीतम्। यद्यपि सर्वविधेषु काव्येषु औचित्यं निर्वहणीय भवत्येव तथापि नाटके नाट्याभिनये च औचित्य-विचारणा सविशेषं प्रतिपदमेवावधानमर्हति। कविस्तु रसापेक्षया विभावानुभावसञ्चारिभावानां स्रष्टा भवति। एतेषां समेषां शोभनं सामञ्जस्यं रागवर्धनः स्यात्। न ह्यनर्हं किञ्चित् प्रेक्षकाणां कृते कविः समुपस्थापयेदिति प्रथमः कल्पः।

औचित्यदृशा प्रथमस्थानीयं वृत्तोपकल्पनमेव। भरतेन नाटकादीनां सर्वेषां रूपकाणां कृते उचितं वृत्तं निर्दशितमेव। यथा नाटकस्येतिवृत्तं प्रख्यातं स्यात् 'नानाविभूतिभिर्युक्तमित्यादि'। अत्र प्रश्नः समुदेति— किं नाम वृत्ते किञ्चिदौदात्त्यं वादर्शो वा प्रतिफलति। बहुषु नाटकेषु राज्ञां विवाहात्मकं चरितमनया दृशा स्पृहणीयं न प्रतिभाति। न तत्रौदात्त्यमादर्शो वा स्यन्दते। मालविकाग्निमित्रं विगलितादर्शमेव ध्वनति।

वृत्तानुबद्धानि संविधानानि विलसन्ति। तेषां सम्भाव्यतावश्यकी भवेत्। दुष्यन्तस्य रथो मृगानुसारी वने प्रचरतीति कल्पना असत्। नाट्यधर्मीदृशापि सर्वमसंभवमसद्वा न दर्शनीयं नाट्ये। अशोभनं संविधानं तु त्याज्यमेव। अभिज्ञानस्य पञ्चमाङ्के दुष्यन्तमुखेन नारीनिन्दाधोविधा परिहरणीयैव।

राजा—इदं तत्प्रत्युत्पन्नमति-स्त्रैणमिति यदुच्यते।

> स्त्रीणामशिक्षितपटुत्वममानुषीषु
> सन्दृश्यते किमुत याः प्रतिबोधवत्यः। ५.२२

कथावस्तुनः प्रतिसंस्कारो नाटकेषु भूयिष्ठं वर्तते। तत्रौचित्य-विचारणा स्पृहणीया भवति। रसभावादीनां वैपुल्यार्थमपि महतां चरितस्य विषयेऽयोग्यं न वचनीयमिति सिद्धान्तः स्वीकरणीयः। अनुचित एव वेणीसंहारेऽश्वत्थाम-कर्णयोर्विवादप्रसङ्गो यत्र प्रातःस्मरणीयोऽश्वत्थामा कथयति—

'अरे मूढ, जात्या काममवध्योऽहम्। इयं सा जातिः परित्यक्ता।

अभिज्ञाने कथावस्तुनः प्रतिसंस्कारो विशेषतः सप्तमेऽङ्क औचित्येन शाश्वतं विलसति।

अन्ये च प्रबन्धगुणा नाटके सम्यगाकलनीया भवन्ति। तथा हि

शब्दगुणाः —संक्षिप्तग्रंथत्वम्[१], अविषमबन्धत्वम् श्रव्यवृत्तत्वम्[२], अनतिविस्तीर्णाङ्कत्वम्, श्लिष्टसन्धित्वम्।[३]

अर्थगुणाः —चतुर्वर्गफलायत्तत्वम्[४], चतुरोदात्तनायकत्वम्[५], रसभावनिरन्तरत्वम्, विधिनिषेधव्युत्पादकत्वम्[६], सुसूत्रसंविधानकत्वम्।[७]

उभयगुणाः — रसानुरूपसन्दर्भत्वम्[८], पात्रानुरूपभाषात्वम्, अर्थानुरूपच्छन्दस्त्वम्[९], समस्तलोकरञ्जकत्वम्, सदलंकारवाक्यत्वम्।

नेतृविषयकमौचित्येन कवेरौदात्त्यं प्रतिफलति। यस्य चरितस्य दर्शनेन प्रेक्षकोऽभ्युदित एव प्रेक्षागृहात् प्रतिनिवर्तते स एव नायको भवेत्। अन्यादृशा नायकाः सामाजिकाना वर्धनाय न प्रभवन्ति। अत एव शृङ्गारप्रधानेऽपि नाटके धीरोदात्त एव नायको वरणीयः न धीरललितः।

नायका यथायोग्यं कार्येषु नियोजनीयाः। उत्तररामचरिते स्वयमेव रामः शम्बूकस्य तपस्विनो वधार्थं नियुज्यत इति नास्ति रुचिकरम्।[१०] मालविकाग्निमित्रे वयोवृद्धोऽग्निमित्रो मालविकां भृशं कामयत इति हास्यास्पदमेवानौचित्यात्।

औचित्यदृशा रसानुबद्धा वृत्तिः स्वीकरणीया। विशेषतोऽङ्गिरसोचिता प्रधाना वृत्तिर्नाटकेषु कल्पनीया। तथा हि वेणीसंहारेऽङ्गिरसो रौद्र एव। तत्रारभटीवृत्तिः सम्यक् पल्लविता।

---

१. येन कथारसविच्छेदो न भवेत्।

२. श्रुतिसुखजनकानि वृत्तानि भवेयुः।

३. अङ्कानां परस्परमेकवाक्यमयतया महावाक्यता जायेत।

४. धर्मार्थकाममोक्षाणां चतुर्णां प्राप्तये उपायान् नायको गृह्णीयात्।

५. धर्मार्थकाममोक्षेषु नायकस्य वैचक्षण्यं स्यात्। आशय-विभूत्योरुत्कर्षोऽपेक्षितः।

६. गुणवतो नायकस्योत्कर्षदर्शनेन दोषवत उच्छेद-प्रदर्शनेन।

७. येन पदार्थाः प्रबन्धस्य शोभायै भवन्ति।

८. येन रतिप्रकर्षे कोमलः, उत्साहप्रकर्षे प्रौढः, शोकप्रकर्षे मृदुः शब्द-सन्दर्भः विरचनीयः।

९. शृङ्गारे द्रुतविलम्बितादयः, वीरे वसन्ततिलकादयः, करुणे वैतालिकादयः, रौद्रे स्रग्धरादयः, सर्वत्र शार्दूलविक्रीडितादयः।

१०. नायकस्य नियोगास्तस्य सत्त्वानुभाववयोदेशादिकं न व्यभिचरेयुः।

औचित्यादृते नान्यद् रसभंगस्य कारणम्
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥

यदि नामा भिनेयेऽनभिनेये वा काव्ये निर्वृतिरुपदेशश्च न दृश्येताम् तर्हि नोचितं तत्काव्यम्। प्राप्तेषु भाणप्रहसनेषु सद्वृत्ति-जागरणाय प्रयत्नो न विहितः।

रसौचित्यं विभावादीनां सामञ्जस्यपूर्णसाकल्येन साधनीयम्। कण्व-ऋषेराश्रमपरिसरः दुष्यन्तस्य कामक्रीडास्थली कृता कालिदासेन। अत्रोद्दीपनं न साधु तपोवनभूमिः। आश्रमस्य ग्रामीकरणमेवानौचित्यम्[१]।

भावानामनुचिताश्रया अनौचित्यं कल्पयन्ति। तथा हि रामस्योदयनस्य च शोकारूढिस्तयोर्महिमानं नानुरुणद्धि।

रसोचितपदनिबन्धनं तु काव्यगौरवं समुद्धरति। बहुविधास्तत्र नायका नाटकेषु स्वपदानुरूपिणीं गद्यमयीं भाषां प्रवदन्तु। तथा हि नाध्यमानां नायकानां कृते पाञ्चाली गौडी वा रीतिरुचिता। ते स्वल्पं वदन्तु न व्यञ्जनयापितु अभिधया।

शब्दा अपि महतां कृते निर्वचनीयाः सन्ति। तथा हि युधिष्ठिर एव पिपासार्थे 'उदन्या' शब्दस्य प्रयोगं कर्तुमर्हति।[२] सीता रामाय त्रैलोक्य इति पदं प्रयुंक्ते।[३]

भासेनोपनय-विषयकः स्वर्णसिद्धान्तः पञ्चरात्रे भटमुखेन निर्दशितः। यथा—

'न विस्तरार्हाणि विप्रियाणि'[४]

अनेन वेणीसंहारस्य चतुर्थाङ्के सुन्दरकस्य दुर्योधनाय वृषसेनवध-प्रकरणोपनयोऽतिदीर्घत्वादनौचित्यं प्रतनोति।



१. उभे—नात्र संदेहः। महाप्रभावो राजर्षिरिति नाटकेऽस्मिन्नुपहितः। षष्ठाङ्कस्य प्रवेशक उद्यानपालिकावचनम्।

२. मुने निर्वर्त्यतामुदन्या-प्रतीकारः। वेणीसंहारे ६.१३/१४

३. उत्तररामचरिते—जाने पुनः प्रत्यागतमिव जीवितं त्रैलोक्यस्य।

४. पञ्चरात्रे २.३/४

# प्रेक्षकानुपृच्छा

संस्कृतनाटकानि केवलं सुसंस्कृतनागरिकाणां दर्शनाय सन्तीति मिथ्या-धारणा स्वयं भरतेनापाकृता। स कथयति—

न वेद व्यवहारोऽयं संश्राव्यः शूद्रजातिषु।
तस्मादपरं वेदं पञ्चमं सार्ववर्णिकम्॥ १.१२

अर्थात् शूद्राणां कृतेऽपि नाट्यं भवत्येव। अभिनवगुप्तस्तदनु स्पष्टयति—

कृतयुगे सत्त्वोत्कर्षबलादेव सर्वः स्वधर्ममनुपालयति। अद्यत्वे तु राजसत्वात् शूद्रप्रकाराः करणादिजातीयाः सर्वेऽखर्वगर्वाक्रान्ता वर्णत्रयानुवृत्तिं न विदधते। शास्त्रं भवद्भ्य एवमादिशतीति च वचनमात्रेण नाद्रियन्ते। न च ते वेदशास्त्रोपदेशयोग्याः। अधिकृतानामनधिकृतानामपि सुकुमाराणां व्युत्पत्तिदायीत्यर्थः।

अत्र सर्वसाधारणस्य शास्त्रज्ञानं यथा स्यात्तथा कविभिर्नाटकादि-विरचनया यतितव्यमिति भरतमतम्। अनेन आब्रह्मणः शूद्रान्तं नाट्यदर्शन-मभिप्रेतम्। एतदेव समर्थितमुमापत्युपाध्यायेन स्वोपज्ञस्य पारिजात-हरणनाटकस्य भरतवाक्ये—।

आशूद्रान्तं कवीनां भ्रमतु भगवती भारती भंगिभेदैरित्यादि।

यथा कापि कलासंज्ञानसुरुचिनिर्भरा मूर्त्तिः तत्त्वविदां बालानामपि च सर्वेषां लोकानां स्पृहणीयत्वेनाद्रियते तथैव नाट्यमपि विदग्धकवीनां प्रतिभया निर्मितं तत्तद्गुणैः न केवलं विदुषामपितु साधारणजनानां परितोषं जनयति। अत एव नाटकादिषु यथायोगं सर्वेषां वर्गाणां प्रतिपत्तये सामग्री प्रस्तौति कविकुलापीडः। प्रेक्षकाणां वैविध्येन नाटकस्य वस्तु-विधानस्य वैचित्र्यं प्रतिफलत्येव।[1]

1. That a playwright, if he is to be successful, may never forget the spectators before whom his work is to be performed. The dramatist must always bear in mind the audience before whom he is to present his work. This dependence of the poeton the public necessarily leads towards the confusion of diverse forces. The temporary and the topical will mingle in his work with the permanent and the eternal.

A. Nicoll The Theory of Drama, P. 63.

## प्राश्निक-प्रेक्षक-विमर्शः

बहुविधा जना नाटकादीनां दर्शका बभूवुः। तेषु प्रथमस्थानीया विद्वांसोऽभवन्, येषां विषये कालिदासो विचक्षते—

आ परितोषाद् विदुषां न साधु मन्येप्रयोगविज्ञानम् ।

अपरे बभूवुः प्राश्निका येषां लक्षणं नाटचशास्त्रे विहितम्[1]—

चारित्राभिजनोपेताः शान्तवृत्ताः कृतश्रमाः ।
यशोधर्मपराश्चैव मध्यस्थवयसान्विताः ॥
षडङ्गनाटचकुशलाः प्रबुद्धाः शुचयः समाः ।
चतुरातोद्यकुशला वृत्तज्ञास्तत्त्वदर्शिनः ॥
देशभाषाविधानज्ञाः कलाशिल्पप्रयोजकाः ।
चतुर्धाभिनयोपेता रसभावविकल्पकाः ॥
शब्दच्छन्दोविधानज्ञा नानाशास्त्रविचक्षणाः ।
द्वितीयकोटिका इमे दर्शका इति संज्ञिताः । २७.५०–५३

इमे प्राश्निककोटिका दर्शका विविधयोग्यता-सम्पन्नाः स्वस्वविद्या-शिल्पकलादिष्वबाह्या जना बभूवुः । तान् भरतो लक्षयति—

संघर्षे तु समुत्पन्ने प्राश्निकान् सन्निबोधत ।
यज्ञविन्नर्तकश्चैव छन्दोविच्छब्दवित्तथा ॥
अस्त्रविच्चित्रकृद्वेश्या गान्धर्वो राजसेवकः ।
यज्ञविद्यज्ञयोगे[2] तु नर्तकोऽभिनये स्मृतः ।
छन्दोविद्वृत्तबन्धेषु शब्दवित् पाठ्यविस्तरे ।
इष्वस्त्रवित् सौष्ठवे तु नेपथ्ये चैव चित्रकृत् ॥
कामोपचारे वेश्या च गान्धर्वः स्वरकर्मणि ।
सेवकस्तूपचारे स्यादेते वै प्राश्निकाः स्मृताः ॥
ना० शा० २७.६४–६७

एतेषामुपस्थितिः कार्यक्षेत्रं वा सूत्रधाराणां नाटचाचार्याणां स्पर्धात्मक-

---

१. पाश्चात्यनाट्येषु प्रेक्षाभूमौ प्राश्निकानां प्रतिष्ठासीत् । तथा हि—

At the performance of the plays ten officially selected judges were present forwarding prizes to the best. Millet : The Art of the Drama P. 24

२. छलितरामे रामस्याश्वमेधयागः ।

विवादनिर्णये बभूवेति पूर्वोक्तभरतवचनेन[1] ज्ञायत एव। तद्यथा कालिदासेन मालविकाग्निमित्रे निगदितं गणदासमुखेन—

विवादे दर्शयिष्यामि क्रियासंक्रान्तिमात्मनः ॥ १.१९

प्राश्निकास्तु परीक्षका एव। न ते वस्तुतः सामाजिका भवन्ति। सामाजिकास्तु नाटकीयान् परीक्षितुं प्रेक्षागृहं न समायान्ति अपि तु रसास्वादनाय नाट्यं प्रेक्षन्ते, न परीक्षन्ते।

अपरकोटिका एव सामाजिकाः प्रेक्षका वा द्विविधाः सन्ति—विशिष्टाः इतरे च।

## विशिष्टप्रेक्षकः

विशिष्टप्रेक्षकस्तु नाट्यास्वादफलो रसवान् भवति। तं भरतो लक्षयति—

अव्यग्रैरिन्द्रियैः शुद्ध ऊहापोहविशारदः।
त्यक्तदोषोऽनुरागी च स नाट्ये प्रेक्षकः स्मृतः॥
न चैवेते गुणाः सम्यक् सर्वस्मिन् प्रेक्षके स्मृताः ॥२७.५४,५५

त एव नाटकस्य प्रस्तावनायामार्यमिश्राः विद्वत्परिषद् वाभवन्।

## इतरप्रेक्षकाः

इतरप्रेक्षकास्तु बहुला भवन्ति। भरतस्तेषु कतिपयान् गणयति—तरुणाः, अर्थपराः, विरागिणः, शूराः, वृद्धाः, अधमाः, बालाः, मूर्खाः, स्त्रियश्च। इतरप्रेक्षकान् भोजः शृङ्गारप्रकाशे नाटकस्य प्रबन्धगुणवर्णनप्रसङ्गे गणयति—समस्तलोकरञ्जकत्वमिति कथनेन।

१. तरुणाः —त्रिविधाः कामार्थधर्मैः क्रमशस्तुष्यन्ति।
२. विरागिणः —मोक्षे तुष्टिं लभन्ते।
३ शूराः —वीररौद्रेषु, नियुद्धेष्वाहवेषु च तुष्यन्ति।
४. वृद्धाः —धर्माख्यानेन, पुराणपाठेन तुष्यन्ति।
५. अधमाः —इतरजनाः।

---

१. स्पर्धया तु भरतानाम्। ना० शा० २७.७०
मालविकाग्निमित्रे कौशिकी परिव्राजिका पीठमर्दिका प्राश्निकासीत् नाट्याचार्ययोर्गणदासहरदत्तयोः संघर्षे। राजा तत्र कथयति—भगवति, अत्रभवतो हरदत्तगणदासयोः परस्परं विज्ञानसंघर्षिणोर्भगवत्या प्राश्निकपदमध्यासितव्यम्।

भरतेन स्पष्टमेव कथितम्—

न शक्यमधमैर्ज्ञातुमुत्तमानां विचेष्टितम् ॥२७ ६०

अर्थात् तेषु तेषु रूपकेषु अधमाः प्रेक्षका न बहुशो रमन्ते येषु येषूत्तम-जनानां चरितावलिरधिकृता ।

अतएव नाटक-नाटिका-व्यायोग-समवकारेहामृगेषु तत्राधमानां प्रेक्षकाणां गतिर्नास्ति । ते प्रहसन-वीथीभाणादिषु रसमास्वादयन्तु नाम ।

वृद्धा धर्मपरायणेषु पुराणाख्यानात्मकेषु नाटकेषु दर्शका भवितुर्हन्ति ।[1] मोक्षार्थिनः साधवस्तपस्विनश्च मोक्षपरेषु नाटकेषु दर्शका भवन्ति ।[2] प्रेक्षक-संख्यानमत्र बाहुलकादेव ।

रसदृष्ट्यापि प्रेक्षकाणां विभागः कल्पनीयः । तथाहि वीररौद्रादिषु वीरोचितकथावृत्तेषु नाटकादिषु शूरा रुचिं भजन्ते ।[3]

अपरेऽपि भवन्ति प्रेक्षकाः —बालाः, मूर्खाः, स्त्रियश्च ।[4]

पूर्वोक्ताः सर्वविधा जना सर्वविधेषु रूपकेषूपस्थिता अभवन्निति भरतेन नाट्यशास्त्रस्य प्रथमाध्यायेऽपि निर्दशितम् । तथा हि—

त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनं
धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम् ।
निग्रहो दुर्विनीतानां विनीतानां दमक्रिया ॥
क्लीबानां धार्ष्टयजननमुत्साहः शूरमानिनाम् ।
अबुधानां बिबोधश्च वैदुष्यं विदुषामपि ॥
ईश्वराणां विलासश्च स्थैर्यं दुःखार्दितस्य च ।
अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम् ॥

ना० शा० १.१०९—१११

हितोपदेशजननं धृतिक्रीडासुखादिकृत् ॥
दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम् ।
विश्रान्तिजननं काले नाट्यमेतद् भविष्यति ॥ १.११३, ११४

इत्यनेन धार्मिकः, कामी, दुर्विनीतः, विनीतः, क्लीबः, शूरमानी,

---

१. धर्माख्यानपुराणेषु वृद्धास्तुष्यन्ति नित्यशः । ना० शा० २७.५९

२. मोक्षे चाथ विरागिणः । २७.५८

३. शूरास्तु वीररौद्रेषु नियुद्धेष्वाहवेषु च । २७.५९

४. एतेषां तोषो हास्यनेपथ्ययोर्विशेषेण सम्भवति ।

अबुधः, बुधः, ईश्वरः, दुःखी, अर्थपरायणः, उद्विग्नचेता इति प्रायः सर्वविधा जनाः प्रेक्षका बभूवुः। बालाः, युवकाः, वृद्धाः, स्त्रियश्च प्रेक्षका आसन्निति प्रागेव दर्शितम्।

नाटयेन कथं कियन्मात्रं सर्वविधानां दर्शकानां तुष्टिः सञ्जायेतेति कवेश्चिन्ता भवेत्। तेषां कृते प्रचुरं वेषद्वा सामग्री वर्ततेति तेषां प्रयत्न आसीत्। कस्मिंश्चिन्नाटके न सर्वत्र सर्वविधाः प्रेक्षका रमन्त इति निश्चप्रचम्।

भासस्तु स्वनाटकेषु प्राय आर्यमिश्रान् प्रेक्षकान् सूत्रधारमुखेन सम्बोधयति। तद्यथा अभिषेके, ऊरुभङ्गे, दूतवाक्ये, कर्णभारे, मध्यमव्यायोगे, पञ्चरात्रे, बालचरिते स्वप्नवासवदत्ते—एवमार्यमिश्रान् विज्ञापयामीति। अत्र समाजस्य श्रेष्ठा जना आर्यमिश्रा विद्वांसः।

कुन्दमालायां परिषदेव प्रेक्षकरूपेणाभिहिता—

**सूत्रधारः**—'आदिष्टोऽस्मि परिषदा' इत्यादि। अत्र परिषत्तु विद्वत्परिषद् गुणग्राहिणां रसिकानां सभा प्रतिभाति। मृच्छकटिके सैवार्यमिश्राणां परिषत्। अभिज्ञानशाकुन्तलेऽभिरूपभूयिष्ठा परिषत् सामाजिकानां वर्तते। अभिरूपास्तु

प्राप्तरूपाः स्वरूपा बुधमनोज्ञयोः॥ अमरकोषे, ३. ३. १३१

पुनश्चापरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् इत्यनेन गण्यमानप्रेक्षकाणां वैदुष्यं प्रथितमेव।

नागानन्दे प्रस्तावनायाम् —

"परिषदप्येषा गुणग्राहिणीति" रसिकानां समाजः मनसि कृतः। तत्र श्रीहर्षदेवस्य पादपद्मजीविनो राजानः प्रचुरायन्ते।

रङ्गपीठे पूर्वोक्तानां द्विविधप्रेक्षकाणामुपस्थितिर्वेणीसंहारस्य प्रस्तावनायामधोविधं प्रकल्पिता—

सूत्रधारः—(समन्तादवलोक्य, तत्रभवतः परिषदग्रेसरान् विज्ञाप्यं नः किञ्चिदस्ति।

अग्रेसरास्तु आर्यमिश्राः। शेषास्तु परिषद्। इतरे जना अवरकोटिकाः।

मालतीमाधवे तु विशिष्टप्रेक्षका विद्वत्परिषत् आर्यमिश्राश्च[1] संज्ञिता तत्रैवेतरप्रेक्षकाः सन्ति—भगवतः कालप्रियनाथस्य यात्राप्रसङ्गेन नाना-दिगन्तवास्तव्यो जनः।

अनेन सन्दर्भेण स्पष्टं प्रतिभाति यद् राजसभासु काव्यकलादीनां समीक्षकाः शाश्वतरूपेण बभूवुः। त एव नाटकीयानां विद्वत्परिषत् परिषद् वा। तस्यामार्यमिश्रा गुणग्राहिणश्चाग्रेसरा आसन्। तैः सह बहु-संख्यका अप्यवरकोटिका बालस्त्रीतरुणा अपि प्रेक्षका आसन् येषां तोषाय काञ्चिद् विशेष-सामग्रीं नातिसम्बद्धामपि निबध्नाति कविः।[2]

उत्तररामचरितस्य गर्भाङ्के समाज-सन्निवेश उपकल्पितः। तत्र प्रेक्षकेषु सब्रह्मक्षत्र-पौरजानपदाः प्रजा विशिष्यन्ते। अत्र ब्रह्म ब्राह्मणाः, क्षत्रं क्षत्रियाः, पौरा अवशिष्टाः पुरवासिजनाः, जानपदो देश-वासिजनाः प्रजाः सन्ति। अपरञ्च दर्शकानां वैविध्यमधोविधं ज्ञेयम्—

| नाटकानि | दर्शकाः |
|---|---|
| विदग्धमाधवम् | वृन्दावनदर्शनार्थिनः |
| ललितमाधवम् | वैष्णवाः |
| वल्लीपरिणयम् | जम्बूनाथस्वामि-फाल्गुनोत्सव-दर्शनार्थिनः |
| मृगाङ्कलेखा | भारतस्य सर्वेषां प्रदेशानां विज्ञाः |
| प्रभावती-परिणयम् | मैथिलमहाकवि-परिषद् |
| नलचरितम् | कामाक्षीपरिणयोत्सवे यात्रिकाः |
| कुशकुमुद्वतीयम् | हालास्य-चैत्रोत्सवे यात्रिकाः |
| शृङ्गारकोशभाणः | वरदराजवसन्तोत्सवयात्रिकाः |
| अनर्घराघवम् | पुरुषोत्तमयात्राकाले समागताः सभासदः |

१. सूत्रधारः—अ दिष्टोऽस्मि विद्वत्परिषदा यथा—अद्य त्वया पूर्ववस्तु-प्रयोगेण वयं विनोदयितव्या इति। तत्परिषदं निर्दिष्टगुणप्रबन्धे नोपतिष्ठावः।

नटः—भाव कतमे ते गुणा यानुदाहरन्त्यार्यमिश्रा भगवन्तो भूमिदेवाः।

२. ईदृशी सामग्री प्रवेशकविष्कम्भयोर्लक्षणीया। यथा नागानन्दस्य तृतीयाङ्कात् अभिज्ञानशाकुन्तलस्य षष्ठाङ्काच्च पूर्वं प्रवेशकयोः।

| | |
|---|---|
| विद्धशालभञ्जिका | राजसभा |
| दूताङ्गदम् | राजपरिषद् |
| कमलिनी-राजहंसम् | राजा, राज्ञी, राजसभा च |
| शृङ्गार-भूषणम् | विट-परिषद् । |
| सभापतिविलासम् | कनकसभापति-यात्रार्थिनः |
| लक्ष्मीदेवनारायणीयम् | विचित्रयात्रोत्सवे विविधप्रदेशानां विद्वांसः |
| प्रमुदितगोविन्दम् | राजसभा |
| सीताराघवम् | पण्डित-परिषद् |
| मणिमाला | नवरात्रे दुर्गादर्शनार्थिनो यात्रिकाः |
| पुरञ्जनचरितम् | विद्वांसः, राजकर्मचारिणः व्यापारिणश्च |
| रघुवीरविजयम् | ब्राह्मण-क्षत्रिय-वैश्यशूद्राः |
| वासवीपाराशरीयम् | वराहनरहरिसेवा-यात्रिणः |
| अमरमार्कण्डेयम् | शिवभक्ताः |
| वसुमती-चित्रसेनीयम् | हालास्यपतिसेवकाः |
| शृङ्गारतिलकभाणः | मीनापरिणय-महोत्सवयात्रिका भारतस्य विविधप्रदेशेभ्यः समागता। |
| धूर्तनर्तक-प्रहसनम् | नरकेसरिणोमहोत्सवस्य यात्रिकाः |
| वेदान्तविलासम् | विष्णोश्चैत्रोत्सव-यात्रिकाः |
| कान्तिमती-शाहराजीयम् | मध्यार्जुनेश-चैत्रोत्सवयात्रिकाः |
| सेवन्तिका-परिणयम् | सुब्रह्मण्य-दर्शनार्थिनः |
| शृङ्गारमञ्जरीशाहराजीयम् | पञ्चनदीश्वर-चैत्रमहोत्सव-यात्रिकाः |
| अद्भुतपञ्जरम् | महामघोत्सव-दर्शनार्थिनः |
| कमलिनी-कलहंसम् | विष्णु-यात्रा-दर्शनार्थिनः |
| जीवन्मुक्ति-कल्याणम् | मध्यार्जुन-प्रभुयात्रोत्सवस्य ब्रह्मनिष्ठ-सामाजिकाः । |
| मदनसंजीवनभाणः | काव्य-संगीत-साहित्यरसिका अद्वैत-विद्यापारीणा महायाज्ञिकाश्च । |

नाटकेषु या भूमिका प्रचरति सोत्तममध्यमाधमजनानां सम्मिश्रेण विलसति । प्रेक्षका अपि उत्तम-मध्यमाधमाः स्ववर्गसम्बन्धिनाट्यं सविशेष-मास्वादयन्ति। तेषां सर्वेषां रुचिविशेषं प्रज्ञानपरिधिं च सन्ध्यङ्गसन्ध्यन्तर-

वीथ्यङ्गादीनां प्रतिष्ठापने सम्यगवधाय कविः समेषां परितोषमावर्जयति। योरपेऽपि नाटचप्रेक्षका बहुविधा आसन्।[1]

न केवलं राज्ञां विद्वत्परिषदां, साधारणलोकानां वा कृते नाटचं प्रवर्तितमपि तु देवानां प्रीत्यर्थं नाटचमभवत्। ते देवा अध्यक्षा इव नाटचप्रवृत्तिं निर्दिशन्ति स्म।[2]

एतेषां सर्वविधानां प्रेक्षकाणां रागद्वेषादयः पूर्वरङ्गे स्तुति-गति-वाद्यादिभिः प्रशाम्यन्त इत्यभिनवगुप्तेन वर्णितम्।[3]

सुवाक्यमधुरैः श्लोकैर्नानाभावरसान्वितैः।
प्रसाद्य रङ्गं विधिवत्कवेर्नाम च कीर्तयेत्॥ ५.१६५

इति भारतीयां कारिकां विशदयन् प्राहाभिनवगुप्तः—

हृदयनिर्मलीकरणं रसास्वादोचितसंस्काराद् ग्रहणयोग्यताधानार्थं कुर्यात्। एतत्तु सामाजिकवर्गप्रसादनम्।



1. Noble men, beggars, court ladies and prostitutes, soldiers and poets, city apprentices, courtiers, rich merchants, pickpockets—all of them expected to be pleased in a dramatic hall.

—Millet : The Art of Drama P. 51

२. योरपेऽपि नाटचं देवानां प्रीत्यर्थं ई० शतीपूर्वमभवत्—
On the stage there were two Altars—one for liber other for the god in whose honour the festival was held.

—European Theories of Drama Page 45

३. ना० शा० २.१ अधिकृत्य भारती—प्रशान्तराग-द्वेषादिकाः सामाजिका इति।

## नाट्यकथायां पशुपक्षिणां साह्यम्

नाट्यकथाविकासे पशुपक्षिणां कर्तृत्वं विलसत्येव । तत् कियन्मात्रमिति समीक्षणीयम् । अन्यच्चात्र 'भावानुभावादिकृतरसवैचित्र्यं समादधानाः पशुपक्षिणः कश्चिदनन्यमेव सौन्दर्यराशिं वितन्वन्ति' इति विचारणा स्फुरति । उपमानमध्यमतयापि ते प्रेक्षकमानसपटले स्वगुणैर्नैसर्गिकरमणीयतामातन्वन्ति ।

**कालिदासीय-नाटकेषु**

अभिज्ञानशाकुन्तले तु प्रारम्भो मृगदर्शनाद् भवति । न केवलं दुष्यन्तोऽपितु शिवोऽपि मृगानुसारी अस्ति तत्र । सोऽयं मृगः —

> ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
> पश्चार्धेन प्रविष्टः शरपतनभयात् भूयसा पूर्वकायम् ।
> दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
> पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥

पुनराश्रममृगोऽयम् । न हन्तव्य इति श्रूयते तपस्विनः

> न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्
> मृदुनि मृगशरीरे तूलराशाविवाग्निः ।
> क्व बत हरिणकानां जीवितं चातिलोलं
> क्व च निशितनिपाता वज्रसाराः शरास्ते ॥१:१०

अत्र हरिणस्य मध्यमतया राजा कण्वाश्रमं शकुन्तलां च जानाति । परं कार्यं च ततः प्रवर्तते ।

अन्यस्यां दिशि शकुन्तला भ्रमरस्य मध्यमतया दुष्यन्तं स्वाभिमुखं लभते । तद्यथा

शकुन्तला--अहो सलिलसेकसंभ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते । ( भ्रमरबाधां निरूपयति )

राजा—( सस्पृहं विलोक्य )

> चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमती
> रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।

करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥१.२१

शकुन्तला—न एष धृष्टो विरमति। अन्यतो गमिष्यामि। (पदान्तरे स्थित्वा सदृष्टिक्षेपम्) कथमितोऽप्यागच्छति। हला परित्रायेथां मामनेन दुर्विनीतेन दुष्टमधुकरेणाभिभूयमानाम्।

सोऽयं मधुकरः कालिदासेन प्रतिनायकीकृत एव भृशं रोचते सहृदयेभ्यः।

अङ्कान्तं विधातुं कविरैश्वर्यशालिनमारण्यकं गजं दर्शयति—

तीव्राघातादभिमुखं तरुस्कन्धभग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसञ्जातपाशः।
मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं विरुजति गजः स्यन्दनालोकभीतः ॥१.३०

द्वितीयेऽङ्के विदूषकस्तु सेनापतिं जीर्णऋक्षस्य मुखे पतिष्यमाणं सम्भावयति।

तृतीयेऽङ्के 'शुकोदर सुकुमारे नलिनी पत्रे' इत्यादिना शुकपक्षी ध्यानपथगामी भवति। तत्रैव शकुन्तला तु विज्ञापनीया वर्तते यद् गौतमी तां द्रष्टुमागच्छतीति। नाभिधयापि तु अप्रस्तुतप्रशंसया चक्रवाकवधू-वियोगस्मारणेन कार्यं साध्यतेऽधोविधम्—नेपथ्ये

चक्रवाकवधूः आमन्त्रयस्व सहचरम्। उपस्थिता रजनी।

अत्र तु चक्रवाकवधूः शकुन्तला, सहचरो राजा, रजनी तु गौतमी एव।

चतुर्थेऽङ्के कोकिलास्तु वृक्षाणां दूता एव गृहीतास्तेषां प्रतिवचनानि प्रकटयितुम्। तद्यथा—

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः।
परभृतविरुतं कलं यथा प्रतिवचनीकृतमेभिरीदृशम् ॥४.१०

शकुन्तला-वियोगकाले मृग्यो मयूराश्च करुणोपचिताः सन्ति। यथा

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः ॥४.१२

तत्र शकुन्तलोटजपर्यन्तचारिणीं गर्भमन्थरां मृगवधूं सानुशयं प्रतिवेदयति।

पुत्रकृतकस्य मानवोचितभावना तु पृथगेव शस्यते। यथा—

काश्यपः—वत्से

यस्य त्वया व्रणविरोपणमिंगुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥४.१४

शकुन्तला—वत्स, किं सहवासपरित्यागिनीं मामनुसरसि । निवर्तस्व वत्स निवर्तस्व ।

अत्रातुरा चक्रवाकी तां भाविपतिवियोगं सूचयतीति प्रतिभाति । तदनु अनसूया वदति—

एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतरा
गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥४.१६

पञ्चमाङ्के शकुन्तला पुत्रकृतकदीर्घापाङ्गाय स्वहस्तेन जलदानं कथयति ।

अत एवाभिज्ञानशाकुन्तलस्य श्रेष्ठता पशुपक्षिभिः परिवारिकसम्बन्ध-सहृदयतयापि साधिता कविवरेण ।

षष्ठाङ्के तु मत्स्येन कृतः शकुन्तलोपकारो विवृतः । तस्योदराद-दङ्गुलीयकं निस्सृतं तदेव विस्थापितां तां नायकहृदये भूयिष्ठं स्थापयति ।

विप्रलम्भे तु नायकस्य मानसे ध्यातव्याः सन्ति मृगादयः । यथा

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
श्रृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥६.१७

अत्र कुसुमरसपाटच्चरो मधुकरो दृश्यते शकुन्तलावदनासवग्रह-णेप्सुः । तं राजा सुपथं दर्शयति—

प्रतिपालयति मधुकरीत्यादि ॥ ६.१९

बिम्बाधरं स्पृशसि चेद् भ्रमर प्रियाया—
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ ६.२०

इत्यनेन मधुकरस्य दण्डविधानम् ।

सप्तमेऽङ्केऽभिशाकुन्तलस्य दुष्यन्तः स्वपुत्रदर्शनेन विलसति । तत्र सिंहशिशुस्तस्य पुत्रस्य क्रीडनकं वर्तते[1]

1. प्रथमा—बालमृगेन्द्रं मुञ्च ।अपरं ते क्रीडनकं दास्यामि ।

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ ७.१४

तत्र मृत्तिकामयूरोऽपरं क्रीडनकं सर्वदमनाय वर्तते ।

अङ्केऽस्मिन् परतः

'कृष्णसर्पशिशुनेव चन्दनः' ॥७.१७
सर्पो भूत्वा दशति ॥७. २०/२१

इति तदेव समर्थयति

मालविकाग्निमित्र उपमानद्वारेण हस्ती प्रविशति प्रथमाङ्के । तद्यथा—

विदूषकः—मैवम् । चण्डि अन्योन्यकलहप्रिययोर्मत्त-हस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः ।

अत्र मयूरा मृदङ्गध्वनिमनु जीमूतस्तनितविशङ्की मायूरीमार्जनया मनांसि मदयति ।

मध्याह्ने कविः सूर्यतापाधीनान् पक्षिणः दर्शयति—

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद् वलभिपरिचयद्वेषिपारावतानि ।
बिन्दुक्षेपान् पिपासुः परिसरति शिखी भ्रान्तिमद् वारियन्त्रम् ।

अन्यच्च राज्ञ उपमानमस्ति गृध्रो विदूषकेण समीक्षितः —

भवानपि सूनापरिसरचर इव गृध्र आमिषलोलुपो भीरुकश्च ।[1]

राजा वसन्त उन्मत्तानां कोकिलानां श्रवणसुभगं कूजितं वर्णयति । तदा द्विरेफास्तु अञ्जनीभूताः ।[2]

अप्रस्तुतप्रशंसया भ्रमरा अधिक्षिप्ता अधोदिशा—

बकुलावलिका — मुग्धे भ्रमरसम्पातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसयितव्यः । अपरञ्च—

विदूषकः —यो विडालगृहीतायाः परभृतिकायाः ।[3]

---

१. माल २. १३/१४
२. माल० ३.४,५
३. माल० ४.१/२

इरावती—व्याधजनगीतगृहीतचित्तयेव हरिण्या एतन्न विज्ञातं मया ।[1]

राजा—कष्टं कष्टम् ।

मधुरस्वरा परभृता भ्रमरी च विबुद्धचूतसंगिन्यौ ।।४.२

सरीसृपस्य व्यपदेशेन किं किं न साधयति विदूषकः । स तु राजानं वक्ति—सर्पेणास्मि दष्टः ।

हरिणनिवारणव्यपदेशेन नायकयो रहो निष्पादितम् । तद्यथा—

विदूषकः —बकुलावलिके, एष बालाशोकवृक्षस्य पल्लवानि लंघयति हरिणः । एहि, निवारयाम एनम् ।

सोऽयं विदूषको बलीवर्द इवाभिमतो निपुणिकया ।[2]

विदूषकः —सर्पो म उपरि पतितः इति भीतः

बकुलावलिका राजानं प्रति कथयति—इह कुटिलगतिः सर्प इव दृश्यते ।

अप्रस्तुतप्रशंसया लोकोक्तिद्वारेण दर्दुराः स्मृताः । दर्दुरा व्याहरन्तीति किं देवः पृथिव्यां वर्षितुं विरमति ।[3] विदूषकोऽपि तदेव समर्थयति । यथा—

अहो अनर्थः सम्पतितः बन्धनभ्रष्टो गृहकपोतो विडालिकाया आलोके पतितः ।[4]

जयन्धरस्तु पिङ्गलवानरस्य कथायाः सूत्रधारीकृतः ।[5]

पञ्चमेऽङ्के नायकः परभृतव्याहारेषु रसवान् दृश्यते । प्रणयादर्शाश्चक्रवाकयुग्मेषु दृश्यन्ते—

अहं रथाङ्गनामेव प्रिया सहचरीव मे ।५.९

अत्रैव पराक्रमादर्शोऽपि गजपता अवलोक्यते—

ननु कलभेन यूथपतेरनुकृतम् ।५.१६/१७

विक्रमोर्वशीयस्य प्रथमाङ्के जवातिरेको गरुडपराभवेन संस्तुतः । अश्वास्तत्र साधनत्वेन स्मृताः । रथस्तत्र हरिणकेतनः ।[6]

---

१. माल० ३.१९/२०

२. माल० ४.१५/१६

३. माल० ४.१५/१६

४–५. माल० ४.१६/१८

६. विक्रम० १.३/६

उपमानद्वारेण तत्र राजहंसी चातकश्च प्रेक्षकान् रोचयतः ।

'सूत्रं मृणालादिव राजहंसी' ।१.२०

अतस्तावत् त्वया दिव्यरसाभिलाषिणा चातकव्रतं गृहीतम् ।२.३/४

— चतुर्थेऽङ्के नीलकण्ठा वियोगोन्मत्तस्य नायकस्य वन्दिनः सन्ति ।[1] नायकः प्रणयिन्याः स्तनांशुकं शुकोदरश्यामं पश्यति ।[2] तदनु स शिखिनं प्रियावृत्तं पृच्छति—

नीलकण्ठ धृतोत्कण्ठा वनेऽस्मिन् वनिता त्वया
दीर्घापाङ्गा सितापाङ्ग दृष्टा दृष्टिक्षमा भवेत् ।

शिखी तूत्तरमदत्त्वैव नर्तितुं प्रवृत्तः । स तु परव्यसननिवृत्तो न प्रश्नार्हः ।

परभृता तु नायकेन साह्यभूता दृश्यते । स तां सम्बोधयति—

त्वां कामिनो मदनदूतिमुदाहरन्ति
मानावभङ्गनिपुणं त्वममोघमस्त्रम् ।
तामानय प्रियतमां मम वा समीपं
मां वा नयाशु कलभाषिणि यत्र कान्ता ।।४.११

स आकाशभाषितेनेव तस्याः प्रश्नं शृणोति—

कथं त्वामेवमनुरक्तं विहाय गता इति । प्रश्नस्योत्तरं नायकस्तां श्रावयति ।

अपरं च नायको राजहंसस्य कूजितं श्रुत्वा तानसहायान् प्रतीत्यापि स तं चोर इति मनसि निधाय परीप्सति—

'हंस प्रयच्छ मे कान्ताम्' इत्यादि

चक्रवाकोऽपि कः क इत्युक्त्वासहायतां प्रकटयति । स मधुकरे प्रणयं करोति । तेन नैव दृष्टेति परिणमयति ।

नायकस्य गजपतिना व्यवहारस्तु परमरमणीय एव । गजपतौ स साह्यमनुभवति । तद्यथा—

मदकल, युवतिशशिकला गजयूथप यूथिकाशबलकेशी ।
स्थिरयौवना स्थिता ते दूरालोके सुखालोका ।।४.२४

---

१. विक्रम ४.६

२. विक्रम ४.७

( आकर्ण्य सहर्षम् ) अहह अनेन भवतः स्निग्धमन्द्रेण गर्जितेन प्रियोपलम्भशंसिना समाश्वासितोऽस्मि । साधर्म्याच्च त्वयि मे भूयसी प्रीतिः ।

मामाहुः पृथिवीभृतामधिपतिं नागाधिराजो भवान्
अव्युच्छिन्न-पृथुप्रवृत्ति भवतो दानं ममाप्यर्थिषु ।
स्त्रीरत्नेषु ममोर्वशी प्रियतमा, यूथे तवेयं वशा
सर्वं मामनु ते, प्रियाविरहजां त्वं तु व्यथां मानुभूः ।४.२५

हृदयहीन एव हरिणीपतिर्बोध्यते नायकेनोपसृत्याञ्जलिं बद्ध्वा—

अपि दृष्टवानसि मम प्रियां वने
कथयामि ते तदुपलक्षणं शृणु ।
पृथुलोचना सहचरी यथैव ते
सुभगं तथैव खलु सापि वीक्षते ।४.३२

कथमनादृत्य मद्वचनं कलत्राभिमुखं स्थितः ।

विक्रमोर्वशीयस्य पञ्चमेऽङ्के गृध्राक्षेपेण राजकीयो मणिर्ह्रियते—एष एष खलु मुखकोटिलग्नहेमसूत्रेण मणिना लिखन्निवाकाशं परिभ्रमति । स तु गृध्रो विहगतस्करो विहगदस्युरिति च राज्ञाभिहितः । विदूषकस्तं रत्नकुम्भीलक इति संजानीते ।

कविस्तु रमणीयं पक्षिणं प्रेक्षकाणां मानसे प्रतिफलयितुमेव विक्रमोर्वशीये कुमारमुखेन श्रावयति—

यः सुप्तवान् मदङ्के शिखण्डकण्डूयनोपलब्धसुखः ।
तं मे जातकलापं प्रेषय मणिकण्ठकं शिखिनम् ।५.१३

अपरं च राजा विचरितमृगयूथानि वनान्याश्रयिष्ये इति प्रतिजानीते । स प्रसङ्गेऽस्मिन् गन्धद्विपकलभं भुजङ्गशिशुं च स्मरति ।

अन्येषु श्रेष्ठाभिनेयकाव्येषु भूयस्तरं पशुपक्षिणां साह्यं कविभिरुन्मेषितम् । तदधोविधं विलसति—

कर्णभारे—वज्रमुखकीटः

दूतघटोत्कचे—वारणः १.३ गजः १.३०, गजेन्द्रः १.३३

पञ्चरात्रे—गोहरणकथा विलसति द्वितीयेऽङ्के ।

अभिषेके—वालिस्तु शाखामृग एव हन्यते । हनुमान् वानरो बहुविधं पराक्रमते । शुकसारणौ वानरीकृतौ । जटायुस्तु गृध्र एव पात्रीकृतः ।

बालचरिते—दानवः पशुरूपा विलसन्ति । तत्र कालियनागस्य दमनम् ।

अविमारके—व्याघ्रहननम्, गज-दमनम् ।

प्रतिमा—मारीचस्य स्वर्णमृगरूपधारणम् ।

प्रतिज्ञायौगन्धरायणे—कृतको नीलहस्ती प्रयुज्यते । नलागिरेरुपद्रवः, भद्रवत्याः साह्यम्

स्वप्नवासवदत्ते—भ्रमरोत्पातः, विश्रब्धा हरिणाश्चरन्ति, कपिलानि गोकुलधनानि । १.१२ खगा वासोपेताः । १.१६ मधुमद कला मधुकराः । ४.३ सारसपंक्तिः, भुजगश्च । ४.२

चारुदत्ते—हस्तिन आक्रमणम्

कुन्दमालायाम्—गृहहरिणो ( सीता ), हरिणेक्षणा ( सीता ) ३.१४, कलहंसीगीतरम्योपकण्ठा (गोमती) मधुव्रत-मदवारणौ । ४.६

मृच्छकटिके—वसन्तसेनाया हस्ती

मत्तविलासे—कपालचोरः श्वानः

रत्नावल्याम्—(१) सारिका (२) वानरश्च

प्रियदर्शिकायाम्—भ्रमराः

नागानन्दे—(१) नागः (शंखचूडः) तस्य माता च (२) गरुडः

वेणीसंहारे—नकुलेनाहिशतकवधः इति स्वप्नकथा । अश्वत्थामा (गजः ) हतः

मालती-माधवे—मकरन्दो मदयन्तिकां सिंहाद् रक्षति ।

उत्तररामचरिते पशुपक्षिणां रामादिभिः सह सम्बन्धो रमणीयतमो वर्तते । पञ्चवटीप्रदेशे सीता स्वपालितकरिणो रक्षणार्थं राममाह्वयति ।[1] रामोऽपि तत्र स्वबान्धवा इति मृगान् निभालयतिः । भवभूति करिकलभकं मानवरूपेण दर्शयति प्रेक्षकान् । यथा—

> लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः
>
> पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः ।

---

१. गोदावरीमवतीर्यं सम्भावयतु देव्याः पुत्रकं देवः इति वासन्ती रामं कथयति । ३.१४/१५। अवियुक्त इदानीं दीर्घायुरनया सौम्यदर्शनया भवतु इति सीता वदयति ।

सेकः सीकरिणा करेण विहितः कामं विरामे पुन-
र्यत्स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥३.१६

तदनु वासन्ती रामं दर्शयति वधूसखं शिखण्डिनम्

अनुदिवसमवर्धयत् प्रिया ते
यमचिरनिर्गत-मुग्धलोलबर्हम् ।
मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधूसखः शिखण्डी ॥३.१८

रामः —भ्रमिषु कृतपुटान्त-र्मण्डलवृत्ति चक्षुः
प्रचलितचटुलभ्रूताण्डवैर्मण्डयन्त्या ।
करकिसलयतालैर्मुग्धया नर्त्यमानं
सुतमिव मनसा त्वां वत्सलेन स्मरामि ॥३.१९

हन्त, तिर्यञ्चोऽपि परिचयमनुरुन्धन्ते ।

कतिपयकुसुमोद्गमः कदम्बः
प्रियतमया परिवर्धितोऽयमासीत् ।
स्मरति गिरिमयूर एष देव्याः
स्वजन इवात्र यतः प्रमोदमेति ॥३.२०

वासन्ती — अत्र स्थिता तृणमदाद् वनगोचरेभ्यः
सीता ततो हरिणकैर्न विमुच्यते स्म ॥३.२१

'त एव जातनिर्विशेषा मृगपक्षिणः पादपाश्चेति सीतया ते पशु-पक्षिणो नाटकीयेषु परिगणिताः ।

किं न वासन्त्या साधु प्रोक्तम्—

ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।
कलमविरलं रज्यत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥३.२४

नायकैः सह तेषां स्वजन-सम्बन्धो रामेणापि परिगृहीतोऽधोविधम् —

करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान् मैथिली यानपुष्यत् ।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्थ प्रस्रवोद्भेदयोग्यः ॥३.२५

वासन्ती तदेव समर्थयति—

सा हंसैः कृतकौतुका चिरमभूद् गोदावरी सैकते ।३.३७

तत्र कविना दृष्टम्—

नीवारौदनमण्डमुष्णमधुरं सद्यः प्रसूतप्रिया-
पीतादभ्यधिकं तपोवनमृगः पर्याप्तमाचामति ।४.१

एतेषु पशुपक्षिषु नायकानां बृहत्तरपरिवार एव शोभत इति परिणमति जनकस्य प्रमाणवचनेन—

नूनं त्वया परिभवं च वनं च घोरं
तां च व्यथां प्रसवकालकृतामवाप्य ।
क्रव्याद्गणेषु परितः परिवारयत्सु
संत्रस्तया शरणमित्यसकृत् स्मृतोऽहम् ॥४.२

अत्र सिंहादयः सन्ति दौवारिकाः । निसर्गोपात्तस्वभावा इमे पशुपक्षिणः । तेषां साह्यं चित्रयन्तः सन्दर्भा नाटकेषु कवीनां तां योजनां प्रमाणयन्ति यथाभिनेयार्थेषु नायकादीनामनुषङ्गो विश्वव्यापिमहिम्ना चराचरमभिप्रैति, अथ च तेषां महानुभावेन लोकान् रञ्जयति । योरपेऽपि पशूनां साह्यं नाटक आधुनिकयुगेऽपि सस्पृहं वर्ण्यते ।

भरतकोषे हस्तितुरंगादानां पशुपक्षिणां[2] रङ्गप्रवेशयोग्यता मुख्यपात्रोपकारिता च वर्णिते ।



---

१. बर्नार्डशा १९१६ ई० वर्षे Androcles and the Lion इत्यभिहितं नाटकं प्रणीतवान्, यत्र सिंहो मानवस्य साह्यं करोति ।
Sobel : The Theatre Hand Book P.51

२. भरतकोषे, पृ० ९५६

## अङ्के कार्यस्थल्या आयामो वैचित्र्यं च

कस्यचिदङ्कस्य कार्याणि यदि नाम परस्परं दूरस्थेष्वपि प्रदेशे कृतानि सन्ति तर्हि सर्वाणि तानि परस्परं दूरस्थान्यपि स्थानानि रङ्गे दर्शनीयानि भवन्ति। स्वल्पकाल एकाहे वा दूरदूरतरं गमनं भारतीय-कल्पनाजगति सम्भावितमेव। देवा देवर्षयोऽवतारपुरुषा रावणकुबेरादय विमानाधिकारिणश्चैकाहे त्रिलोकमपि विचरितुं समर्था सन्तीति पुराणवादो नाटकादिषु काव्येषु वर्णितः। अभिज्ञानशाकुन्तले दुष्यन्त इन्द्रलोकाद् मारीचाश्रमं यावद् विमानेनावगाहते। अस्मिन्नन्तराल आकाशगङ्गाप्रदेशः ग्रहनक्षत्रलोकः परिवाहवायुलोकश्च, किंपुरुषपर्वतलोकश्च सन्ति। तत्र दैर्घ्येण विस्तारेण च महोच्छ्रयोऽपि महिमान भजते।

अभिषेकनाटके भारतोयसमुद्रतटाल्लङ्कां यावत् प्रदेशश्चतुर्थेऽङ्के रङ्गपीठे दर्शितः। बालचरिते मथुरातो गोकुल यावत् प्रदेशः प्रथमाङ्के रङ्गपीठपरिधौ सन्निवेशितः। अन्तरालेऽस्मिन् यमुनानदी तस्या दक्षिणवामभागयोरेकयोजनं यावद् विस्तृता भूमिर्गृहीता।

वेणीसंहाररस्य चतुर्थेऽङ्के समग्रं कुरुक्षेत्रमेव रङ्गपीठं वर्तते। इतोऽप्यधिकं बालरामायणे दशमेऽङ्के रङ्गपीठं लङ्कातः प्रभृति हिमालयमयोध्यां च यावत् सम्पूर्णं भारतमेव सङ्कल्पितं राजशेखरेण। वस्तुत एकस्मिन्नेव रङ्गपीठेऽनेकदृश्यानां कृते बहूनां स्थलीनामवस्थितिः कल्पनीया।

यथा मृच्छकटिकस्य दशमेऽङ्के--

श्मशान-दृश्यं तदनु महाराजप्रासादं दक्षिणेन धूताया अग्निप्रवेशदृश्यम्। प्रथमतो द्वितोयाभिगमनं परिक्रमणमात्रेण सम्भवतीति नाट्यनिर्देशेन स्पष्टमेव—

(इति सर्वे परिक्रामन्ति)

चारुदत्तः (आकर्ण्य सहसोपसृत्य)

### कार्यस्थली-वैचित्र्यम्

नाटकेषु कार्यस्थल्या महत्त्वं वर्तते। कवयो नैकशः पात्रमुख उपमानादीनि निकटस्थवस्तुभ्यो निदधाति। स्थलविशेषस्य वर्णनीयानि वस्तूनि

कविर्नाटके सन्निवेशयतीति काव्यगौरवदृशा स्थली-चयने कवेरवधानं स्पृहणीयम् ।[1]

नाटकीयकार्याणि त्वङ्केषु पृथक्-पृथग् गृह्यन्ते । तत्र किमपि कार्यं नायकस्य गमनागमनयोर्दीर्घत्वमपेक्षेत । यथाभिज्ञानशाकुन्तलस्य सप्तमेऽङ्के दुष्यन्तो महेन्द्रलोकान् मारीचाश्रमं यावत् उड्डीयते । सहस्रक्रोश-पर्यन्ता यात्रा वर्णनवैचित्र्येण सामाजिकाननुरञ्जयत्येव । अयं दीर्घायामो यात्रायाः सर्वशः कार्यस्थली नास्त्येव । अङ्केऽस्मिन् मुख्यं कार्यं शकुन्तलया दुष्यन्तस्य मिलनमेव मारीचाश्रम एव सम्पाद्यते । अत एव कार्यस्थली मारीचाश्रम एव । तथैव भासस्य बालचरितस्य प्रथमाङ्के वसुदेवो मथुरातो गोकुलं यावद्यमुनां विगाह्य गच्छति । तत्र गोकुले वटवृक्षस्याधो नन्देन सह कार्यं सम्पादयति । अत्र वटवृक्ष एव प्रधानकार्यांशस्य सम्पादन-भूमिः कार्यस्थली वर्तते ।

भरतेन नाट्यशास्त्रे कक्ष्या-विभागप्रकरणे या कार्यस्थली वर्णिता तदनुसारेण त्रैलोक्ये सर्वेषु स्थानेषु दिव्यादिव्यादीनां पात्राणां कार्याणि नाटकेषु दर्शनीयानि सन्ति । यथा—

कक्ष्याविभागे ज्ञेयानि गृहाणि नगराणि च ।
उद्यानारामसरितस्त्वाश्रमा अटवी तथा ॥
पृथ्वी सागराश्चैव त्रैलोक्यं सचराचरम् ।
वर्षाणि सप्तद्वीपाश्च पर्वता विविधास्तथा ॥
अलोकश्चैव लोकश्च रसातलमथापि च ।
दैत्यनागालयाश्चैव गृहाणि भवनानि च ॥
यत्र वार्ता प्रवर्तेत तत्र कक्ष्यां प्रवर्तयेत् ॥ १३.४-७

भरतेनोदाहृतानि स्थलानि संस्कृतनाटकेष्वधोविधं दृश्यन्ते—

---

१. गङ्गायमुना-सङ्गमेऽवस्थिता प्रतिष्ठानपुरी कार्यस्थली विद्यते विक्रमोर्वशीयस्य तृतीयाङ्कस्य । तत्राधोविधश्श्लोकः स्थानबलेन प्रवर्तते—

न तथा नन्दयसि मां सख्या विरहिता तया ।
सङ्गमे दृष्टपूर्वेव यमुना गङ्गया विना ॥ २-१४

मृच्छकटिके ५.११/१२ विदूषकचेटयोः संलापे वाटिकास्थली कार्य्य-मुपनीविता ।

**आश्रमपदं वनस्थली वा**—स्वप्नवासवदत्तस्य प्रथमाङ्कस्य दृश्यस्थली आश्रमपदं वनमेवाद्यन्तं वर्तते। वनं समागता पद्मावती तत्र लावाणक-वनस्य दाहं ब्रह्मचारिमुखेन शृणोति। सा तत्रैव वासवदत्तां न्यास-रूपेण गृह्णाति।

अविमारकस्य चतुर्थाङ्कस्य कार्यस्थली अरण्यम्। बालचरितस्य प्रथमो-ऽङ्को वृक्षस्याधः[1] प्रतिमानाटकस्य चतुर्थोऽङ्कः, पञ्चमः, सप्तमश्चाश्रमभूमिः। सैवाभिज्ञानशाकुन्तलस्य प्रथमादारभ्य चतुर्थमङ्कं यावदाश्रमभूमिः कार्यस्थली विलसति। सप्तमाङ्के मारीचाश्रमः पृष्ठभूमिं प्रस्तौति नायकयोः पुनर्मिलनस्य। सैषाश्रमभूमिरुत्तररामचरिते, कुन्दमालायां च भूयिष्ठं विलसति।

**प्रमदवनम्**—स्वप्नवासवदत्तस्य द्वितीयेऽङ्के कार्यस्थली प्रमदवनं वर्तते। तत्रैव माधवीलतामण्डपस्य पार्श्वे पद्मावती कन्दुकेन क्रीडति। तृतीयेऽङ्केऽपि कार्यस्थली प्रमदवनमेव विद्यते।[2] तत्र सा प्रियङ्गुशिला-पट्टक उपविशति। चतुर्थाङ्कस्य दृश्यस्थली प्रमदवनमेव।[3]

अभिषेकस्य द्वितीयाङ्कस्य, पञ्चमाङ्कस्य च कार्यस्थली प्रमदवनमेव।

**समुद्रगृहकम्**—स्वप्नवासवदत्तस्य पञ्चमाङ्कस्य दृश्यस्थली समुद्र-गृहकमस्ति।

**देवालयोऽग्निगृहञ्च**—प्रतिमानाटकस्य तृतीयोऽङ्कः, प्रतिज्ञायौगन्ध-रायणस्य तृतीयोऽङ्कश्चदेवालय-परिसरे प्रवर्तते।

**राजप्रासादः चतुःशालञ्च**—स्वप्नवासवदत्तस्य षष्ठाङ्कस्य दृश्य-स्थली राजप्रासाद एव।[4] अविमारकस्य प्रथमाङ्कस्य कार्यस्थली चतुश्शालम्। तृतीयाङ्कस्य कार्यस्थली राजप्रासादः पञ्चमाङ्कस्य षष्ठा-ङ्कस्य कार्यस्थली कन्यान्तःपुरप्रासादो राजप्रासादश्च।

---

१. न्यग्रोधपादपस्याधस्तात्।

१. वासवदत्ता कथयति—इहागतास्मि प्रमदवनम्।

२. चेटी—किं निमित्तं भर्तृदारिका प्रमदवनमागता।
विदूषकः—प्रचितपतितबन्धुजीवकुसुमविरलपातरमणीय प्रमदवनम्। इत-स्तावद् भवान्।

१. राजप्रासादस्य बहवो भागा बभूवुः। तथाहि
(क) उपस्थानम् (ख) चतुश्शालम् (ग) कन्यान्तःपुरम्।

प्रतिमानाटकस्य प्रथम-द्वितीय-षष्ठाङ्का अभिषेकस्य तृतीयोऽङ्कः प्रतिज्ञायौगन्धरायणस्य प्रथमोऽङ्कः, द्वितीयोऽङ्कश्च राजप्रासादेऽनुष्ठिताः।

बालचरितस्य द्वितीयाङ्कः, पञ्चमोऽङ्कः राजप्रसादे प्रवर्तेते। अभिज्ञानशाकुन्तलस्य पञ्चमाङ्को राजप्रासादे न्यस्तः।

**नगरपरिसरः**—प्रतिमानाटकस्य तृतीयोऽङ्कः, अभिषेकनाटकस्य प्रथमोऽङ्कश्च नगर-परिसर आविर्भवतः।

**युद्ध-शिविरम्, आयुधागारम्**—अभिषेके चतुर्थोऽङ्कः, प्रतिज्ञायौगन्धरायणस्य प्रायः सर्वेऽङ्का युद्धस्थलीमेवाधिकुर्वन्ति।

**नगरम्**—अभिषेकस्य षष्ठाङ्कस्य।

**पर्वतशिखरम्**—बालचरितस्य तृतीयोऽङ्कः पर्वतशिखरे विलसति।

**यमुनाह्रदः**—बालचरितस्य चतुर्थोऽङ्को यमुनाह्रदे दृश्यते।



## रङ्ग-विधानम्

नाट्यार्थं भवति रङ्गमण्डपः। रङ्गमण्डपस्य त्रयो भागाः सुनिश्चिताः—नेपथ्यम्, रङ्गपीठम्, सभास्थानं च। रङ्गपीठे पात्राणि नाट्यं, प्रस्तुवन्ति, नेपथ्ये त आत्मानं नाट्यार्थमनुकार्यस्य सज्जां गृह्णन्ति, सभास्थानं सामाजिका अलंकुर्वन्ति चेति भागत्रयस्य साधारणतो विशिष्टोपयोगः।

### नेपथ्यम्

रङ्गपीठस्य पश्चाद्भूमिर्नेपथ्यं कुशीलवकुटुम्बस्य गृहम्। ततो द्वारद्वयेन पात्राणां रङ्गे प्रवेशः स्वकार्यं सम्पाद्य अथवान्यकार्यार्थं च पुनर्नेपथ्ये निष्क्रमणं क्रमशो भवति। औदीच्या दक्षिणद्वारेण प्रविशन्ति, उत्तरद्वारेण निष्क्रामन्ति च। दाक्षिणात्यानां च विपरीता प्रवृत्तिरित्यभिनवगुप्तेन प्रतिपादितम्।[1]

नेपथ्यं न केवलं सज्जाभूमिरेव पात्राणां कृते भवति, प्रत्युत तत्र रङ्गस्थ-पात्राणां कृते एतादृशं कार्यं विधीयते यद्रङ्गपीठे दर्शयितुं न योग्यम्, यस्य वा कर्ता रङ्गं प्रवेष्टुं न योग्यः। तद्यथा वेणीसंहारस्य तृतीयाङ्कस्यान्तिमे भागे नेपथ्ये भीमो दुःशासनं हन्ति, तस्योरस्तो रुधिरं च पिबति। तत्रैव नेपथ्ये प्रवेशानर्हस्य देवस्य अशरीरिणी वाणी भवति—

'महात्मन् भारद्वाजसूनो, न खलु सत्यवचनमुल्लंघयितुमर्हसि।'

वस्तुतो रङ्गपीठाद् बहिर्यत्र कुत्रापि यत् किञ्चिन्महत्त्वपूर्णं रङ्गस्थ-पात्राणां कृते साम्प्रतिकं विधीयते, तत्सर्वं 'नेपथ्ये' इति कृत्वा पात्राणि प्रेक्षकांश्च श्राव्यते। तद्यथा अभिज्ञानशाकुन्तलस्य चतुर्थेऽङ्के दुर्वासा नेपथ्ये शापं ब्रवीति किन्तु रङ्गे स्थितानसूया पुरोऽवलोक्य तं पश्यति। अतएवात्र नेपथ्ये इति रंगपीठात् पृष्ठतो नास्त्येव प्रत्युत समक्षं विद्यते।

वेणीसंहारे पञ्चमेऽङ्के रङ्गपीठाद् बहिरेव सूतः कौरवपक्षीयान् योधान् सूचयति—

( नेपथ्ये कलकलानन्तरम् )

'भो भोः योधाः, निवेदयन्तु भवन्तः कौरवेश्वराय, इदं महत्कदनं प्रवृत्तम्' इत्यारभ्य

शून्येनैव रथेन याति शिविरं शल्यः कुरूञ्शल्ययन्। ५.१०

नेपथ्यस्य कार्यपरिधिरधोविधं पर्यालोच्यः —

---

१. ना० शा० १३.३७ अधिकृत्य।

**नेपथ्यं रङ्गस्य भाग इव—**

( १ ) अभिज्ञानशाकुन्तले नेपथ्यस्थास्तपस्विनो मृगानुसारिणं राजानं पश्यन्ति[1]। तत एव राजानं वदन्ति—

'भो भो राजन्, आश्रममृगोऽयं न हन्तव्यः' इति। सूतो रङ्गपीठादेव तान् पश्यति तेषां वचांसि शृणोति च। स राजानं वदति—आयुष्मन्, अस्य खलु ते बाणपातवर्तिनः कृष्णसारस्यान्तरे तपस्विन उपस्थिताः। पश्चात् तपस्विनः प्रविशन्ति। षष्ठाङ्कस्य विष्कम्भके कञ्चुकी नेपथ्येऽवस्थितो मधुकरिकाया वचनं शृणोति श्रुत्वा च तां तर्जयितुं रङ्गं प्रविशति।

(२) मुद्राराक्षसे प्रथमाङ्कात्पूर्वं नेपथ्ये वर्त्तमानश्चाणक्यः सूत्रधार-वचनं श्रुत्वा नेपथ्य एव वदति 'आः, क एष मयि स्थिते चन्द्रमभिभवितु-मिच्छति।' तदनन्तरं रङ्गं प्रविशति।

(३) मृच्छकटिकस्य दशमेऽङ्के नेपथ्ये पौरा रङ्गस्थं शर्विलकं प्रति-वदन्ति व्यापादयत। किं निमित्तं पातकी जीव्यते। अन्यच्च ते नेपथ्यवर्तिन एव वदन्ति—आर्य चारुदत्त, मुञ्चमुञ्च। व्यापदयामैतं शकारम्।

(४) ऊरुभङ्गे रङ्गस्थपात्रं बलदेवं नेपथ्यादेव दुर्योधनः सम्बोधयति—प्रसीदतु, प्रसीदतु भगवान् हलायुधः। तत्रैव नेपथ्ये वर्तमानं दुर्योधनं बलदेवः सम्बोधयति।

(५) रंगस्थपात्राणि नेपथ्यपात्राणां विषये क्वचिद्भृशमेव सकौतुका नेपथ्यद्वारेणावलोकनमार्गेण जालमार्गेण च नेपथ्यं परिलक्ष्य प्रेक्षकेभ्यः स्वानुभूतिं प्रकटयन्ति। यथा विक्रमोर्वशीयस्य तृतीयाङ्कस्य विष्कम्भके—कञ्चुकी—( नेपथ्याभिमुखमवलोक्य) अये इत एव प्रस्थितो देवः—

परिजनवनिताकरार्पिताभिः परिवृत एष विभाति दीपिकाभिः।
गिरिरिव गतिमानपक्षसादादनुतटपुष्पित-कर्णिकारयष्टिः॥ ३.३
यावदेवमवलोकनमार्गे स्थितः प्रतिपालयामि।

(६) नेपथ्ये वर्त्तमाना जना रङ्गस्थपुरुषेण सम्पर्कं साधयन्तः तं सम्बोधयन्ति। यथा विक्रमोर्वशीयस्य चतुर्थेऽङ्के कश्चिन्मुनिः नेपथ्ये स्थितो राजानं ब्रवीति। राजापि तस्य वचनं श्रुत्वा तमालोकयति प्रतिवदति तथैवाभिज्ञानशाकुन्तलस्य चतुर्थेऽङ्के नेपथ्ये दुर्वासा ब्रवीति, अनसूया च पुरोऽवलोक्य तं पश्यति।

---

१. अत्र नेपथ्यं तु रङ्गपीठस्य दूरस्थप्रदेश एव, न तु पात्राणां सज्जास्थानम्।

मालतीमाधवे पुनः

कलहंसः—(उपसृत्य) नाथ दिष्ट्या वर्धसे। प्रवृत्ता खल्वितोमुखं मालती।

माधवः—अपि सत्यम्।

मकरन्दः—किमश्रद्दधानः पृच्छसि। न केवलं प्रवृत्ता, प्रत्यासन्ना च वर्तते। तथाहि—

अस्माकमेकपद एव मरुद्विकीर्ण-
जीमूतजालरसितानुकृतिर्निनादः।
गम्भीरमङ्गलमृदंगसहस्रजन्मा
शब्दान्तरश्रवणशक्तिमपाकरोति ॥६,४

तदेहि जालमार्गेण पश्यामः।

अयं जालमार्गः प्रवेशद्वारतो वामभाग आसीत्।

(७) श्रोतारो वक्तारश्च सर्वेऽदृश्या एव कार्यार्थं महत्त्वपूर्णं किञ्चिद्वदन्ति। यथा वेणीसंहारे पञ्चमेऽङ्के—

( नेपथ्ये कलकलं कृत्वा )

भो भोः कौरवबलप्रधानयोधाः, अलमस्मानवलोक्य भयादितोगन्तुम्। कथयन्तु भवन्तः कस्मिन्नुद्देशे सुयोधनस्तिष्ठतीति। पश्चाद् वक्तारौ भीमार्जुनौ रंगं प्रविशतः। षष्ठेऽङ्के राक्षसो स्ववक्तव्यस्यार्धं नेपथ्य उक्त्वा शेषं रङ्गं प्रविश्य युधिष्ठिरं श्रावयति।

**नेपथ्ये प्रतिहारभूमिः**

प्रतिहारी दौवारिकश्च प्रतिहारभूमौ तिष्ठतः। इयं प्रतिहारभूमिर्नेपथ्ये प्रकल्पिता। तत्र स्थितो दौवारिकः (प्रविश्य) जयतु भर्ता (दुष्यन्तः)। 'एतौ द्वौ ऋषिकुमारकौ प्रतिहारभूमिमुपस्थितौ' इति वदति। स निष्क्रम्य ताभ्यां सह प्रविशति।

नेपथ्यं त्वपरं रङ्गपीठमिवाभाति। तत्तु पात्राणां कार्यस्थली इवापि प्रयुज्यते। तत्र कृतानि कार्याणि न दृश्यन्ते प्रेक्षकैः, किन्तु बहुशः सूच्यन्ते रङ्गस्थपात्रैः, नेपथ्यगतैर्जनैश्च। नेपथ्यस्य कार्यस्थली रङ्गपीठे दर्शितेभ्यः स्थानेभ्यो बहिरेव समीपस्थं दूरस्थं च कल्प्यते। तस्यां यथावश्यकं दूरदूराणि स्थानान्यपि समायान्ति। यत्किञ्चिदाकाशेऽपि भाषमाणं क्रियमाणं कल्प्यते, तदपि प्रायशो नेपथ्ये घटितमेव प्रदर्श्यते कविभिः।

नेपथ्यस्य रङ्गपीठवदुपयोगान्नेपथ्यं तु रङ्गपीठस्य पर्याय इति सम्मतम्।[1] रङ्गप्रवेशात् प्रागेवाथवा रङ्गमप्रविश्यापि पात्राणि यदभिनयन्ति तद् वाचिकमपि भूयिष्ठं विलसति नाट्यार्थे।

**नेपथ्यस्याभिप्रायद्वयम्**

'नेपथ्ये' इति पदस्य विशिष्टः सामान्यश्च द्विविधोऽभिप्रायोऽवधारणीयः। विशिष्टार्थेन नेपथ्यं तु केवलं रङ्गमण्डपस्य पश्चिमतमो भागो रङ्गशीर्षस्य पृष्ठतो भवति, यत्र पात्राणि रङ्गपीठप्रवेशात् पूर्वं वर्तन्ते। विशुद्धाभिप्रायेण नेपथ्यतः पात्राण्येव वदन्ति।

**नेपथ्यं रङ्गाद्दूरतरम्**

सामान्याभिप्रायेण नेपथ्यं तु रङ्गमण्डपाद् बहिरपि स्थानं यथावश्यकं द्योतयति। अस्मिन् प्रसङ्गे 'आकाशे' इति पदस्यापि अभिप्रायो विचारणीयः। नाटकेषु बहुषु स्थलेषु नेपथ्याद् भिन्नार्थे 'आकाशे' इति पदं व्यवहृतम्। यथाभिज्ञानशाकुन्तलस्य पञ्चमाङ्के हंसपदिका 'आकाशे' गायति।[2]

'अभिनवमधुलोलुपो भवान्' इत्यादि ५.१।

राजशेखरेण बालरामायणे नेपथ्ये आकाशे च पदे परस्परं भिन्नार्थके इति अधोविघनाट्यनिर्देशेन स्पष्टयति—

'नेपथ्ये मङ्गलध्वनिर्नान्दीवाद्यं चाकाशे।[3]

नेदमन्तरं बहुभिः कविभिर्गृहीतम्। ते तु नभसि प्रोक्तानि वचांस्यपि 'नेपथ्ये' इत्यवधारयन्ति। यथा—

नागानन्दे नभस्तः पुष्पवृष्टिर्भवति दुन्दुभयश्च ध्वनन्ति। तत्तु 'नेपथ्ये पुष्पाणि पतन्ति' इति नाट्यनिर्देशेन दर्शितम्। इदं तु सर्वथा अशुद्धमेव,

---

१. नेपथ्यं तु रङ्गभूमिरिति मेदिनी। नेपथ्यं रङ्गभूमौ, वेषभेदे इति हैमः। नेपथ्यं रङ्गभूमौ स्यान्नेपथ्यं तु प्रसाधने इति विश्वः। नेपथ्यं तु नाट्यप्रयोगः इति मालविकाग्निमित्रे २.१०/११।

२. आकाशे नेपथ्याद् भिन्नार्थेऽधोलिखितेषु प्रकरणेषु वर्तते—

(क) अभिज्ञानशाकुन्तले ४.११ श्लोकस्तपोवनदेवताभिराकाशे पठ्यते।

(ख) महावीरचरिते ७.१५ श्लोकोऽशरीरिणी गिरा नाट्यनिर्देशानुसारेण 'आकाशे' पठ्यते।

३. बालरामायणे १०.१०२/१०३।

यतो हि नाम तत्र गरुडो रङ्गे स्थितः (ऊर्ध्वं दृष्ट्वाकर्ण्य च। अये पुष्पवृष्टि-र्दुन्दुभिध्वनिश्च। सविस्मयम्) अये—

आमोदानन्दितालिर्निपतति किमियं पुष्पवृष्टिर्नभस्तः।
स्वर्गे किं वैष चक्रं मुखरयति दिशां दुन्दुभीनां निनादः ॥४.२८

यत् स्वर्गे भवति तदपि 'नेपथ्ये' दर्शितं नाट्यनिर्देशेन। वस्तुतोऽत्र 'आकाशे' किं न लिखितमिति प्रश्नोऽसमाधेयः[1]।

**यवनी, जवनी, यवनिका, जवनिका, तिरस्करिणी**

नाट्यशास्त्रे भरतो यवनिकाया उपयोगं निर्दिशति-

एतानि तु बहिर्गीतान्यन्तर्यवनिकागतैः।
प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि च ॥ ५.११

ततः सर्वैस्तु कुतपैः संयुक्तानीह कारयेत्।
विघट्य वै यवनिकां नृत्तपाठ्यकृतानि तु ॥ ५.१२

**अन्यत्र**

प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा। अमरकोषे
अन्तःपटः पटी चित्रा काण्डपटः। शब्दरत्नावली
पटी जवनिका स्मृता। नाटकलक्षणरत्नकोषे २६२
अन्तर्यवनिकामाहुर्नेपथ्यस्थानवर्तिनीम् ॥ नाटकलक्षणरत्नकोषे २६४
कुशीलवकुटुम्बस्य गृहं नेपथ्यमुच्यते।
नेपथ्यं स्याज्जवनिका रङ्गभूमिः प्रसाधनम्। इत्यजयः।[2]
प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा।
अन्तःपटः पटी चित्रा काण्डपटः। इति अमरकोषः
इति शब्दरत्नावली

नेपथ्य-रङ्गपीठयोर्मध्ये तत्रासीदेका तिरस्करिणी।[3] तामधिकृत्य कालिदासेन प्रथितम्—राजा–(जनान्तिकम्) वयस्य।

---

१. एतादृशी अशुद्धिर्वेणीसंहारेऽपि ६.४१/४२ स्थले नेपथ्ये इति नाट्यनिर्देशे वर्तते। इयमुक्तिः ६.४२ युधिष्ठिरानुसारेण नभस्तलचारिणा सिद्धजनेन कृता। सिद्धा नभसि वर्तन्ते। कथं तेषां नेपथ्येऽवस्थानं सम्भवति।

२. अभिज्ञानशाकुन्तलस्य टीकायामर्थद्योतनिकायाम्। पृ० ७

३. इयं तिरस्करिणी बहुभिरधोविलम्बिभिः परस्पर-स्पर्शकृद्भिः पटैः पटोभि-रपटीभिर्वा निर्मिता।

नेपथ्यपरिगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः ।
संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम् ॥

आर्यासप्तशत्यां च

जवनीविनिर्गमादनु नटीव दयिता मनोहरति[1] ।

भागवते च

माया यवनिकाच्छन्नमज्ञाधोक्षजमव्ययम् ।
न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा ॥ १.८.१९

तिरस्करिणी दशरूपकेऽधोविधमुल्लिखिता—

अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचना[2] ॥ १.६१

रंगपीठे यथावश्यं बहवो जवनिकाः प्रयुज्यन्ते । तासु द्वे अन्तर्जवनिका रंगपीठ नेपथ्ययोर्मध्ये पुरोजवनिका च सभास्थान-रङ्गपीठयोर्मध्ये भवतः तिरोधानं करोतीति तिरस्करिणी ।[3] तस्या अपरभागे स्थितानि पात्राणि प्रेक्षकैर्न दृश्यन्ते ।

जवनिका तु शरीरस्य गोपनाय महावस्त्रमपि भवति । यथा स्वप्न-वासवदत्ते—

राजा—भवतु पश्यामस्तावद् रूपसादृश्यम् ।
संक्षिप्यतां जवनिका । ६.१६/१७

मुद्राराक्षसेऽपि—

ततः प्रविशति जवनिकावृत-शरीरो मुखमात्रदृश्यश्चाणक्यः । 'जवनिकामपनीयोपसृत्य च । ७.५/६; ७.८/९

जवनिका तिरस्करिणी वा क्वचिद् द्वारपिधानार्थं भवति, अन्यत्र च कस्यचिदन्तरालस्य पिधायको भवति ।[4] पात्रस्य पिधायकं तु भवत्येव ।

---

१. अत्र जवनी तु जवनिकाभिः कृतं गृहम्—नेपथ्यगृहमेव । नेपथ्यं स्याज्जवनिकेत्यादि ।

२. अत्र 'अन्तर्जवनिका' इति नेपथ्यगृहम् जवनिकया कृतम् ।

३. कुमारसम्भवे—

यत्रांशुकाक्षेपविलम्बितानां यदृच्छया किम्पुरुषाङ्गनानाम् ।
दरीगृहद्वारविलम्बिबिम्बा तिरस्करिण्यो जलदा भवन्ति ॥ १.१४

अविमारके नीलाम्बुदो भगणयवनिकेति वर्णितः । ५.६

४. अङ्कान्ते 'यवनिकया तिरोधानरूपं निष्क्रमणं दर्शनीयमिति' ना॰ शा॰ १८. २३ अधिकृत्य भारती ।

## रङ्गपीठम्

प्रायशः नेपथ्यान्नटा रङ्गपीठं प्रविशन्ति।[1] रङ्गपीठे वस्तुतो नाट्यं प्रवर्तते। रङ्गपीठस्य प्रायः पर्याय एव रङ्गः प्रयुज्यते। यथा

प्रयुज्य रङ्गान्निष्क्रामेत् सूत्रधारः सहानुगः। ना. शा. ५.१६१
प्रविश्य रङ्गं तैरेव सूत्रधारपदैर्व्रजेत्। ना. शा. ५.१६३
रङ्गं तु ये प्रविष्टाः सर्वेषां भवति यत्र निष्क्रामः॥" १८.२३

रङ्गस्य द्वौ भागौ स्तः—रङ्गपीठं, रङ्गशीर्षञ्च। तत्र रङ्गपीठं पूर्वभागः रङ्गशीर्षं च पश्चादभागः। उभयोर्मिश्रितयोरपि संज्ञा रङ्गपीठमेव। रङ्गशीर्षं तु पुरुषस्य शीर्षमिवोपरिभागः, शिरस्स्थानीयः। नेपथ्याद्रङ्गं प्रविष्टानि पात्राणि यावत्कालं कार्यव्यापृतानि भवन्ति तावत्कालं रङ्गपीठ-भागे वर्तन्ते, पश्चात् यावन्मात्रं कार्यहीनास्ते भवन्ति तावन्मात्रं पश्चाद् गत्वा रङ्गशीर्षे तिष्ठन्ति गमनागमने पात्राणां ततः कार्यवशात् प्रवर्तेते।

### रङ्गपीठे पूर्वप्रविष्टानि पात्राणि

प्रायशो नाट्यनिर्देशेन नेपथ्याद् नटो रङ्गं प्रविशति, किन्तु नाट्य-निर्देशं विनापि पूर्वत एव प्रविष्टानि पात्राणि रङ्गे जवनिकया प्रावृता भवन्ति। जवनिकाया अपसारणेन तानि पात्राणि प्रेक्षकाणां दृष्टिगोच-राणि भवन्ति।[2] यथा मृच्छकटिके षष्ठाङ्के—

ततः प्रविशति चेटी

चेटी—कथमद्याप्यार्या न विबुध्यते। भवतु, प्रविश्य प्रतिबोध-यिष्यामि। ( इति नाट्येन परिक्रामति

---

१. नेपथ्यगृहकं चैव ततः कार्यं प्रयत्नतः।
द्वारं चैकं भवेत्तत्र रङ्गपीठप्रवेशनम्॥ ना० शा० २.६९

रङ्गस्तु प्रेक्षकाणां कृतेऽपि प्रयुज्यते। यथा
अभिज्ञानशाकुन्तलस्य प्रस्तावनायाम्—
आलिखित इव सर्वतो रङ्गः। अयं प्रयोगो लाक्षणिकः। नाट्यशास्त्रेऽपि
प्रसाद्य रङ्गं विधिवत् कवेर्नाम च कीर्तयेत्॥ ५.१६५
नाटकलक्षणरत्नकोषे—
रङ्गस्तु नृत्य-संस्थानं गोष्ठी परिषदुच्यते।
सामाजिकाः पारिषदाः सभ्याः प्रेक्षका मताः॥ २६२

२. इयं जवनिका दक्षिणोत्तरदिशोः प्रसृता सदैव रङ्गपीठं पूर्णतो नावृणोति, केवलं खण्डमात्रमावृणोदि क्वचित्।

( ततः प्रविशत्याच्छादितशरीरा प्रसुप्ता वसन्तसेना )

चेटो—( निरूप्य ) उत्तिष्ठतूत्तिष्ठत्वार्या । प्रभातं संवृत्तम् ।

यथा वा मुद्राराक्षसे चतुर्थाङ्के—

( ततः प्रविशति पुरुषः )

पुरुषः —आश्चर्यमाश्चर्यम् ।

योजनशतं समधिकं को नाम गतागतमिह करोति ।
अस्थानगमनगुर्वी प्रभोराज्ञा यदि न भवति ॥ ४.१

यावदमात्यराक्षसस्यैतद्गेहं गच्छामि । कोऽत्र दौवारिकाणाम् । निवेदय भर्त्रेऽमात्यराक्षसाय–एष करभकस्त्वरयन् पाटलिपुत्रादागत इति ।

( प्रविश्य )

दौवारिकः —भद्र मा उच्चैर्मन्त्रयस्व । एषोऽमात्यः कार्यचिन्ता-जनितेन जागरेण समुत्पन्नशीर्षवेदनोऽद्यापि शयनं न मुञ्चति । तस्मात् तिष्ठ मुहूर्तकम् । लब्धावसरस्तवागमनं निवेदयामि ।

करभकः —भद्रमुख तथा कुरु ।

( ततः प्रविशति शयनगृहगत आसनस्थः शकटदासेन सह सचिन्तो राक्षसः )

अस्मिन् कथांशे राक्षसः पूर्वत एव रङ्गपीठे वर्तते । न स नेपथ्यद्वारेण-रङ्गं प्रविशति ।

पञ्चमाङ्के पुनरीदृशी स्थितिर्वर्तते । अत्र मलयकेतुसिद्धार्थकादिषु निष्क्रान्तेषु नाट्यनिर्देशो वर्तते—

( ततः प्रविशत्यासनस्थः स्वभवनगतः पुरुषेण सह सचिन्तो राक्षसः )

**यवनिकापसारणेन प्रवेशः**

अस्मिन् प्रकरणे यवनिकापसारणेनैव राक्षसः प्रत्यक्षीकृतः प्रेक्षकाणाम् । न स नेपथ्यद्वारेण प्रविशति । राक्षसाधिष्ठितोऽयमपरो भागो रङ्ग-पीठस्य । प्रथमभागे तु भागुरायण–सिद्धार्थक–मलयकेत्वादीनां वार्ता भवति ।

नागानन्दे नायकविदूषकौ रङ्गे वर्तेते । तदनन्तरम्—

'ततः प्रविशति भूमावुपविष्टा वीणां वादयन्ती मलयवती चेटी च ।'

अत्र नायिकाया दर्शनं प्रेक्षकाणां कृते जवनिकापसारणेन भवेत् । सा जवनिका रङ्गपीठस्योत्तरार्धभागे प्रसारिता बभूवेति निश्च प्रचम् ।

मालविकाग्निमित्रस्य चतुर्थाङ्केऽपि राजा, विदूषकः प्रतीहारी च रङ्गे संलपन्ति। तदनु ततः प्रविशति शयनस्था देवी, परिव्राजिका विभवतश्च परिवारः।

'शयनस्था देवी प्रविशतीति पृथगेव भागो निर्दिष्टो द्वितीयां यवनिकां विना न सम्भवेत्। अत्र यवनिका तु यवनिकया कृतं गृहमिव भवति। यथावश्यकं नेपथ्ये यवनिकया गृहाणि कृतानि।

मृच्छकटिकस्य दशमेऽङ्के चाण्डालौ चारुदत्तश्च रङ्गपीठे चिरं भ्रमन्ति। पश्चात्

'ततः प्रविशति प्रासादस्थौ बद्धः स्थावरकः' इति नाटचनिर्देशः। बद्धः स्थावरको द्वितीयजवनिकापसारणेनैव प्रकल्प्यते। सेयं जवनिकार्धजवनिकेति प्रतिभाति।

**निष्क्रमणम् प्रवेशश्च**

रङ्गपीठात् पात्राणि निष्क्रामन्ते। अङ्कस्यान्ते सर्वाणि पात्राणि तिरस्करिणी-प्रसारेण तिरोहिता भवन्तीति तेषां निष्क्रमणम्। अङ्कमध्ये पात्राणि नेपथ्यद्वारेण निक्रम्य नेपथ्यं गच्छतीति साधारणतो दृश्यते किन्तु नैकस्थलेषु निष्क्रम्य पात्राणि रङ्गस्यापरभागमेव गच्छन्ति। यद्यथा मृच्छकटिके शकारग्रहान्मुक्तो भिक्षुः —

'तथा कृत्वा निष्क्रान्तः'

इत्यनेन रङ्गपीठं न परित्यजत्यपितु तस्यापरस्मिन् भागेऽवस्थितां पुष्करिणीं गच्छति अदृष्टो भवति च वस्त्रप्रक्षालनाय। वस्त्राणि प्रक्षाल्याङ्कस्यान्तिमे भागे स पुनरपि 'अपटीक्षेपेण प्रविश्य' सभ्यानां समक्षं याति। अत्र प्रवेशस्तु रङ्गपीठस्यैकभागादन्यभागं प्रति गमनमेव। इयं पटी तु पूर्वपश्चिदिशयोः निविष्टा।

रङ्गस्य विविधभागा यथावश्यकं पटी-प्रावरणेन परस्परं तिरोहिताः सन्ति। तत्र पटीक्षेपेणैकस्माद् भागादन्यं भागं प्रविशन्ति पात्राणि क्वचित्।

**पात्र-प्रवेशः**

रङ्गे पात्रप्रवेशस्त्रिविधो भवति।

(१) पूर्वत एव रङ्गे वर्त्तमानानि पात्राणि मुखजवनिकापनयनेन सभ्यानां समक्षं भवन्ति।[1] यथाभिज्ञानशाकुन्तले चतुर्थाङ्कस्यादौ

१. इयं मुखजवनिका पुरोजवनिका वा रङ्गस्य पूर्वदिशि सीमान्ते स्थापिता वर्तते।

ततः प्रविशति यथोद्दिष्टव्यापारासनस्था शकुन्तला ।

(२) नेपथ्याद्रङ्गद्वारेण प्रविशति पात्रम् । इयं तु साधारणरीतिः प्रायो दृश्यते एव

(३) प्रविश्येति अपटीक्षेपेण पात्रं प्रविशति रङ्गं त्वरावशात् ।[1] नेपथ्यद्वारं यावद् गन्तुं कालाभावात् । इयमपटी तु नेपथ्यरङ्गयोर्मध्ये जवनिकापटाः । यथा विक्रमोर्वशीये प्रथमाङ्के पटीक्षेपेण राजा सूतश्च प्रविशतः ।

(४) आकाशयानेन योगबलेन वा पात्राणि साक्षाद् रङ्ग आपतन्ति । यथा विक्रमोर्वशीये चतुर्थाङ्कस्य मध्ये—

ततः प्रविशत्याकाशयानेनोर्वशी चित्रलेखा च । अभिज्ञानस्य षष्ठाङ्के सानुमती आकाशयानेन प्रविशति ।

यथा वाविमारकस्य चतुर्थेऽङ्के विद्याधरः स्वप्रियया सहायाति, उत्थितः पुनर्गगनार्णवमवगाढः ।

कालिदासेन विक्रमोर्वशीये पञ्चमाङ्कस्यान्तिमे भागे नारदस्याकाशादवतरणं वर्णितम् । तद्यथा—

( सर्वे दृष्टिविघातं रूपयन्ति )

राजा —(आकाशमवलोक्य) किं नु खलु निरभ्रे विद्युत्सम्पातः ।

उर्वशी — (विलोक्य) अहो भगवान् नारदः ।

राजा — (निपुणमवलोक्य) अये भगवान् नारदः ।

य एष—

गोरोचनानिकषपिङ्गजटाकलापः
संलक्ष्यते शशिकलामलवीतसूत्रः ।
मुक्तागुणातिशयसम्भृतमण्डनश्री-
र्हेमप्ररोह इव जङ्गमकल्पवृक्षः ॥५.१६

(ततः प्रविशति नारदः । सर्वे उत्तिष्ठन्ति)

अत्र नारदस्याकाशादेवावतरणं निश्चप्रचम् । अन्याभिरप्सराभी सह रम्भापि आकाशादेवावतरतीति नारदवचनेन ज्ञायते पञ्चमेऽङ्के—

नारदः — (आकाशमवलोक्य) रम्भे, उपनीयतां स्वयं महेन्द्रेण संभृतः कुमारस्यायुषो यौवराज्याभिषेकः ।

(प्रविष्टा यथोक्तहस्ता अप्सरसः)[2]

---

१. यत्र पटाक्षेपेण पात्रप्रवेशस्तत्र प्रविश्येति प्रयुज्यते । जमद्धरो वेणीसंहारस्य १.५/६ अधिकृत्य टीका ।

२. विक्रमोर्वशीयम् ५.२०/२१

सभास्थान-रङ्गपीठयोर्मध्ये मुख-जवनिका भवति, यस्या अपसारणेनाङ्कादौ पात्राणि रङ्गपीठे दृश्यन्ते। अङ्कादौ साधारणतो रङ्गे वर्त्तमान-पात्राणां प्रकटनमेव ततः प्रविशत्यादिनोच्यते। यदि नाम सूत्रधारस्य पात्र-प्रवेशात्मकेनामुखेन प्रथमाङ्कः प्रारभ्यते तर्हि सूत्रधारस्य निष्क्रमणानन्तरं नेपथ्यद्वारेण पात्रं प्रविशति। अन्यथा जवनिकास्तरेणेनामुखान्तो दृश्यो-भवति। तदनन्तरं जवनिकापसारणेन पात्रोपस्थितिं दर्शयित्वा प्रथमाङ्कारम्भो विधीयते। मुद्राराक्षस आमुखान्ते जवनिकास्तरणं न क्रियते। तत्र यावत् सूत्रधारो रङ्गे वर्तते तावदेव नेपथ्ये चाणक्यः — आः क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छतीति वदन् नेपथ्य-द्वारेण रङ्गे प्रविष्ट इव वर्तते।

यत्र यत्र नेपथ्यद्वारेण पात्रं नागच्छति तत्र तत्र रङ्गे तस्योपस्थितिः जवनिकापसारणेन सम्भवति, यद्यपि तत्रापि पात्रं प्रविशतीति निर्दिश्यते। तत्र पात्रं प्रविशतीत्यस्याभिप्रायो वर्तते जवनिकापसारणेन पात्रं दृश्यते।

नेपथ्यात् पात्राणां प्रवेशोऽङ्कस्यादौ मध्ये च भवति। पात्राणि एकैकशो रङ्गं प्रविशन्ति, बहुसंख्यकानि वा सहायान्ति रङ्गम्। नायको राजा सपरिवारो सपरिजनो वा तत्र प्रविशति। तद्यथाभिज्ञानशाकुन्तलस्य द्वितीयाङ्कस्यादौ—ततः प्रविशति यथानिर्दिष्टपरिवारो राजा।

इति नाट्यनिर्देशः। तत्र परिवारेऽस्मिन् बाणासनहस्ता यवन्य आसन्निति विदूषकस्याधोवचनेन प्रतीयते—एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृत इत एवागच्छति प्रियवयस्यः। राजसेविकाः परिचारिण्यस्तु प्रायशो नाटकेषु दृश्यन्ते। विदूषकोऽपि परिजन एवेति निगदितम्, किन्तु तस्य रङ्गप्रवेशः प्रायः पृथगेव निर्दिश्यते। तथैव कञ्चुकी परिजनोऽपि पृथङ् निर्दिश्यते। बहुसंख्यकाः सहैव रङ्गं प्रविशन्ति। अभिज्ञानशाकुन्तले द्वितीयेऽङ्के नाट्यनिर्देशो वर्तते—ततः प्रविशत्यात्मना तृतीयो वैखानसः। तत्र पुरुषत्रयं सहैव प्रविशति।

नेपथ्याद् रङ्गं प्रविशत् साधारणपात्रं प्रायशः स्वपरिचयं निवेदयति किमहम्, किं प्रयोजनमधिकृत्यागतमस्मि, नायकादीनां कार्याणि पूर्वमेव मयानुष्ठितानि नायकादीनां का स्थितिर्वर्तत इत्यादीनि पात्रमपृष्टमपि

ब्रूतेऽपरेण सह संवादद्वारेण प्रकाशयति वा। एतत् सर्वं क्वचित् सूचनामात्रं प्रवेशक एवेति न केवलमङ्कस्यादावपितु मध्येऽपि पात्राणां प्रवेशकाले दृश्यते।[1]

प्रधानपात्रं तु प्रवेशकाले क्वचिदपरेण सह संवादद्वारेणान्यत्रैकोक्त्या स्वीयां मनोदशां, कृतानि कार्याणि, भाविकार्याणि, योजनाश्च प्रकाशयति।[2] तत् तु प्रायशोऽङ्कादौ रङ्गं प्रविशति अथवा पूर्वत एवाङ्कारम्भाद् रङ्गे विराजते। यथा—मुद्राराक्षसस्य पञ्चमाङ्कस्य मध्यभागे दशमश्लोकात्पूर्वं—

'ततः प्रविशति आसनस्थः स्वभवनगतः पुरुषेण सह सचिन्तो राक्षसः।

अत्र राक्षसस्य स्थितिस्तिरस्करिण्या अपसारणेनावलोकनीया। अयमपरो भागो रङ्गपीठस्यास्ति अभ्यन्तरकक्ष्याया उत्तरस्यां दिशि। अस्मिन् प्रकरणे प्रवेशकानन्तरमङ्कारम्भे भागुरायणः पुरुषेणानुगम्यमानो रङ्गपीठं प्रविशति। तत्रास्थानमण्डपे न्यस्त आसने भागुरायण उपविशति। आस्थानमण्डपस्तु रङ्गपीठस्याभ्यन्तरकक्ष्यायामासीत्, तत्र स मुद्रार्थिनो मिलति। अत्रैव स मलयकेतुं मिलति।

मलयकेतुः—(उपसृत्य) भागुरायणं प्रति—

श्रुतं सखे श्रवणविदारणं वचः
सुहृन्मुखाद्रिपुमधिकृत्य भाषितम्।
पितुर्वधव्यसनमिदं हि येन मे
चिरादपि द्विगुणमिवाद्य वर्धते।

अत एव मलयकेतुर्मध्यमकक्ष्यातोऽभ्यन्तरकक्ष्यामुपसर्पति। तत्रैव सिद्धार्थक आनीयते।[3]

अतः परं पूर्वोक्तो नाट्यनिर्देशो वर्तते—

ततः प्रविशति आसनस्थो राक्षसः इत्यादि। अस्मात् स्थानात् स प्रतिहार्या मलयकेतुसमीपं नीयते—

'उपसर्पत्वेनममात्यः' इति वचनेन।

---

१ अस्मिन् ग्रन्थे ९३-९५ पृष्ठेषूदाहरणानि वर्तन्ते।

२. मुद्राराक्षसे प्रथमाङ्कस्यादौ चाणक्यस्येदृशी वार्ता सुप्रथिता।

३. ततः प्रविशति पुरुषेणानुगम्यमानः संयतः सिद्धार्थकः।५.८/९

प्रकरणेऽस्मिन् स्वभवनगतो राक्षस आसीत्। तस्य भवनादिकं तिरस्करिण्या प्रेक्षकाणामदृश्यं वर्तते।

**रङ्गान्तराले तिरस्करिणी**

महत्त्वपूर्णेयं तिरस्करिणी यथावश्यकं रङ्गस्याभ्यन्तरकक्ष्यात उत्तरस्यां वर्तते तया च प्रेक्षकाणां पूर्वतो वर्त्तमाना जनास्तिरस्क्रियन्ते। अस्या उत्तरदक्षिणदिशौ प्रसारश्चतुर्थकक्ष्यां यावदभवत्।

मुद्राराक्षसस्य तृतीयेऽङ्के पुनः सुगाङ्गप्रासादोऽभ्यन्तरकक्ष्यायां वर्तते, यत्र चन्द्रगुप्तः प्रतीहार्या प्रवेशानन्तरं नीयते सिंहासनमधितिष्ठति च। एतदनन्तरं नाट्यनिर्देशो वर्तते—

ततः प्रविशति आसनस्थः स्वभवनगतः कोपानुविद्धां चिन्तां नाटयंश्चाणक्यः।[1]

प्रकरणेऽस्मिन् चाणक्यस्य भवनस्यावस्थितिरभ्यन्तरकक्ष्याया उत्तरस्यां दिशि कल्पनीया। तिरस्करिण्या सा प्रेक्षकैरदृश्या वर्तते। तिरस्करिण्या अपसारणेन चाणक्यः प्रेक्षकाणां दृष्टो भवति नाट्यनिर्देशानुसारेण।

**पृथगेव रङ्गपीठभागः**

पूर्वोक्तोऽयं रङ्गपीठभागस्तिरस्करिण्या पृथग्भूत एकोक्ति (Soliloquy)—प्रयोगाय तथैव भवति यथा बाह्यकक्ष्या (नेपथ्य-प्रवेशद्वारसमीपस्था) वर्तते। मुद्राराक्षसे तृतीयेऽङ्के तत्र चाणक्यस्यैकोक्तिर्विद्यते—

चाणक्यः—कथं स्पर्धते मया सह दुरात्मा राक्षसः।

कृतागाः कौटिल्यो भुजग इव निर्याय नगराद्
यथा नन्दान् हत्वा नृपतिमकरोन्मौर्यवृषलम्।
तथाहं मौर्येन्दोः श्रियमपहरामीति कृतधीः
प्रकर्षं मद्बुद्धेरतिशयितुमेव व्यवसितः॥ ३.११

इत्यारभ्य

भेत्स्यामि स्वमतेन भेदकुशलं ह्येष प्रतीपं द्विषः॥३.१३

तिरस्करिण्या पृथक्कृतं भागं पात्राणि तथैव प्रविशन्ति, यथा नेपथ्याद् रङ्गं प्रविशन्ति। तद्यथा—

---

१. मुद्रा० ३.१०/११

(प्रविश्य)[1]

कञ्चुकी—कष्टं खलु सेवा—

भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभाद्
अन्येभ्यश्च वसन्ति येऽस्य भवने लब्धप्रसादा विटाः ।
दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायस्यतः
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥३.१४

इत्यारभ्य

(विलोक्य सभयम्) अये तदयमार्यचाणक्यस्तिष्ठति ।

यो नन्दमौर्यनृपयोः परिभूय लोकं
अस्तोदयौ प्रतिदिशन्नविभिन्नकालम् ।
पर्यायपातितहिमोष्णमसर्वगामि
धाम्नातिशाययति धाम सहस्रधाम्नः ॥३.१७

इति यावत् ।

वस्तुतो विष्कम्भकोऽयमङ्कान्तराले वर्तते ।

अभिज्ञानशाकुन्तलस्य प्रथमाङ्के दुष्यन्तस्य मृगया प्रथमकक्ष्यायां भवति । तदनु स मध्यकक्ष्यात आश्रमपदं प्रविशति । अग्रे तिरस्करिण्या-पावृतः शकुन्तलाधिष्ठित आश्रमोऽस्ति । तत्र प्रविश्य निमित्तं सूचयन् (दुष्यन्तः)

इत्यनेन या तिरस्करिणी निर्दिष्टा तस्यां प्रवेश-द्वारमेकमस्ति ।[2]

तदनन्तरं—

ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ।

अत्र तु प्रवेशस्तिरस्करिण्या अपनयनेन क्रियते । सा तु नेपथ्यान्न प्रविशति, अपितु पूर्वत एवाभ्यन्तरभागे वर्तते । आदावयमभ्यन्तरभाग-स्तिरस्करिण्या अदृश्यः, पश्चादनावृत्तः प्रेक्षकैर्दृश्यो भवति । तत्र नासीत् पूर्वपश्चिमयोस्तिरस्करिणी यतो हि नाम छायामाश्रित्य दूरत एव दुष्य-न्तस्तां पश्यति ।

---

१. स चन्द्रगुप्तभवनाच्चाणक्यभवनं प्रविशति । चन्द्रगुप्तभवनं तृतीय-कक्ष्यायां चाणक्यभवनं च चतुर्थकक्ष्यायां विद्येते ।

२. राजा—( परिक्रम्यावलोक्य च ) इदमाश्रमद्वारम् यावत्प्रविशामि । प्रविश्य, निमित्तं सूचयन् । शान्तमिदमाश्रमपदमित्यादि ।

**अपटीक्षेपेण प्रवेशः**

यदि नटो नेपथ्यद्वाराद् रङ्गं न प्रविशति, प्रत्युत त्वरावशात् द्वार-मार्गेणानागत्य यवनिकामेवाक्षिप्य उद्घाट्य वा रङ्गं प्रविशति, तर्हि अपटीक्षेपेण प्रवेशः कथ्यते। तत्र नास्ति अपसारणम्, अपितूद्घाटनं यथा कपाटस्य। अपटी, पटी, जवनिकाः तिरस्करिणीति पदानि पर्याया एव। यथा मृच्छकटिके—

( नेपथ्ये )

अरे भट्टारक दशसुवर्णस्य रुद्धो द्यूतकरः प्रपलायितः। तद् गृहाण, गृहाण। तिष्ठ, तिष्ठ। दूरात् प्रदृष्टोऽसि।

प्रविश्यापटीक्षेपेण सम्भ्रान्तः।

संवाहकः —आश्चर्यम्। कष्टमेष द्यूतकरभावः इत्यादि।

अस्मिन्नाटकेऽपटीक्षेपेण प्रवेशस्य भूयः स्पष्टमुदाहरणमधोविधं लभ्यते—

(प्रविश्यापटीक्षेपेण संभ्रान्त[1] एकचरणलग्ननिगडोऽवगुण्ठित आर्यकः परिक्रामति)

**अनेका पुरोजवनिकाः**

यथावश्यकं बह्वो जवनिकाः प्रयुज्यन्ते। जायनस्तदधिकृत्य वर्णयति–

अष्टरत्निकृतायामास्तदनेन तु विस्तृताः।
पुरो यवनिकाश्चित्राः सूचीविज्ञानभङ्गिभिः।
तिस्रस्ततोऽधिका वा स्युर्यथावाद्यं यथारुचि।[2]

अत्र तिस्रः पुरोजवनिका वर्णिताः।

पटाक्षेपादीनामुदाहरणमन्यत्र द्रष्टव्यानि। नागानन्दे मित्रावसुःसंरब्ध एव नायकं द्रष्टुमायाति तदा चेटी पटाक्षेपेण प्रविश्य नायकमुपसर्पति।[3] बालरामायणे पटाक्षेपेण शूर्पणखा प्रविशति—'प्रविश्य पटाक्षेपेण छिन्ननासा

१. अपटीक्षेपेण प्रवेशस्य सम्भ्रमेणाविनाभाव एव दृश्यत इत्यत्र तु नाट्य-निर्देशेन स्पष्टमेव। अपटी तु अल्पः पटः अल्पार्थे नञ् समासः। शब्द-कल्पद्रुमः।

२. भरतकोशे पृ० ५१४

३. नागा० ३.१३/१४ मित्रावसुः कथयति—
'मतङ्गेन युष्मदीयं राज्यमाक्रान्तम्' इति

कृतावगुण्ठना शूर्पणखा' इत्यादिनाट्यनिर्देशेन ।[१] अत्र शूर्पणखा संरम्भवती वर्तते ।

विक्रमोर्वशीयस्य प्रथमाङ्के 'परित्रायध्वम्, परित्रायध्वम्' इत्यादि अप्सरसामाक्रन्दितं श्रुत्वा राजा अपटीक्षेपेण प्रविशति ।

'सर्पभयाद्राजा मागच्छतु' इति सूचयितुं मालविकाग्निमित्रस्य पञ्चमाङ्के पटाक्षेपेण बकुलावलिका प्रविशति ।[२]

अभिज्ञानशाकुन्तले षष्ठाङ्कस्य विष्कम्भके कञ्चुकी 'अपटीक्षेपेण-प्रविश्य कुपितः' उद्यानपालिके तर्जयति ।

अपटीक्षेपेण प्रवेशो रंगस्य मध्यकक्ष्यायामभ्यन्तरकक्ष्यायां वा भवति । नेपथ्यद्वारेण प्रवेशो बाह्यकक्ष्यायां भवति ।

**जवनिकां विघट्य प्रवेशः**

क्वचिज्जवनिकां विघट्य नेपथ्याद् रङ्गे प्रवेशो भवति महाजनानाम् । भरतानुसारेण

ततस्सर्वैस्तु कुतपैः संयुक्तानीह कारयेत् ।
विघट्य वै यवनिकां नृत्तपाठ्यकृतानि तु ॥५ १२

अत्र नेपथ्यद्वारेण प्रवेशो नाभीप्सितोऽपितु यवनिकां द्विभागाभ्यां विघटनेन योऽवकाशः कृतः तेन प्रवेशो भवति ।[३] अनेन स्पष्टं भवति यद् यवनिका परस्परं स्पृशद्भिः कतिपयभागैः काण्डपटैर्निर्मिता । तस्या यथावश्यकं विघटनं च क्षेपणं चाक्रियत ।

जवनिकां विघट्य प्रवेशस्तु अपटी-पटीपटक्षेपेण प्रवेश एव ।

**कक्ष्याः**

रङ्गपीठे बहव उपकक्ष्याः कक्ष्याश्च यथावश्यकं भवन्ति नाम । मृच्छकटिकस्य चतुर्थेऽङ्के तत्र वसन्तसेनाया अष्टप्रकोष्ठं भवनं विद्यते । प्रत्येकस्मिन् प्रकोष्ठे विदूषकः प्रविशति । अन्ततः स वसन्तसेनयाधिष्ठितां

---

१. बालरा० ५.७४/७५

२. माल० ४.१५/१६

३. विघटनं तु द्विधाकरणम् । यथा—विघटयन्त्यग्रे नभोऽम्भोमुचः । मालवि० ५.२ अपसारणाद् भिन्नमेव विघटनम् । बहुसंख्यकानां जनानां प्रवेशाद् जवनिकाया विघटनं कृतम् ।

वृक्षवाटिकां प्रविशति। यत्र यत्र प्रविशतीति पदे व्यवहृतं तत्र तत्र नवीनोपकक्ष्यावधारणीया।

साधारणतो रङ्गपीठे कक्ष्यात्रयं नाटकेषु विधीयते। प्रथमाकक्ष्या बाह्यकक्ष्येति प्रसिद्धम्। तत्रैकं नैकानि वा पात्राणि प्रविश्य स्वव्यापारं नाटयन्ति, ततः परं तेषां तृतीयायां कक्ष्यायां प्रवेशो भवति, यत्र पूर्वत एव कृतकार्याणि पात्राणि वर्तन्ते। तैः सम्मिल्य नवागन्तुकानि पात्राणि पूर्वपात्राणां कार्यविषयकं मन्त्रयन्तेऽथवा स्वकार्येषु पूर्वपात्राणि नियोजयन्ति। तद्यथा मृच्छकटिकस्य द्वितीयाङ्कस्यादौ मदनिका वसन्तसेना च चारुदत्तविषयकं मन्त्रयेते अभ्यन्तरकक्ष्यायाम्। अकस्मादेव बाह्यकक्ष्यायां संवाहकः प्रविशति। अतः परमभ्यन्तरकक्ष्यायाः पात्रद्वयं समक्षमर्धजवनिकया तिरस्कृतमिव स्तः। तयोः संलापोऽवरुध्यते। केवलं संवाहकस्तस्य द्यूतसहचरौ च विवदमाना एव दृश्यन्ते। चिरं विवदमानास्तेऽङ्के प्रधानीभूताः। अन्ततस्ते तृतीयां कक्ष्यां प्रविशन्ति, वसन्तसेनासमक्षीभूताश्च निर्णयं यान्ति।

यथावश्यकमेका नैकाः वा कक्ष्याः पटीप्रयोगेण प्रेक्षकाणां तिरस्कृता अनावृता वा भवन्ति। यथा मृच्छकटिकस्य द्वितीयेऽङ्क आदौ मदनिकावसन्तसेनयोर्वार्तायाः पश्चात् ताभिरधिष्ठिता कक्षा प्रेक्षकाणां तिरस्क्रियते। तदनन्तरमपटीक्षेपेण संवाहकः प्रविश्य देवकुलयुक्तां कक्ष्यामपरां प्रविशति। तत्रैव माथुरो द्यूतकरश्चायातः। दर्दुरकस्तत्रायाति। एतेषां कलहादनन्तरं पुनर्वसन्तसेनाधिष्ठिता कक्ष्यानावृता भवति।

### अर्धजवनिका

अन्तरङ्गपीठस्य कक्ष्याः सामाजिकानां समक्षं प्रत्येकशो यथावश्यकं पृथगेव जवनिकया तिरस्कृताः। एतादृश्या जवनिकाया भासस्य ऊरुभङ्गे प्रतिमानाटके चाधोविधः परिचयो वर्तते—

ऊरुभङ्गे दुर्योधनस्य मृत्योरनन्तरम्—

( यवनिकास्तरणं करोति )

इति नाट्यनिर्देशेन स तिरोहितः।

अत्रैवाङ्को न समाप्यते। तदनन्तरं धृतराष्ट्रस्य, अश्वत्थाम्नः, बलदेवस्य च पृथक् पृथक् पादशः प्रोक्तः श्लोको वर्तते। अनेन भागश एव रङ्गपीठस्य

तिरोधानं यवनिकास्तरणेन निश्चप्रचम्। तथैव प्रतिमानाटकस्य द्वितीयाङ्कस्यान्तिमे भागे दशरथस्य मृत्योरनन्तरं काञ्चुकीयो यवनिकास्तरणं करोति।

अनेनापि यवनिकास्तरणेनार्धमेव रङ्गपीठस्य तिरोहितं, यतो हि नाम तदनन्तरं

सर्वे—हा हा महाराज इति विलपन्ति रङ्गस्य प्रत्यक्षभागे।

अर्धजवनिकेति पारिभाषिकशब्दः बालरामायणे प्रयुक्तः।[1]

**चित्रजवनिका**

रङ्गपीठे तत्रासीत् चित्रजवनिका, यस्यामन्तर्धाय मकरन्दः स्त्रीवेषंपरिधारयति। तद्यथा—

कामन्दकी—वत्स मकरन्द, अनेनैव वैवाहिकेन मालतीनेपथ्येनापवारितः प्रवर्तस्व परिणयायात्मनः। (इति पटलकमर्पयति)

मकरन्दः —यदाज्ञापयसि। यावदितश्चित्रजवनिकामन्तर्धाय नेपथ्यं धारयामि। (तथा करोति)

मकरन्दः —(प्रविश्य विहसन्) एषोऽस्मि मालती संवृत्तः।

**रङ्गपठस्य विभागाः**

रङ्गपीठं तु पात्राणां कार्यस्थली एव। तत्र बाह्यभागः पूर्वतः समागतैरभ्यन्तरभागस्थितैर्जनैर्न दृश्यत इति नाट्यधर्मी कल्पना। पात्रस्य प्रवेशकालादारभ्य ततः तस्य मध्यभागे गमनं यावत् नवागतपात्र पात्राणि वा स्वीयानि आगामिकार्यस्य भूमिकां स्वतन्त्ररूपेण प्रस्तुवन्ति, संक्षेपेणायं प्रथमो भागः रङ्गपीठं कंचित्कालं यावद् भवत्येव, यद्यप्यभ्यन्तरे भागेऽन्ये प्रधाननायका भवन्ति, किन्तु ते प्रायशस्तूष्णीका अदृष्टा अपि संवर्तन्ते।

**रङ्गे संवाद-गणाः**

साधारणतोऽङ्कारम्भे रङ्गपीठे पात्राणामेक एव गणः कार्यव्यापृतो विद्यते, यस्याभिनयः प्रेक्षकैर्दृश्यते श्रूयते च। सोऽयं गणः साधारणतो रङ्गपीठस्य बाह्यकक्ष्यायामभ्यन्तरकक्ष्यायां वा तिष्ठति। तत्र सर्वाणि पात्राणि सर्वेषां पात्राणां सम्भाषणं शृण्वन्ति। पश्चाद्यदि नाम पात्रं पात्राणि वा नेपथ्याद्रङ्गं प्रविशन्ति, तानि प्रवेशकाल एव पूर्वतो रङ्गे वर्त्तमानैः पात्रगणैरदृष्टानीव दूरतः किञ्चिद्वचन्ति, अभिनयन्ति वा।

---

१. प्रेमजोगिनीति भारतेन्दु-हरिश्चन्द्रस्य हिन्दीनाटिकायां प्रस्तावनान्ते—अर्धजवनिकास्तृता।

अयमपरो गणः प्रायो नातिचिरं स्वतन्त्ररूपेण सम्भाषते ।[1] किञ्चित्काला-नन्तरं स पूर्वतो वर्त्तमानं गणमुपगच्छति। तद्यथाभिज्ञानशाकुन्तले द्वितीयेऽङ्के—

( उभौ राजानं विलोकयतः )

प्रथमः —अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः। अथवोपपन्न-मेतद् मुनिभ्यो नातिभिन्ने राजनि । कुतः

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये ।
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतं ।
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥

द्वितीयः —गौतम, अयं स बलभित्सखो दुष्यन्तः ।

इत्यारभ्य

अस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥

इति यावत् द्वितीयो गणः प्रथमगणेनादृष्टोऽश्रुतश्च सम्भाषेते । अस्मादनन्तरं

उभौ—(उपगम्य) विजयस्व राजन् ।

इति वचनेन द्वौ गणा एकीभूय किञ्चित् कालं सम्भाषेते ।

अभिज्ञानशाकुन्तलस्य तृतीयाङ्कस्यादौ प्रथमगणे राजा वर्तते । स शकुन्तलाविषयकं मनोगतमेकोक्त्या वर्णयित्वा यावदग्रे पश्यति तावद् द्वितीये गणे शकुन्तला सखीभ्यां सार्धमवलोक्यते। स विटपान्तरित एव द्वितीयगणस्य विश्रम्भवचांसि श्रुत्वा स्वकीयां प्रतिक्रियां प्रणयोद्गारांश्च प्रेक्षकाणां प्रीतये सविस्तरं प्रकटयति। अस्यां स्थितौ द्वयोः पात्रगणयो-र्यौगपद्येनाभिनयादिकं सस्पृहं सम्भुंजन्ति प्रेक्षकाः ।

क्वचिद्रङ्गे संवादे व्यापृतस्य गणस्य स्फुटनं भवति। कतिपयजना एकस्यामेव कक्ष्यायां पृथग्भूय परेषां श्रवणपरिधेर्बहिर्भूता इव संवदन्ति। यथाभिज्ञानशाकुन्तले चतुर्थाङ्कस्यान्तिमे भागे स्वतन्त्ररूपेण सखीभ्यां सह संवदति । कण्वादयस्तासां वार्तालापस्य श्रवणात् पृथग्भूता एव ।

शकुन्तला—(सख्यावुपेत्य) हला द्वे अपि मां सममेव परिष्वजेथाम् ।[2]

---

१. गणेऽस्मिन् बहवो जना एकोऽपि वा भवेत् ।

२. अत्र पृथग्भूतः स्वतन्त्र एव संवादगणो वार्तां प्रारभते ।

सख्यौ—( तथा कृत्वा ) सखि, यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्, ततस्तस्येदमात्मनामधेयमङ्गुलीयकं दर्शय ।

शकुन्तला—अनेन सन्देहेन वामाकम्पितास्मि ।

सख्यौ —मा भैषीः । स्नेहः पापशङ्की ।[1]

अत्र रहस्य किञ्चिन्निवेदितं शकुन्तलायै सखीभ्याम् । पृथग्भवनस्यायं विधिर्जनान्तिकापवारितकस्थाने विकल्पेनैव भवति ।

## कक्ष्यात्रये युगपन्नाटयदर्शनम्

रङ्गस्य विविधभागेषु युगपदेव विविधकक्ष्यासु विविधपात्रगणाः पृथक् पृथक् स्वतन्त्ररूपेण सम्भाषन्ते । तद्यथा मालविकाग्निमित्रे तृतीयेऽङ्के प्रथमभाग इरावती,[2] द्वितीयेभागे मालविका तृतीये भागे राजा च प्रधानतो युगपदेव कार्यरताः सन्ति । तृतीयकक्ष्यातो मालविकया अदृष्टो राजा तस्या बकुलावलिकया निष्पादितचरणसंस्कारं समीक्षते । एतावदन्तरे प्रथमकक्ष्यां समागता इरावती द्वितीयकक्ष्यायां वर्त्तमानां मालविकां समीक्षते । अस्मिन् प्रसंगे मध्यमकक्ष्यायां वर्त्तमानयोर्मालविकावकुलिकयोर्वचनं प्रथमकक्ष्यायां वर्त्तमाने निपुणिकेरावती च शृणुतः, युगपदेव तयोर्वार्त्ता तृतीयकक्ष्यायां वर्त्तमानौ राजा विदूषकश्च शृणुतः । प्रथमतृतीयकक्ष्ययोः पात्राणां युगपदेव प्रतिक्रिया भवन्ति ।[3] नाटयवैचित्र्यस्य विरलनिबन्धनमिदं काव्यसौष्ठवं प्रमाणयति ।

रङ्गस्य प्रथमभागे क्वचिन्नायक एकोक्तिं वदति । तृतीयभागेऽवस्थितानि पात्राणि तं पश्यन्ति, किन्तु एकोक्तिं न शृण्वन्ति' इतीदृशं विधानं मालविकाग्निमित्रे वर्तते । तथाङ्कारम्भेऽभ्यन्तरंगपीठं प्रविशतो राजा विदूषकश्च पश्चात् मालविका नेपथ्यद्वारात् प्रविशति, एकाकिनी सा मनो-

---

१. अत्र स्वतन्त्रस्य पृथग्भूतस्य संवादगणस्य वार्ता समाप्यते ।

२. 'ततः प्रविशति युक्तमदा इरावती चेटी च' इति नाट्यनिर्देशेन बाह्यकक्ष्यायां प्रविष्टे इरावती निपुणिका च सम्भाषेते ।

३. बकुलावलिका—विमर्दसुरभिर्बकुलावलिका खल्वहम् ।
राजा—साधु बकुलावलिके साधु
इरावती—सखि, पश्य कारितमेव बकुलावलिकया एतस्मिन् पदं मालविकायाः ।

भावान् प्रकाशयति। विदूषको राजा च तामभ्यन्तररंगपीठात् केवलं पश्यतः।

**बहुभौमिको रङ्गः**

यथावश्यकाभिनयसापेक्ष एव बहुभौमिको रङ्गः। यथा बालचरिते—

दामोदरः—( प्रासादमारुह्य कंसं शिरसि निगृह्य पातयित्वा ) इत्यादिनाट्यनिर्देशेन द्विभौमिकः प्रासादो निश्चीयते।[1] एवमेव मृच्छकटिके—

ततः प्रविशति प्रासादस्थो बद्धः स्थावरक इति नाट्यनिर्देशः। तदनु

स्थावरकः—आत्मानं पातयामि। यद्येवं करोमि तदार्यचारुदत्तो न व्यापाद्यते। भवत्वस्याः प्रासादबालाग्रप्रतोलिकात एतेन जीर्णगवाक्षेणात्मानं निक्षिपामि। तत्रापरो नाट्यनिर्देशो वर्तते—इत्यात्मानं पातयित्वा। अत्र द्विभौमिकरङ्गस्यापेक्षा स्यादेव।

## दृश्य-विधानम्

कस्मिंश्चिदङ्के द्वितीयायां तृतीयायां वा कस्यांचिदपि कक्ष्यायां कार्यव्यापृतानि पात्राणि नवपात्राणां प्रवेशेन तेषां कार्येण चाक्षिप्तानीव स्वल्पकालमनुपस्थितानि सम्भाव्यन्ते। तद्यथा मृच्छकटिकस्य द्वितीयाङ्कस्यादौ वसन्तसेना मदनिकया सह चारुदत्तविषयकं संलपति। किंचित्कालानन्तरमेव नेपथ्ये—

अरे भट्टारक, दशसुवर्णस्य रुद्धो द्यूतकरः प्रपलायितः। तद् गृहाण, गृहाण। तिष्ठ, तिष्ठ। दूरात् प्रदृष्टोऽसि।

( प्रविश्यापटीक्षेपेण सम्भ्रान्तः )

संवाहकः—हीमाणहे, कट्टे एशे जुदिअलभावे।

णवबन्धणमुक्काए विअ
गद्दहीए हा ताडिदोम्हि गद्दहीए।
अंगलाअमुक्काए विअ शत्तीए
छडुक्को विअ घादिदोम्हि शत्तीए ॥२.१ इत्यारभ्य

संवाहकः—( सत्रासं परिक्रम्य, दृष्ट्वा ) एशे कश्शवि अणपावुदपक्खदुवालके गेहे। ता एत्थ पविश्शं। ( प्रवेशं रूपयित्वा वसन्तसेनामालोक्य )

---

1. बालचरिते पञ्चमेऽङ्के

इत्यन्तमपरं दृश्यमेव प्रवर्तते यस्मिन् सर्वाणि पात्राणि नवानि सन्ति। पूर्वपात्राणि जवनिकया वृतानि सन्ति।

अतः परं तृतीयं दृश्यं प्रवर्तते यस्मिन् वसन्तसेना, सवाहकः, मदनिका, माथुरः, द्यूतकरश्च पात्राणि सन्ति।

## सभास्थानम्

रङ्गपीठादनन्तरं सभास्थानं भवति। तत्र सामाजिका उपविशन्ति। रङ्गपीठ-सभास्थानयोर्मध्ये पुरोजवनिका मुखजवनिका वा भवति। एतस्यास्त्रय उपयोगा भवन्ति—

१. मुखजवनिकां प्रसार्य अङ्कारम्भात् पूर्वमङ्कोचितसज्जा रङ्गपीठे विधीयते।

२. मुखजवनिकाया अपसारणेन रङ्ग आसनस्था नटा दृश्यन्ते।

३. अङ्कान्ते पात्राणां निष्क्रमणं मुखजवनिकापसारणेन विधीयते।

अभिनवगुप्तः सूचयति—तत् (अङ्क) परिसमाप्तौ यवनिकया तिरोधानरूपं निष्क्रमणं दर्शनीयम्।[1]

प्रतिमानाटकस्य द्वितीयाङ्कस्यान्ते दशरथस्य मृत्योरनन्तरं काञ्चुकीयो यवनिकास्तरणं करोतीति नाट्यनिर्देशः। ऊरुभङ्गे दुर्योधनस्य मृत्योरनन्तरं यवनिकास्तरणं करोतीति वाक्येन मृतस्यादर्शनं निष्पादितम्।

यवनिकास्तरणानन्तरमपि नाट्यं प्रचरत्येवेत्यनेन स्पष्टं ज्ञायते यदियं मुखजवनिकानेक खण्डेषु विभज्यमाना आसीत। यथावश्यकं खण्डशस्तस्या विघाटनं कृतम्।

उत्तररामचरितानुसारेण बहुसंख्यकानामपि प्रेक्षकाणां समुचितस्थानसन्निवेशोऽक्रियत[2]। तत्र रङ्गप्राश्निका आसन्।

सभायाः कुत्र क उपविशन्तु इति संगीतमुक्तावल्यां देवेन्द्रेण नियमितम्—

संसन्मध्यस्थितो भूपः शास्त्रसङ्गीतकोविदः।
दक्षिणेऽस्य प्रधानेन सहिता रसिकाः किल॥
पित्राद्या वामतः प्रोक्ताः पृष्ठतः सुखसेवकाः।
ज्योतिर्विद् दक्षिणे भागे वामतो वैद्य इष्यते॥

---

१. ना० शा० १८. २३ अधिकृत्य अभिनवभारती।

२ उत्तररामचरितस्य सप्तमाङ्कस्यादौ।

अन्तःपुरं पृष्ठभागे केचित् स्युर्नृपपृष्ठतः ।
विलासिन्यः पुरतः पार्श्वतोऽस्य च ॥
सरन्ध्रजवनीमध्यं द्योतयन्ती विभूषणैः ।

अत्र जवनी तु पटीभिः कृतः कक्ष एव ।

सभाप्रमुखः प्रेक्षकाणां स्थान-सन्निवेशस्य सम्यक्त्वेन परितुष्य सूत्रधारं प्रयोगप्रारम्भायानुजानाति स्म।[1] तत्र प्रेक्षका नाटचविषयकाणि स्वाभिमतानि प्रकटयन्ति। तत्तु उत्तररामचरितस्य, प्रियदर्शिकायाः, बालरामायणस्य गर्भनाटकेषु दर्शकानां परस्परसंलापैः स्पष्टमेव। अन्तर्नाटकेऽपि नायकैः प्रेक्षकाः सम्बोध्यन्त इति मृच्छकटिके द्यूतकराणामुदाहरणेन सिद्ध्यति ।

## नाट्यमण्डपे द्वाराणि

अभिनवगुप्तो भरतानुसारेण द्वाराणामधोविधं वर्णनं प्रस्तौति—

१. पश्चिमतः पात्राणां नेपथ्यगृहे प्रवेशार्थं द्वारमेकं बभूव ।

२. नेपथ्यगृहाद् रङ्गपीठे प्रवेशार्थं पुनः रङ्गपीठान्नेपथ्यगृहे निष्क्रमणार्थं च द्वारद्वयं बभूव ।

३. प्रेक्षकाणां प्रवेशार्थं पूर्वस्या दिशि द्वारमेकं बभूव ।

एवं चतुर्द्वारं नाटचगृहम् ।[2] अन्ये षड्द्वारं नाटचगृहमिति मन्यन्ते ।[3]

केन द्वारेण प्रवेशो निष्क्रमो वा भवेदिति प्रवृत्त्या निर्धारणीयम्। तद्यथा—

उत्तरद्वारेण दाक्षिणत्यावन्त्योः प्रवेशः। अन्ययोस्तु सव्येनेत्येवं प्रवृत्तिविभागः।[4]

---

१. रामः—( उपविश्य ) प्रस्तूयतां भोः ।
सूत्रधारः —प्राचेतस इत्यादि । उत्तररामचरितस्य सप्तमेऽङ्के ।
बालरामायणे प्रहस्तो भरतपुत्रान् सम्बोधयति—भो भो भरतपुत्राः प्रेक्षणककृते कृतेक्षणः क्षणदाचरचक्रवर्ती । तत्प्रस्तूयताम् । ३.१०/११

२. अभिनवभारती ना० शा० २.९६,९७ ।

३. अभिनवगुप्त उद्धरति—अन्ये त्वाद्यद्वार ( द्वयमि ) वाद्येन हेतुनान्यद्वारद्वयं पार्श्वास्थितं कुर्यादालोकसिद्ध्यर्थमिति । ना० शा० २.९५–१०१ अधिकृत्य भारती ।

४. अभिनवभारती, ना० शा० १३.३७ अधिकृत्य ।

# अङ्कपूर्त्यर्थं योजनाः

अङ्कस्यायामस्तु नातिदीर्घो नाति लघुर्वा भवत्विति कविना प्रयतनीयम्। यदि नाम कस्यचिदेकस्य दिनस्य कथादीर्घा भवति, र्तह् सा कथाङ्कद्वयेन द्विधा विभज्यते। अनेन विधिना दीर्घत्वमङ्कस्यापास्तं स्यात्। लघुत्वं तु कविर्विधिद्वयेन परिहरति—

१. विर्णनात्मकश्लोकानां समावेशेन

२. गौणत एव मुखकथानुषक्तानां संविधानकानां समावेशेन च।

**वर्णनयोजना**

मृच्छकटिकस्य पञ्चमाङ्को दुर्दिन इति संज्ञितः। अस्मिन्नङ्के तु मुख्यकथेदन्मात्रं वर्तते यद् वसन्तसेना चारुदत्तगृहमागत्य तं मिलति। एतस्य लघुकथांशस्य विवरणेनाङ्कोदरं न पूर्यत इति समीक्ष्य कविर्दुर्दिनस्य वर्णनानि भूयिष्ठं सन्निवेशयति। तत्र चारुदत्त उन्नमत्यकालदुर्दिनमित्युक्त्वाङ्कारम्भ एव श्लोकषट्कं पठति। तदनु वसन्तसेनासकाशात् चेटश्चारुदत्त-समीपमायाति विदूषकेण पूर्वमेव दत्तां वसन्तसेनाया आगमनसूचनां पुनरपि ददाति नायकाय।[२]

तदनु वसन्तसेनायास्तस्या विटस्य चारुदत्तस्य च वर्षावर्णनमधोविधैश्लोकैर्विस्तारं लभते—

वसन्तसेना—५. १५, १६, १८, २०, २३, २५, २६, २८, ३२

विटः—५. १३, १४, १७, १९, २१, २२, २४, २७, ३३, ३५

चारुदत्तः—५. १-६, २८, ४४, ५२

अत्राष्टत्रिंशत् श्लोका वर्षाभिषक्ता विलसन्ति। प्रयोजनं तु स्पष्टमेव पञ्चमाङ्कोदरपूरणमिति।

उत्तररामचरित इदृशी स्थितिर्विद्यते द्वितीयेऽङ्के। अत्र त्रयोदशश्लोकं यावत् शम्बूकवधवृत्तान्तोऽभिहितः। तदनु त्रिंशत्तमश्लोकं यावदङ्कस्यायामं दीर्घयितुं दण्डकारण्यभागाः, जनस्थानम्, महारण्यानि, गिरयः,

---

१. संविधानकं तु मुख्यकथाधारादृष्टयानपेक्षिता घटना। A strange act, An unusual occurence V. S. Apte. Skt. Eng. Dictionary.

२. सर्वथानावश्यकोऽयं कथांशः। संविधानक-सन्धानस्योदाहरणं प्रस्तौति।

गोदावरी, सरित्सङ्गमाश्च वर्णितानि, न वृत्तानुरोधेनापितु रामोचितमङ्क-विस्तारं प्रवर्तयितुमेवेयं योजना।

## संविधानकयोजना

अभिज्ञानशाकुन्तलस्य चतुर्थाङ्को वर्णनात्मकैः श्लोकैरेव सर्वोत्कृष्टत्वं भजते। तत्र कथांशस्तु स्वल्पमात्र एव—कण्वेन शकुन्तला गौतमीशार्ङ्ग-रवशारद्वतैः सार्धं पतिगृहं प्रति प्रस्थाप्यते। कालिदासोऽङ्कमिमं वर्णनेन सम्पूरयितुमधोलिखितानि मुख्यकथयासम्पृक्तानीव संविधानकानि योजयति—

१. शकुन्तलाप्रसाधनार्थ वनस्पतीनामाभरणादिक-प्रसाधनसामग्री-दानम्।

२. तपोवनस्य देवतानां तरूणामाशीर्वचनम्।

३. पशु-पक्षिणो वियोगेन सन्तप्यन्ते।

४. वनज्योत्स्नाया आमन्त्रणम्।

५. गर्भमन्थर-मृगवध्वा भाविप्रसव-निवेदनार्थ शकुन्तलायाः प्रार्थना।

६. श्यामाकमुष्टिपरिवर्धिकतस्य मृगशिशोः शकुन्तला-निवसन-सज्जनम्, तस्य समाश्वासनं च।

७. नलिनीपत्रान्तरितं सहचरमपश्यन्ती, चक्रवाकी आरौतीति लक्षणम्।

८. दुष्यन्ताय कण्वस्य सन्देशः। ४.१७

९. शकुन्तलानुशासनम्। ४.१८

१०. कण्वस्य प्रास्थानिक-मङ्गलवचनम्।

अभिनयकालावधिरितिवृत्तांशकालावधिसाम्यमिवापेक्षते महाकवीनां सन्दर्भेषु। तद्यथाभिज्ञानशाकुन्तलस्य चतुर्थेऽङ्के सूर्योदयः प्रारभते युगान्तरेऽधिरूढे रवौ समाप्तिं याति च। एतत्कालानुरूपोऽभिनयः पूर्वोक्तं संविधानकबाहुल्यं विना न सम्भवेदिति तस्यौचित्यं नाट्यविधिमनुहरति।

मालविकाग्निमित्रस्य द्वितीयाङ्के मुख्यकथावस्तु तु मालविकाया गीतनृत्यानन्तरमेव समाप्यते, किन्तु ततः परं विदूषकस्य—भवति, तिष्ठ। किमपि वो विस्मृतः कर्मभेदः। तं तावत् प्रक्ष्यामीत्यारभ्याङ्कान्तं यावत् संविधानकमङ्कोदरपूर्त्यर्थमेव श्लिष्टम्, यतो हि नामानेन संविधानकेन विनाङ्कस्तु हीनायामः प्रतिभायात्।

उच्चकोटिकपात्राणां कृते रङ्गपीठे नाचिरमवस्थानं यथायोग्यं पदानुकूलं भवेदितिवर्णन-संविधानादिभिः क्रियते। तद्यथाभिज्ञानशाकुन्तलस्य षष्ठेऽङ्के मातलिः प्रविशति रङ्गम्। स इन्द्रस्य सारथिः सन् यदि नाम तस्य सन्देशस्य श्रावणमात्रं स्वकार्यं सम्पादयेत् तर्हि मातलेरनुभावोचितं रङ्गपीठे पर्याप्तकालावस्थानं नभवेत्। अत एव कविरधोविधमभिनवकथांशसन्निवेशौचित्यं बिभर्ति—

(१) मातलिर्विदूषकमाक्रामति।[1]
(२) राज्ञो विदूषकस्य रक्षणोपायः।
(३) विदूषकस्यार्तनादः।
(४) इन्द्रसन्देश-श्रावणम्।[2]



---

१. एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम्।
आर्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम्॥ अभि० ६.२७

२. मातलिः—अस्ति। कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः।
राजा—अस्ति। श्रुतपूर्वं मया नारदात्।
मातलिः—सख्युस्ते स किल शतक्रतोरवध्यः
तस्य त्वं रणशिरसि स्मृतो निहन्ता।
उच्छेत्तुं प्रभवति यन्न सप्तसप्तिः
तन्नैशंतिमिरमपाकरोति चन्द्रः॥ अभि० ६.३०

# नाट्यभारती

वाग् हि सर्वस्य कारणम् । ना:शा. १४.३
वाचि यत्नस्तु कर्तव्यो नाट्यस्येयं तनुः स्मृता ।
अङ्गनेपथ्यसत्त्वानि वाक्यार्थं व्यञ्जयन्ति हि ॥

ना० शा० १४.२

नाटकेष्वसाधारणः कश्चिद् वचनविधिर्विलसति ।

सर्वोत्कृष्टमुपनयसाधनं तु नाट्यभारती वचनोपन्यास-नैपुण्येन विराजते । यद्यपि संवादोऽसंवादश्चोभयविधो वचन-विन्यासो नाटके वर्तते, तथापि प्रश्नोत्तररूपस्य संवादस्य तत्र बाहुल्यं प्राधान्यञ्चास्ति । अत एव संवाद एव नाटके वर्तत इति साधारणमान्यता । नाट्यभारती पात्रोक्ति-रूपा प्रेक्षकमानसे भावोत्कर्षेण सार्थकतां याति । एतदर्थं कविर्नाट्योक्ति सप्तधा वैशिष्ट्योपपन्नां प्रकरोति । तद्यथा—

१. कार्यगौरवेण
२. पात्रगौरवेण
३. कालापेक्षया
४. पात्रविडम्बनया
५. भाग्यविपर्ययेण
६. वाग्वैदग्ध्येन
७. अद्भुतार्थप्रकटनेन च ।

## कार्यगौरवेण

काव्यार्थस्य कृते यस्य कार्यविशेषस्य महत्त्वमधिकं भवति, तदधिकृत्य यः संवादोऽनुष्ठीयते, स नाट्ये प्रभविष्णुतमो भवति । यथाभिज्ञानशाकुन्तलस्य चतुर्थाङ्कात् प्राग् विष्कम्भकेऽनसूयाप्रियंवदयोः शकुन्तलायाः पतिगृहगमनमधिकृत्य सम्भाषणं तत्र च दुर्वाससः शापवृत्तोद्घाटनम् । न तथा कार्यगौरवदर्शनं भवति तत्रैव सप्तमेऽङ्के दुष्यन्त-मातलिसंवादे इन्द्रलोकादवतरणकाले, कार्यप्रसंगाभावात् । काव्यार्थदृशा क्वचिल्लघु-पात्राणामपि कार्याणि गौरवं लभन्ते, महतामपि कार्याणि साधारण्यं यान्ति ।

### नायकगौरवेण

श्रेष्ठनायकानां परस्पर-संवादो महत्त्वपूर्णमेव काव्यार्थं प्रायः स्पृशति, तथोचितं वाग्विलासं च प्रकर्षति । तद्यथा स्वप्नवासवदत्तस्य षष्ठेऽङ्के उदयनः, पद्मावती, यौगन्धरायणश्च परस्परं कार्यवाहका यद्वदन्ति तत्तु तेषां महानुभावेन युगपद्विलासेन च महत्त्वमर्जति । पात्राणामवरत्वेन मृच्छकटिकस्य चतुर्थेऽङ्के विदूषक-चेटी-बन्धुलानां वार्ता नाट्यदृष्ट्यानर्हा स्यात् ।

### कालापेक्षया

नाटकीयोपनयो वर्त्तमान-भूतभविष्यकालेषु घटितानि वृत्तानि अधिकृत्य प्रवर्त्यते । तत्र वर्त्तमानघटनात्मकसंवादे भाविकतत्त्वं समुदेति । एतेन भाविकतत्त्वेन सद्यो प्रत्यग्रतयानुपमैव संवादच्छटा जायते । भूतभाविकार्यजातविषयकाः संवादास्तु भावकानां चितं न पर्याप्तं वासयन्ति तावन्मात्रम् ।

### पात्रविडम्बनया

संवादस्य रोचिष्णुता पात्राणां विडम्बनात्मकवृत्तेरनुसन्धानेन महतीं श्रियं विधत्ते । यथा मुद्राराक्षसे चाणक्यचन्द्रगुप्तयोः कृतककलहात्मकसंवादः, पञ्चरात्रे वा संविधानकौशलेन छायातत्त्वस्य सन्निवेशेन च भीमादीनां परस्परमभिमन्युना विराटेश्वरेण च सह संवादश्च सातिशयं प्रभवति । तथैव मध्यमव्यायोगे स्वप्नवासवदत्ते च रञ्जनाविलासः पात्राणां परस्पराज्ञातत्वेन भूयिष्ठं समुपजायते ।

संवादोत्कर्षदृशा वागनुरञ्जनं विधातुमिव पात्रविडम्बनाद्योविधं विरच्यते—

१ क्वचिन्निगूढा एव जना असत्यं परिचयं दत्त्वा व्यवहरन्तः संवादं प्रवर्तयन्ति । यथा स्वप्नवासवदत्ते यौगन्धरायणो वासवदत्ता च पद्मावत्यादिभिः सह, पञ्चरात्रे पाण्डवा अभिमन्युना विराटेश्वरेण च सह, मुद्राराक्षसे चाणक्येन नियुक्ताः कतिपय पुरुषा राक्षसस्यात्मीया जातास्तेन सह व्यवहरन्तः संवदन्ति । प्रायश एतादृशीषु स्थितिषु नाटकीयसूचनानुसारेण निगूढः प्रथमः पक्षो द्वितीय पक्षं जानाति, किन्तु द्वितीयः पक्षः प्रथमं पक्षं न जानाति । यथा—

| प्रथमः पक्षः | द्वितीयः पक्षः | नाटक-प्रसङ्गः |
|---|---|---|
| यौगन्धरायणः वासवदत्ता | पद्मावती, उदयनः | स्वप्नवासवदत्ते |

| | | |
|---|---|---|
| भीमः | घटोत्कचः | मध्यमव्यायोगे |
| भीमः, अर्जुनः, युधिष्ठिरः | अभिमन्युः | पञ्चरात्रे |
| इन्द्रः | कर्णः | कर्णभारे |
| सागरिका | वासवदत्ता | रत्नावल्याम् |

२. उभयपक्षौ परिस्थितिवशात् परस्परं न जानीतः, यद्यपि प्रेक्षकास्तयोः परस्परं सम्बन्धं जानन्ति। यथा कुन्दमालायां लवकुशौ रामश्च प्रेक्षकैर्ज्ञाता अपि परस्परं न जानन्ति।[1] तथैवाभिज्ञानशाकुन्तले दुष्यन्त-भरतौ न परस्परं जानीतः।

३. भ्रान्त्या पात्राणि परस्परं न जानन्तः संवदन्ति। यथा वेणीसंहारे युधिष्ठिरादयो दुर्योधनस्य रक्तेन रंजितो भीमोऽयमित्यविज्ञाय विषममेव संवदन्ति।

४. मायापात्राणां प्रयोगेण संवादसौरभं वितन्यते। यथा दूताङ्गदे मायासीताया रावणेनाङ्गदेन च सह संवादः। अत्र छायासीताया अयोग्यं भाषणं नाट्यदृष्ट्या चारु प्रवर्तते। कविभिर्नैकमायापात्राणां युगपत्प्रयोगो विधीयते। यथा क्षेमीश्वरस्य चण्डकौशिके धर्मः, विघ्नराट्, शिवः पार्वती च।

५. पशवः पशुवद् व्यवहरन्ति किन्तु मानुषोचितां भाषां प्रवदन्ति भासस्य बालचरिते।

पात्रविडम्बनान्यथापि जायते। यथा मुद्राराक्षसे राक्षसो मलयकेतुश्च मित्रभूतौ चाणक्यविनिर्मितेन कूटकपट-घटनानैपुण्यजनितेन मलयकेतोर्मतिभ्रमेण विप्रतिपद्येते। तदनु तयोरकाण्डेऽधोविधः संवादः प्रवर्तते—

मलयकेतुः —( सरोषम् ) किमद्यापि निह्नूयत एव।
विधेः किलैतद् व्यवसितम्, न लोभस्य।
अनार्य कन्यां तीव्रविषप्रयोगविषमांकृत्वा कृतघ्न त्वया
विश्रम्भप्रवणः पुरा मम पिता नीतः कथाशेषताम्।
सम्प्रत्याहितगौरवेण भवता मन्त्राधिकारे रिपौ।
प्रारब्धाः प्रलयाय मांसवदहो विक्रेतुमेते कथम्॥ ५.२१

---

१. रामो लवकुशा अधिकृत्य कथयति—
न चैतदभिजानामि नाकूतमपि किञ्चन।
तथाप्यापातमात्रेण चक्षुरुद्राष्पतां गतम्॥ ५.९

राक्षसः — ( स्वगतम् ) अयमपरो गण्डस्योपरि स्फोटः। (प्रकाशं कर्णौ पिधाय ) शान्तं पापं शान्तं पापम्। नाहं पर्वतेश्वरे विषकन्यां प्रयुक्तवान्।

कश्चिदनन्य एव वाग्विन्यासोत्कर्षः शत्रोर्मित्रत्वं सम्पाद्य भूतकालिकघटनानां रहस्योद्घाटनेन विचित्रतरेण निर्वहणेन च तेषां सम्भाषणद्वारेण चावर्जितः कृतिभिः कविवरैः। तद्यथा मुद्राराक्षसे—

चाणक्यः —किं बहुना

भृत्या भद्रभटादयः स च तथा लेखः स सिद्धार्थकः
स्तच्चालङ्करणत्रयं स भवतो मित्रं भदन्तः किल।
जीर्णोद्यानगतः स चापि पुरुषः क्लेशः स च श्रेष्ठिनः
सर्वं मे वृषलस्य वीरभवता संयोगमिच्छोर्नयः॥ ७.९

**भाग्यविपर्ययेण**

कस्यचित् पात्रस्य भाग्यविपर्ययेणोच्चावचदशा अधिकृत्य प्रवर्तिता उक्तयोऽविस्मरणीया भवन्ति। मृच्छकटिके वैषम्ये निपतितस्य चारुदत्तस्य वचांसि प्रमाणयन्ति—

वयस्य अलमिदानीं सर्वं परिवादमुक्त्वा। अवस्थयैवास्मि निवारितः। पश्य—

वेगं करोति तुरगस्त्वरितं प्रयातुं
प्राणव्ययान्न चरणास्तु तथा वहन्ति।
सर्वत्र यान्ति पुरुषस्य चलाः स्वभावाः
खिन्नास्ततो हृदयमेव पुनर्विशन्ति॥ ५.८

स एव चारुदत्तो मृत्युपाशाद् विमुक्तो भाग्यसम्पदं याति। यथा—

चारुदत्तः —प्रिये वसन्तसेने

त्वदर्थमेतद्विनिपात्यमानं देहं त्वयैव प्रतिमोचितं मे।
अहो प्रभावः प्रियसंगमस्य मृतोऽपि को नाम पुनर्म्रियेत॥

अपि च प्रिये पश्य—

रक्तं तदेव वरवस्त्रमियं च माला
कान्तागमेन हि वरस्य यथा विभाति।
एते च वध्यपटहध्वनयस्तथैव
जाता विवाहपटहध्वनिभिः समानाः॥ १०.४३

तत्रैव शकारस्य भाग्यविपर्ययश्चारुदत्तमुखेन—

शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः शस्त्रेण न हन्तव्यः,

शर्विलकः —एवम्, तर्हि श्वभिः खाद्यताम् ।

चारुदत्तः —नहि

उपकारहतस्तु कर्तव्यः ॥ १०.५४

नाटकेऽस्मिन् बहूनां नायकानां विपन्नता महोदयश्च संवादविषयभूतौ प्रेक्षकान् रञ्जयतः । शर्विलक, आर्यको, वसन्तसेना, मदनिका, संवाहकः, चन्दनकश्च सर्वे भाग्यचक्रारूढाः सवादसम्पत्ति विचित्रयन्ति स्वेषु प्रकरणेषु ।

स्वप्नवासवदत्ते नायिका वासवदत्ता ब्राह्मणस्य भगिनीभूता चिरं प्ररोहयति भाग्यविपर्ययानुषक्तं वाग्विन्यासम् ।

**वाग्वैदग्ध्येन**

नित्यनूतनालंकार-वीथ्याङ्गादिशाभी संवादो वैचित्र्येणैव शाश्वतं मनो हरति ।

**अद्भुतार्थप्रकटनेन**

अभिज्ञाने पुरोहितः शकुन्तलाया ज्योतिषापनयनं निवेदयति ।

**संवादिनां विशेषाः**

संवादे साधारणत एको वक्ता एकश्च श्रोता भवतः । एतयोर्भावोत्पत्ति-दृष्ट्या समानं महत्त्वं न सर्वत्र भवति । क्वचिद्वक्तुः क्वचिच्च श्रोतुरेव महत्त्वं दृश्यते । यथा केवलवक्तुर्महत्त्वं वेणीसंहारे युधिष्ठिरस्य—

युधिष्ठिरः —भद्रे बुद्धिमतिके, उच्यतामस्मद्वचनादम्बा—

येनासि तत्र जतुवेश्मनि दीप्यमाने<br>
निर्वाहिता सह सुतैर्भुजयोर्बलेन ।<br>
तस्य प्रियस्य बलिनस्तनयस्य पाप-<br>
माख्यामि तेऽम्ब कथयेत् कथमीदृगन्यः ॥६.२३

अत्र श्रोत्रीबुद्धिमतिकाया महत्त्वं मनागेव वर्तते । केवलं श्रोतुर्महत्त्वं वेणीसंहारे दुर्योधनस्य—ततस्तत इतिमात्रवादिनो दुर्योधनस्य सुन्दरकाद् युद्धवृत्तान्त-श्रवण-प्रकरणम् । अत्र सुन्दरकस्य रसनिष्पत्तिदृष्ट्येषदेव महत्त्वम्, श्रोतुर्दुर्योधनस्यानुभावादयो महत्त्वं भजन्ते ।

वक्तुः श्रोतुश्च समानं महत्त्व स्पृहणीयतमं भवति । तदेवाभिज्ञाने-ऽधोविधं दर्शनीयम्—

शकुन्तला—मुञ्च तावन्माम् । भूयोऽपि सखीजनमनुमानयिष्ये ।

राजा—भवतु । मोक्ष्यामि ।

शकुन्तला—कदा

राजा—

अपरिक्षतकोमलस्य यावत् कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते सदयं सुन्दरि गृह्यते रसोऽम् ॥

इत्यत्रोभयोरनुभावाः प्रेक्षणीयाः । संवादे वक्तुः श्रोतुश्च मानसिकस्थितेः प्रभावो भवेत् । सम्भ्रमविपन्नः पुरुषः विषण्णतयाभिभूतो लघु लघु वाक्यं वदति, मध्ये च किं कर्तव्यमिति विचारयता विलम्बते । यथोदयने वन्दीभूते प्रतिज्ञायौगन्धरायणे प्रथमेऽङ्के—

यौगन्धरायणः -- विजये स्थाप्यताम् ।

प्रतिहारी—किमिति भर्तृमातरं निवेदयामि ।

यौग०—विजये एवमेतत् ।

प्रतिहारी—किमेतत्

यौग०—इदम् ।

प्रतिहारी—भणतु भणत्वार्यो भणतु ।

यौग०—अथवा नैतच्छक्यं परिहर्तुम् । निवेदयिष्याम्यत्र भवत्यै । विजये, स्थिरीक्रियतामात्मा । ( कर्णे ) एवमिव ।

प्रतिहारी—हा ।

यौग०—विजया खल्वसि ।

प्रतिहारी—एषा गच्छामि मन्दभागा । अत्रैव श्रोतुर्मानसिकस्थितिं विचार्यैव भाषणीयमिति यौगन्धरायणेन प्रकटीकृतम् । तद्यथा—

यौग०—विजये, न खलु त्वयात्रभवत्यै गृहीतः स्वामीति सहसा निवेदितव्यम् । स्नेहदुर्बलं मातृहृदयम् ।

प्रतीहारी—कथमिदानीं निवेदयामि ।

यौग०—शृणु ।

पूर्वं तावद् युद्धसम्बद्धदोषाः
प्रस्तोतव्या भावनाः संशयानाम् ।
सन्दिग्धेऽर्थे चिन्त्यमाने विनाशे
रूढे शोके कार्यतत्त्वं निवेद्यम् ॥ १.१२

## घटनाकालापेक्षया

घटनाकलापेक्षया संवादस्त्रिविधो भवति—वर्तमानकालिकः, भूत-कालिकः भविष्यकालिकश्च। तत्र वर्तमानकालिकः संवादोऽभिनयवैचित्र्येण घटनाया प्रत्यक्षप्रदर्शनेन चातिशोभते।

वर्त्तमानघटनायाः कर्तारः परिजनादयः, साधकाश्च कार्यकाले परस्परं संवदन्तः प्रेक्षकाणां कृते प्रेष्ठं संभाषणं प्रस्तुवन्ति। तद्यथाभिज्ञानशाकुन्त-लस्य तृतीयेऽङ्के दुष्यन्तस्य शकुन्तलया तस्या सखीभ्यां च सह सम्भा-षणम्।

विषमस्थितौ क्वचिद् नायकस्य कार्यपथे बाधकानामपि चेष्टा रुचिर-संवादस्य विषयीभूताः प्रेक्षकान् रञ्जयन्ति। यथा रत्नावल्यां वासव-दत्ताया मालविकाग्निमित्रे चेरावत्या नवनायिका प्राप्तौ विरोधगर्भो विशिष्टः संवादः।

अवरविध एव संवादो वर्त्तमानघटनानां दर्शकेन विष्कम्भकादिषु प्रवर्त्यते। यथोत्तररामचरितस्य षष्ठाङ्कस्य विष्कम्भके लवचन्द्रकेत्वो-र्युद्धं परस्परं सम्भाषणेन तस्य दर्शकेन विद्याधरमिथुनेनोपनीयते।

प्रमुखपत्राणां भावाभिव्यक्तयः प्रेक्षकाणां भावसम्पत्तिसमृद्धये भवन्त्येव किन्तु परिजनानां विदूषक–चेट–चेटी–विटादीनां वचनविन्यासो रोचको भवेत्। लघुपात्राणामपि समीक्षा-वचांसि प्रेक्षकान् क्वचिद् भावसागरे निमज्जयन्ति[1]। अत एव संवादद्वारेण न केवलं महतामपितु अवराणां लघूनामपि पात्राणामुक्ति-प्रत्युक्तिषु कविर्दत्तावधानो दृश्यते। क्वचित् कतिपयपात्राणि वाग्वैशिष्ट्येन रञ्जनैकफलं प्रापयितुं नियोज्यन्ते। यथा मृच्छकटिके शकारः।

भावसम्पत्ति–सर्जनाय रङ्गपीठस्थौ वक्ता श्रोता चोभौ युगपदेव संवादविषयेण भावितौ भवेताम्, ताभ्यां सह रङ्गमधिष्ठितान्यन्यानि पात्राण्यपि प्रसङ्गतो भावितानि स्युरिति समीहितम्। यानि पात्राणि भावदृष्ट्या निरर्थकानि, तानि तु 'स्वनियोगमशून्यं कुरु' इति दिशा निष्क्रामयेत्, पृष्ठतो रङ्गशीर्षे वा तानि विश्राम्यन्तु इति नियमः।

## युगपत् संवादिनः

रङ्गे युगपद् भागग्राहिणां पात्राणां परमा संख्या भरतानुसारेण—

ये तत्र कार्यपुरुषाश्चत्वारः पञ्च वा ते स्युः। ना. शा. १८.४१

---

१. तत्रास्त्येतादृशं पात्रद्वयं शाकुन्तलस्य प्रथमाङ्के सख्यौ।

एतां कारिकामधिकृत्याभिनवगुप्तः स्पष्टयति 'यदि प्रकर्षस्तदा दशाष्टौ वा रङ्गे प्रविष्टा भवन्ति।' ततोऽधिकेषु त्वभिनयचतुष्टयं सम्यक्तयाविभावनीयं स्यात्, देवयात्रापरिदृश्यमानसमाजवत्।'

पात्रविषयको नियमस्तु लक्ष्यग्रन्थेषु सम्मानितो वर्तते। रङ्गे पात्राणां युगपत् समवायो दशाधिको नास्ति। स्वप्नवासवदत्तस्य प्रथमेऽङ्के ब्रह्मचारिणः संगमनेन सहस्थायि-पात्रसंख्या सप्त भवति। तेषु पात्रेषु ब्रह्मचारी यौगन्धरायणश्चोक्ति-प्रत्युक्ति-विधौ महत्त्वं भजेते। वासवदत्ता पद्मावती च भावनिदर्शन-दृष्ट्या महत्त्व भजेते। तापसी काञ्चुकीय-श्चेटी च स्वकीयैर्लघूक्तिभिः समीक्षावचनैर्महत्त्वं भजन्ते। अभिज्ञान-शाकुन्तलस्य पञ्चमाङ्कस्यान्तिमे भागेऽष्ट पात्राणि सन्ति। तेषु राजा, शकुन्तला शिष्यद्वयं गौतमी च कार्यार्थं संवादे सविशेषं भागग्राहिणः सन्ति। पुरोहितः कञ्चुकी, प्रतिहारी च मितभाषिणः समीक्षावचन-कृतश्च सन्ति। मृच्छकटिकस्य दशमाङ्कस्यान्तिमे भागे नव पात्राणि सार्धं रङ्गपीठमधितिष्ठन्ति। यथावसरमिमानि सर्वाणि पात्राणि संवादे भाग-ग्राहिणः सन्ति।

**रङ्गेऽवर्तमानाः श्रोतारः प्रतिवक्तारश्च**

नाटकस्य रङ्गपीठे पात्राणि यत् किञ्चिद् वदन्ति तत्सर्वं रङ्गपीठे वर्तमानानां पात्राणां श्रवणाय भवति। किन्तु स्वगतेन यत् प्रोच्यते न तत्केनापि श्रूयते, अथवा जनान्तिकापवारितकेन यत् कथ्यते कर्णे वा यदुच्यते नैतत् सर्वैः श्रूयते।

कविः क्वचिद् रङ्गेऽवर्तमानां श्रोतॄणां वक्तॄणां च सत्तां मत्वा तैः सह संवादं योजयति। तद्यथा प्रतिज्ञायौगन्धरायणे—

गात्रसेवकः—एते ते सुहृदो निरोधमुक्ता इव कृष्णसर्पा इतस्ततो निर्धावन्ति। भोः भोः सुहृदः, शृण्वन्तु शृण्वन्तु भवन्त :—

नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य माभून्नरकं स गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत्॥ ४.२

अत्र 'सुहृदः' इति सम्बोधिता जना रङ्गे न वर्तन्ते कविकल्पिता इव प्रेक्षकैरपि कल्पनीयाः सन्ति यथा वा। मृच्छकटिके—

चेटः (प्रविश्य)—अपेत मानवाः

यथा यथा वर्षत्यभ्रखण्डं तथा तथा तिम्यति पृष्ठचर्म।
यथा यथा लगति शीतवातस्तथा तथा वेपते मे हृदयम्। ५.१०

(प्रहस्य)

वंशं वादयामि सप्तच्छिद्रं सुशब्दं वीणां वादयामि सप्ततन्त्रीं नदन्तीम् ।
गीतं गायामि गर्दभस्यानुरूपं को मे गाने तुम्बरुर्नारदो वा ॥ ५.११

अत्र सम्बोधिता मानवा रङ्गे न सन्ति ।

अत्रैव पुनः —

संवाहकः —प्रेक्षध्वं प्रेक्षध्वं भट्टारकाः, हा साम्प्रतमेव एकस्यार्धे गण्डः कृतः। अपरस्यार्धं मुक्तम् । तथापि मामबलं साम्प्रतमेव याचते ।

अत्र भट्टारका रङ्गे न सन्ति

दशमेऽङ्के रङ्गेऽवर्तमाना जनाः पुनः पुन सम्बोधिताः सन्ति । यथा–
उभौ—अपसरत आर्या अपसरत । एष आर्यश्चारुदत्तः

इत्यादि यानार्यान् प्रति कथ्यते, न ते सन्ति रङ्गपीठे ।
अपरश्च—

उभौ—शृणुत आर्याः शृणुत । एष सार्थवाहविनयदत्तस्य पुत्रक आर्यचारुदत्तो नाम ।

तदनु स्थावरकश्चेटो रङ्गेऽवर्तमानानार्यान् सम्बोधयति–शृणुत आर्याः शृणुत। अस्तीदानी मया पापेन प्रवहणपरिवर्तनेन पुष्पकरण्डकोद्यानं वसन्तसेना नीता' इत्यादि ।

अतः परं वक्तार एव रङ्गेऽवर्तमानाः सन्ति ।[1]
तद्यथा—

शकारः —न हि कुम्भसदृशोऽहं स्त्रियं व्यापादयामि ।
सर्वे—त्वया मारिता । न आर्यचारुदत्तेन ।
शकारः —क एवं भणति ।

सर्वे—(चेटमुद्दिश्य) नन्वेष साधुः । सर्वेऽत्र रङ्गेऽवर्तमानाः पुरुषाः ।
अत्रैव पुनरवर्तमाना भट्टारकाः शकारेण सम्बोधिताः —

अलीकं भट्टारकाः इत्यादि ।
तदनु चेटोऽपि तान् भट्टारकान् सम्बोधयति—
पश्यत पश्यत भट्टारकाः । अहो सुवर्णेन मां प्रलोभयति ।

---

१. मृच्छकटिके १०.२९, ३०

अयं लोकानामवर्तमानः समूहः शर्विलकेनापि दृष्ट इव वर्ण्यते–(अग्रतो निरूप्य) भवतु, अत्र तेन भवितव्यम्, यत्रायं जनपदसमवायः।

त्वद्यानं यः समारुह्य यातस्त्वां शरणं पुरा।
पशुवद् वितते यज्ञे हतस्तेनाद्य पालकः॥ १०.५०

चारुदत्तः —शर्विलक, योऽसौ पालकेन घोषादानीय निष्कारणं कूटागारे बद्ध आर्यकनामा त्वया मोचितः। इत्यादि

वेणीसंहारस्य तृतीयाङ्कस्यारम्भे रङ्गपीठेऽवर्तमाना महारथाः कर्णादयोऽश्वत्थाम्ना सम्बोधिता अधोविधम्—

भो भोः कौरवसेना-समुद्रवेलापरिपालनमहामहीधरा नरपतयः, कृतं कृतममुना समरपरित्यागसाहसेन।

यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम्।

इत्यारभ्य

'ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः॥ ३.७

इति यावत्।

ततः परं

नेपथ्ये

कुतोऽद्यापि ते तातः।

अत्र नेपथ्यं तु रणभूमिः समग्रैव यथा पूर्वमेवाश्वत्थाम्ना कथितम्।

## भूतकालिकघटनात्मकः संवादः

अङ्केषु भूतकालिकघटनात्मको वाग्विन्यासः प्रायशः परिपृच्छामूल आख्यानात्मकश्च प्रायः श्रोतॄणामेवानुभावेन महिमानं लभते[1]। अत्र श्रोतारो रङ्गपीठे क्वचिद् घटनानुसारेणानुभावादीन् प्रकटयन्ति। यथा वेणीसंहारस्य पञ्चमेऽङ्के दुर्योधनो वृषसेनस्य मृत्युं यावत् समरकर्म शृणोति। वक्ता तत्र वर्तते सूतः श्रव्यकाव्यस्येव चमत्कारस्तत्र प्रायो विलसति।

स्वप्नवासवदत्तस्य प्रथमाङ्के लावाणकदाहस्य विवरणं ब्रह्मचारिणा

---

१. क्वचिद् वक्तुरनुभावेनापि—'यथाभिज्ञानशाकुन्तलेन द्वितीयाङ्के राजा विदूषकायाश्रमललामभूतया शकुन्तलया सह प्रणयारम्भं वर्णयति।' अत्र श्रोतुरनुभावा महत्त्वं नार्हन्ति।

प्रस्तूयते । श्रोतारः सन्ति वासवदत्ता, पद्मावती यौगन्धरायणश्च ।[1] एतेषां भावात्मकप्रतिक्रिया नाट्ये दर्शनीयाः सन्ति ।

मुद्राराक्षसे भूतकालिकघटनानां रहस्योद्घाटनं बाहुल्येन प्रवर्तते ।

तत्तु श्रव्यकोटिं भजते ।

तत्र शत्रुभावेनापि परिपृच्छानुवर्तते नाटकेषु । यथा महावीरचरिते शिवधनुषि रामेण भञ्जिते परशुरामस्य पृच्छात्मकः क्रोधोद्गारः ।

**भाविघटनात्मकः संवादः**

नायकस्य तस्य सहायानां च भाविघटनात्मकवचनोपन्यासः प्रवर्त्यते । प्रतिज्ञायौगन्धरायणे यौगन्धरायणो (उन्मत्तको ) विदूषकः (डिण्डकवेषः ) श्रमणकश्चोदयनस्य समुद्धाराय परामृशन्ति ।[2]

पूर्वोक्तास्त्रिविधाः संवादा वर्त्तमानभूतभाविविषयाः प्रायशः पृथक् पृथक् प्रवर्तन्ते, किन्तु सम्मिश्रितमपि तेषां स्वरूपं संविधानसौष्ठवेनैकत्राङ्के समुपस्थाप्यते । प्रतिज्ञायौगन्धरायणस्य प्रथमेऽङ्के संवादद्वारेणोदयनस्य भूतकालिकस्थितिः प्रथमं परामृश्यते, तदनु तस्य कौटुम्बिकानां वर्त्तमान-चिन्तानुशील्यते, पश्चाद् भविष्ये केनोपायेन तस्य कौशाम्ब्या प्रत्यावर्तनं विधेयमिति निर्णीयते ।

**संवाद-नैपुण्यम्**

कविप्रतिभा विचित्रविधसंवादयोजनया विलसति । तदर्थं विशिष्ट-संविधानं प्रकरोति कविः ।

**उत्स्वप्नायितम्**

स्वप्नायितेन संवादस्तु भूयिष्ठं रोचते । तद्यथा मृच्छकटिकस्य तृतीयेऽङ्के—

शर्विलकः —अये, परमार्थदरिद्रोऽयम् (चारुदत्तः) । भवतु गच्छामि ।

विदूषकः —( उत्स्वप्नायते ) भो वयस्य, सन्धिरिव दृश्यते । चौरमिव पश्यामि । तद्गृह्णातु भवानिदं सुवर्णभाण्डम् ।

शर्विलकः —( दृष्ट्वा ) अये, जर्जरस्नानशाटीनिबद्धं दीपप्रभयोद्दीपितं सत्यमेवैतदलंकरणभाण्डम् । भवतु गृह्णामि । अथवा न युक्तं तुल्यावस्थं कुलपुत्रजनं पीडयितुम् । तद् गच्छामि ।

विदूषकः —भो वयस्य । शापितोऽसि गोब्राह्मणकाम्यया यद्येतत् सुवर्णभाण्डं न गृह्णासि ।

---

१. अत्र संविधानकौशलेन साधका एव श्रोतारः सन्तीत्यनेन कविः सविशेषं चमत्कारमावर्जयति ।

२. तृतीयेऽङ्के ।

शर्विलकः —अनतिक्रमणीया भगवती गोकाम्या ब्राह्मणकाम्या च। तद् गृह्णामि। इत्यारभ्य

शर्विलकः —महाब्राह्मण, स्वपिहि वर्षशतम्। कष्टमेवं मदनिका-गणिकार्थे ब्राह्मणकुलं तमसि पातितम्। इति यावत्।

अत्र विदूषकः शर्विलकवचांसि न शृणोति सुप्तत्वात्, तथापि प्रत्युक्ति-द्वारा प्रासङ्गिकं संवदति, समाचरति चेति अपूर्वसिद्धिः संवादकलायाः।

**छायापात्रेण संवादः**

उत्तररामचरिते छायासीतया सह रामस्य संवादो वर्तते।

सीता—आर्यपुत्र धराम्येषा धरामि।

रामः —हा प्रिये जानकि, क्वासि।

सीता—हा धिक् हा धिक्, अन्य इवार्यपुत्रः प्रमुक्तकण्ठं प्ररुदितो भवति।

रामः —अयि वासन्ति, मया खलु।

यथा तिरश्चीनमलातशल्यं प्रत्युप्तमन्तः सविषश्च दन्तः।
तथैव तीव्रो हृदि शोकशङ्कुर्मर्माणि कृन्तन्नपि किं न सोढः॥३.३५

सीता—एवमपि मन्दभागिन्यहं या पुनरायासकारिणी आर्यपुत्रस्य।

रामः —अयि चण्डि जानकि, इतस्ततो दृश्यमानानुकम्पसे—

हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि॥ ३.३८

( इति मूर्च्छति )

सीता—हा धिक्, हा धिक्। पुनरपि मूढ आर्यपुत्रः, आर्यपुत्र, मा मन्दभागिनीमुद्दिश्य सकलजीवलोकमाङ्गलिकजन्मलाभस्य ते वारं वारं संशयितजीविततदारुणो दशापरिणाम इति हा हतास्मि।

रामः —सखि, किमन्यत्। पुनरपि प्राप्ता जानकी। पश्य नन्वियं पुरत एव।

कुन्दमालायामपि कविनैतादृशः संवादो विरचितः। तद्यथा—

रामः —देहि मे दर्शनं प्रिये।

सीता—प्रभवति सिद्धशासनम्। किमत्र करोमि मन्दभाग्यः।

रामः —त्यज्यतां दीर्घरोषोऽयं।

सीता—अहमपि आर्यपुत्रमेव विज्ञापयामि ।

रामः —किं नु निष्करुणामयि ।

सीता—आर्यपुत्र, विपरीतः खलूपालम्भः ।

रामः —देवि विज्ञापयामि त्वाम् ।

सीता—अवहितास्मि एषा आज्ञापय ।

रामः —यत्त्वं चारित्रशालिनी

सीता—अहो अत्यागयोग्या प्राणाः ।

रामः —निर्वासितासि विषयात् ।

सीता—प्रभवति आर्यपुत्रः सकलस्य परिजनस्य ।

रामः—अस्मिन् दोषे प्रसीद मे ॥ ४.१६

सीता—त्वं प्रसीद । नित्यप्रसन्नाहम् ।

एतेषु प्रसङ्गेषु रामः सीतां न पश्यति, तस्याः प्रतिवचनं न शृणोति च । तथापि यथायोग्यमुक्तिप्रयुक्तिः प्रेक्षकाणां कृते प्रवर्तते इति संवादोत्कर्षः ।

### प्रत्युत्पन्नमतित्वम्

प्रत्युत्पन्नमतित्वं नामोक्तेः प्राणाः ।[1] तत्तु पञ्चरात्रस्याद्योविधप्रकरणे निर्दशितम् ।

बृहन्नला—(भीमं प्रति) इहानयता किमिदानीमार्येण कृतम् ।

अवजित इति तावद् दूषितः पूर्वयुद्धे
दयितसुतवियुक्ता शोचनीया सुभद्रा ।
जित इति पुनरेनं रुष्यते वासुभद्रो
भवतु बहु किमुक्त्वा दूषितो हस्तसारः ॥ २.४५

भीमसेनः —अर्जुन

बृहन्नला—अथ किम्, अथ किम् । अर्जुनपुत्रोऽयम् ।

इति प्रत्युत्पन्नमतिनिष्ठोत्तरेणात्मनिगूहनमक्षुण्णं रक्षति अर्जुनः । अतएवानुत्तमोऽयं वाग्विन्यासः ।

प्रच्छन्नपात्रैः श्रुतानि प्रणयपदानि वाक्यानि सापराधजनेभ्यः साधिक्षेपं श्राव्यन्त इति भाषणस्य विरलाऽपि प्रोद्भिन्ना कला । तद्यथा मालविकाग्निमित्रे ।

इरावती—( सहसोपसृत्य ) पूरय पूरय । अशोकः कुसुमं न दर्शयति ।

---

१. प्रत्युत्पन्नमतित्वं तु सन्ध्यन्तरमेव ।

अयं पुनः पुष्पत्येव । इरावत्या वचनमिदं नायकस्याधोवचनमनुसरति—
स्पर्शामृतेन पूरय दोहृदमस्याप्यनन्यरुचेः । ३.१९

### विश्रब्धवचसां प्रतिवचनम्

रत्नावल्यामपि प्रच्छन्ना सती वासवदत्ता सागरिकोदयनयोः प्रणय-वार्त्तां श्रुत्वोदयनं प्रति तस्यैव विश्रब्धवचनं पुनर्वक्ति—

किमद्यापि सहजाभिजाताया सेवया दुःखमनुभूयते ।[1] इति

नाटकेषु बहुषु स्थलेषु पात्रं पात्राणि वान्तर्हितान्येवापरगणस्य स्व-विषयकं भाववचनं शृण्वन्ति । तद्यथाभिज्ञानशाकुन्तलस्य तृतीयेऽङ्के नायकः सख्योः शकुन्तलायाश्च वचांसि स्वविषयकाणि शृणोति उत्कायते च ।[2] उत्तररामचरिते बहुशश्छायासीता रामस्य वासन्त्याश्च सम्भाषणं श्रुत्वा भावविह्वला जायते । तत्र सामाजिका युगपदेव संवादगणद्वयस्य भावान् सम्भुजन्तो रसनिष्पत्तिमूरीकुर्वन्ति ।

### अप्रसङ्गेऽपि माधुर्यस्य संकेतः

माधुर्यं नाम नायकयोर्मधुरः प्रणयाभिलाषः । नायिकाया नायकं प्रति भावविलासं श्रोतुकामा भवन्ति प्रेक्षका इति विचार्य कविरप्रसङ्गेऽपि संवादाभिप्रायेषु नायिकामुखेनैव नायकाभिलाषाभिव्यक्तिं त्वरयति । यथा मालविकाग्निमित्रे—

बकुलावलिका—एष उपारूढराग उपभोगक्षमः पुरतस्ते वर्तते ।

मालविका—( सहर्षम् ) किं भर्ता ।

बकुलावलिका—( सस्मितम् ) न तावद् भर्ता । एषोऽशोकशाखाव-लम्बी पल्लवगुच्छः ।

**रत्नावल्याम्**

सुसंगता—सखि ( सागरिके ) यस्य कृते त्वमागता सोऽयं ते पुरत-स्तिष्ठति ।

सागरिका—( सासूयम ) सुसङ्गते, कस्य कृतेऽहमागता ।

सुसंगता—( विहस्य ) अयि अन्यशङ्किते ननु चित्रफलकस्य । तद्-गृहाणैतत् ।

सागरिका—( सरोषम् ) अकुशलास्मि तवेदृशानामालापानाम् । तदन्यतो गमिष्यामि । (इति गन्तुमिच्छति) इत्यनेन माधुर्यं प्रकटीकृतम् ।

---

१. रत्नावली ३.१८/१९

२. कुन्दमालायाश्चतुर्थेऽङ्के सीता दृष्टा सती रामलक्ष्मणयोः स्वविषयकाणि वचांसि शृणोति प्रतिक्रियां च व्यनक्ति ।

## अप्रस्तुत-प्रशंसा

संस्कृतनाटकेषु संवादो विषय-प्रतिपादन-सम्पत्त्या प्रस्तुतप्रशंसया महतीं रोचनतां विधत्ते । कतिपयोदाहरणानि तस्याः सद्यो ध्रुवतां निष्कर्षस्य निदर्शनायालम्—

**मालविकाग्निमित्रे**

मालविका-प्रणयपथेऽग्निमित्र इरावत्या निगृहीतो विदूषकेण वर्ण्यते—

(१) अहो अनर्थः सम्पतितो बन्धनभ्रष्टो गृहकपोतो विडालिकाया आलोके पतितः ।[1]

अन्यत्र—

(२) उपस्थितं नयनमधु सन्निहितमाक्षिकं च ।

(३) भ्रमरसम्पातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसितव्यः ।

(४) चन्दनं खलु मया पादुकोपयोगेन दूषितम् ।

(५) किं नु खलु दर्दुरा व्याहरन्तीति देवः पृथिव्यां वर्षितुं स्मरति ।

**विक्रमोर्वशीये—**

(१) प्रथमं मेघराजिर्दृश्यते पश्चाद्विद्युल्लता

(२) लोष्ट्रेण सूचितस्य कुम्भीरकस्यास्ति वा प्रतिवचनम् ।

(३) छिन्नहस्ते मत्स्ये पलायिते निर्विण्णो धीवरो भणति गच्छ धर्मो मे भविष्यति ।

**अभिज्ञानशाकुन्तले**

(१) को नामोष्णोदकेन नवमालिकां सिञ्चति ।

(२) यद्वेतसः कुब्जलीलां विडम्बयति, तत्किमात्मनः प्रभावेण, उत नदीवेगस्य ।

(३) तेन हि ऋतुसमवायचिह्नं प्रतिपद्यतां लताकुसुमम् ।

(४) को नाम शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति ।

## वक्तुः प्रतिवक्तुश्च समानं वचः

संविधानकौशलेन एकमेव श्लोकं वक्ता प्रतिवक्ता च वदत इति विरलतरमेव संवाद-पाटवं मालतीमाधवेऽधोविधं विलसति—

---

१. मालविकाग्निमित्रे ४.१७/१८

माधवाघोरघण्टावन्योन्यमुद्दिश्य पठतः —

कठोरास्थिग्रन्थिव्यतिकरघणत्कारमुखरः
खरस्नायुच्छेदक्षणविहितवेगव्युपरमः ।
निरातङ्कः पङ्केष्विव पिशितखण्डेषु निपत-
न्निसर्गान्त्रं गात्रं सपदि लवशस्ते विकिरतु ॥ ५.३४

## बहूनां सहवक्तृता

विरला एव महाकवयः संवादे सौष्ठवेन बहूनां पात्राणां सहवक्तृतां संविधातुं समर्था भवन्ति। श्रीहर्षो रत्नावल्यां सह वक्तृतामधोविधं सन्निवेशयति—

राजा—

क्वासौ गतो हुतवहस्तदवस्थमेत ।
दन्तःपुरं कथमवन्तिनृपात्मजेयम् ॥

वासवदत्ता—दिष्टया क्षतशरीर आर्यपुत्रः ।

राजा—बाभ्रव्य एष ।

बाभ्रव्यः —देव इदानीं प्रत्युज्जीविताः स्मः ।

राजा—वसुभूतिरयम् ।

वसुभूतिः —विजयतां महाराजः ।

राजा—वयस्य ।

विदूषकः —जयतु जयतु भवान् ।

राजा—स्वप्ने मतिर्भ्रमति किन्विदमिन्द्रजालम् ॥ ४.१९

अत्रैकस्मिन्नेव पद्ये नैकपात्राणां गद्यात्मकवचनविन्यासस्य सन्निवेशः सम्भ्रमस्य परां कोटिं गमयति। राज्ञो वचांसि पद्यमेकं निर्मान्ति ।

## आक्षेपसहः सवादः

नाटकेषु क्वचिदाक्षेपसह संवादः प्रवर्तते। तथाहि अभिज्ञान-शाकुन्तले—

अदितिः—भगवन् अस्या दुहितृमनोरथ-सम्पत्तेः कण्वोऽपि ताव-च्छ्रुतविस्तारः क्रियताम्। दुहितृवत्सला मेनकेहैवोपचरन्ती तिष्ठति ।

शकुन्तला ( आत्मगतम् ) मनोरथः खलु मे भणितं भगवत्या ।

मारीचः—तपःप्रभावात् प्रत्यक्षं सर्वमेव तत्रभवतः ।

राजा—अतः खलु मम नातिक्रुद्धो मुनिः।

मारीचः —तथाप्यसौ प्रियमस्माभिः प्रष्टव्यः। प्रकरणेऽस्मिन् शकुन्तलाया आत्मगतं राज्ञश्च स्वानुभूतिवचनमाक्षेप एवादितिमारीचयोः संवादे।

क्वचिच्छ्लोकमध्येऽपि तत्राक्षेपो दृश्यते। यथा मृच्छकटिके—

चारुदत्तः —शत्रुःकृतापराधःशरणमुपेत्यपादयोःपतितः।
शस्त्रेण न हन्तव्यः।

शर्विलकः —एवं तर्हि श्वभिः खाद्यताम्

चारुदत्तः —उपकारहतस्तु कर्तव्यः॥ १०.५४

भवभूतेराक्षेपसहाः श्लोका विलसन्ति। यथा

रामः —हन्त तिर्यञ्चोऽपि परिचयमनुरुन्धते।
कतिपयकुसुमोद्गमः कदम्बः
प्रियतमया परिवर्धितोऽयमासीत्।

सीता—( सास्रम् ) सुष्ठु प्रत्यभिज्ञातमार्यपुत्रेण।

रामः —स्मरति गिरिमयूर एष देव्याः।
स्वजन इवात्र यतः प्रमोदमेति॥ ४३.२०

गण्डनामकं वीथ्यङ्गं तु वस्तुतः संवाद आक्षेप एव।

**स्वगत-जनान्तिकापवारितानि**

संवाद-मध्ये संस्कृतनाटकेषु स्वगतवचनस्य महत्त्वपूर्णस्थानं विद्यते।[1] स्वगतवचांसि तु रङ्गस्थपात्राणां ज्ञानाय न भवन्ति, किन्तु प्रेक्षकाणां मानसे ऽनन्यविधिना साध्यां भाव-सम्पत्ति तानि संयोजयन्तीति नाविदितं सुहृदाम्।

साधारणतः स्वगतं तु सम्भाषणे व्यापृतयोर्द्वयोः पात्रयोरुक्ति प्रत्युक्ति-मध्ये भवति। किन्तु विरलस्थलेषु सम्भाषणेऽविषयीभूतस्याव्यापृतस्य च पात्रस्य स्वगतभाषणमनुपमं भावराशिं जनयति। तद्यथाभिज्ञानशाकुन्तले पञ्चमाङ्के प्रतीहार्या आत्मगतम्—

अहो धर्मविक्षिता भर्तुः। ईदृशं सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति।

चतुर्थाङ्के वा कश्यपस्य—

पातुं न प्रथमं व्यस्यति युष्मास्वपीतेषु या। इत्यादि

---

१. स्वगतवचनं तु संवाद आक्षेप इव भवति क्वचित्।

स्वगतेन क्वचिदविबुद्धा बोध्यन्ते सौरभम् शृङ्गारपथस्याभिधया। तद्यथा मृच्छकटिके यदावसन्तसेनाकथयत्—भाव एषा छत्रधारिका भावस्यैव भवतु।

विटः—( स्वगतम् ) अनेनोपायेन निपुणं प्रेषितोऽस्मि

स्वगत-वैविध्यमधोविधं विलसति—

(१) कस्यचिद् वचनं श्रुत्वा मनसि यदुत्तरं जन्यते, तदभणित्वापरमेवोत्तरं प्रकाशेन विधिना दीयते। यदुत्तरं मानसे जन्यते, तदपि प्रेक्षकैर्ग्राह्यमिति स्वगतविधिना प्रकाश्यते।

(२) कामपि विशेषस्थितिं कस्यापि वचनाद् ज्ञात्वा न प्रत्युत्तररूपेण किमपि प्रोच्यते, किन्तु स्वीयां मानसिकीं प्रतिक्रियां स्वगतेन प्रकाश्यते।

(३) न किमपि न कुतोऽपि श्रूयते केवलमात्मनो मानसिकस्य वाचिकस्य शारीरिकस्य वा मर्मणो विवरणं प्रकाश्यते।

एतैस्त्रिविधैर्भाषणैः प्रेक्षकाः कमपि विशेषं रसास्वादं लभन्ते।

कस्यापि पात्रस्य पौर्विकसंवादेन या मानसिकस्थितयोऽप्रकटिता अवशिष्यन्ते ताः प्रेक्षकाणां बोधविषयं कर्त्तुमेव सविशेषमुपयुज्यन्ते स्वगत-जनान्तिकापवारितानीति तेषामनन्यसाध्या फलप्रपत्तिर्नाट्यधर्मी सती काव्यार्थोपनयदृशा महत्त्वमर्हति।

**द्व्यर्थपदयोजना**

श्लिष्टार्थेन क्वचिच्चमत्कारः समुत्पाद्यते। तत्र वक्तुरर्थविशेषः श्रोत्रान्यथा गृह्यते। तद्यथा नागानन्दे पञ्चमेऽङ्के—

शङ्खचूडः—हा त्रिभुवनैकचूडामणे, क्व मया द्रष्टव्योऽसि। मुषितोऽस्मि।

जीमूतकेतुः—( आकर्ण्य सहर्षं विहस्य ) देवि मुञ्च शोकम्। अस्यायं चूडामणिर्नूनं मांसलोभात् केनापि पक्षिणा मस्तकादुत्खायानीयमानोऽस्यां भूमौ पपात।

प्रकरणेऽस्मिन् त्रिभुवनैकचूडामणिस्तु जीमूतवाहन इति वक्ताभिप्रैति किन्तु जीमूतकेतुस्तु त्रिभुवनैकचूडामणिरिति शंखचूडस्य श्रेष्ठमणिरिति प्रतिबोधति।

पूर्वोक्ते वाक्ये 'मुषितोऽस्मि' इति शंखचूडेन 'विप्रलब्धोऽस्मि' इत्यभिप्रैति किन्तु जीमूतकेतुस्तु शखचूडस्य मणिरपहृत इति गृह्णाति।

द्व्यर्थकसन्दर्भेण प्रणय-प्रवृत्तयः साधु प्रकाश्यन्ते। तद्यथा मालविकाग्निमित्रे विदूषकः—'भोः विश्रब्धो भूत्वा त्वं यौवनवतीमिमां प्रेक्षस्व।

अस्मिन् सन्दर्भे यौवनवती मालविका मनसाभिप्रेता। तपनीयाशोकस्य कुसुमशोभेति अनभिप्रेतोऽर्थः श्राव्यते राज्ञे।

द्व्यर्थकवाक्यानि क्वचित् कूटोक्तयो नाटकेषु रोचकानि भावविलसितानि समुपस्थापयन्ति। तद्यथा मुद्राराक्षसस्य चतुर्थाङ्कस्यान्तभागे जीवसिद्धिः स्ववचनैः श्लेषात्मकं राक्षसं चन्द्रगुप्तस्य ह्यमेव कल्याणावहमिति निर्दिशति। साधारणतो राक्षसश्चन्द्रगुप्तमभिषेणयितुं मूहूर्तं जानात्विति तस्य वाक्यार्थः।

वेणीसंहारे च भानुमतीवचने दुर्योधनोऽकल्पितमभिप्रायं बोधति। तद्यथा

भानुमती—ततोऽहं तस्यातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता हृतहृदया च।

राजा—( सवैलक्ष्यम् ) किंनामातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका हृतहृदया च। तत् किमनया पापया माद्रीसुतानुरक्तया वयमेवं विप्रलब्धाः।

अत्र भानुमती नकुलेनाहीनां नाशं विवक्षति। दुर्योधनस्तावद् भानुमत्या नकुलेन प्रणय-व्यवहारं प्रतिबुध्यते।

## सूक्ष्मनिदर्शनम्

संवादस्य महामूल्यं सूक्ष्मनिदर्शनात्मकैर्वाक्यैः संवर्धते। एतदर्थं क्वचित् सत्यमपि वितथीकृत्य परात्परं सत्यं प्रतिष्ठाप्यते। तद्यथा मृच्छकटिके—

चारुदत्तः—अयोग्यमिदं न्यासस्य गृहम्।

वसन्तसेना—आर्य अलीकम्। पुरुषेषु न्यासा निक्षिप्यन्ते, न पुनर्गेहेषु।

एतादृशानि वाक्यानि प्रेक्षकाः कण्ठ्यीकृत्यात्मसंस्काराय निदधति।

## निगूढवचनम्

नाटके तु किमपि साक्षाद्वचनं न तावन्मात्रं रमणीयं यावन्मात्रं निगूढवचनम्। तथाहि—भवान् ( अविमारकः ) नायिकायाः सङ्गतिं राजभवने प्राप्तुमर्हसि इति साक्षाद्वचनं भासेन निगूढरीत्याधोविधं कथितम्—

धात्री—योगमिच्छन्त्यावागते स्वः। अनुमत आर्येण योग इति ननु निष्ठितं कार्यमस्माकं राजकुले विविक्तेऽवकाशे। तत्रापि कोऽपि जनोऽधिक-

तरं योगं चिन्तयन्नस्ति । तेन सह तत्रैवार्येण सुष्ठु योगविधानं चिन्त्यतामिति ।[1]

### उत्प्रेक्षाद्वारेण भाविकार्यसूचना

क्वचित् प्रागेव प्रयुक्तेन विशेषणेन भाविकार्यस्याभासः कार्यते कविवरैः। तद्यथा अविमारके—

पूर्वा तु काष्ठा तिमिरानुलिप्ता
सन्ध्यारुणाभाति न पश्चिमाशा ।
द्विधा विभक्तान्तरमन्तरिक्षं
यात्यर्धनारीश्वररूपशोभाम् ॥२.१२

अत्रार्धनारीश्वरस्य छायया नायकस्य भावी प्रणयिनीसंयोग इष्यते ।

### भारतीया वचोभेदाः

नाटके पात्राणामपात्राणां वचांसि प्रेक्षकाणां मनोरञ्जनाय भवन्ति । नैतानि सर्वत्र प्रश्नोत्तररूपेण सन्ति, बहूनां नायकानां परस्परविचारविमर्शात्मकगोष्ठी नाटकेषु विलसति प्रायशः, किन्तु एताभ्यां भिन्नानि अपि वर्तन्ते वाक्यानि । भरतेन तेषां विवरणं नातिसम्यगवगाहविधिना प्रस्तुतमधोविधम्—

आभाषणं तु यद्वाक्यमालापो नाम स स्मृतः ।
अनर्थकं वचो यत्तु प्रलापः स तु कीर्तितः ॥
करुण-प्रभवो यस्तु विलापः स तु कीर्तितः ।
बहुशोऽभिहितं वाक्यमनुलाप इति स्मृतः ॥
उक्ति-प्रत्युक्ति-संयुक्तः संलाप इति कीर्तितः ।
पूर्वोक्तस्यान्यथावादो ह्यपलाप इति स्मृतः ॥
तदिदं वचनं ब्रूहीत्येष सन्देश उच्यते ॥
यत्त्वयोक्तं मयोक्तं तत्सोऽतिदेश इति स्मृतः —
स एषोऽहं ब्रवीमीति निर्देश इति कीर्तितः ।
व्याजान्तरेण कथनं व्यपदेश इहोच्यते ॥
इदं कुरु गृहाणेति ह्युपदेशः प्रकीर्तितः ।
अभ्यार्थकथनं यत्स्यात् सोऽपदेशः प्रकीर्तितः ।

नाο शाο २२.५४–५९

---

1. अवि २०६/२०७

अभिनवगुप्तानुसारेणालापस्तु कस्यचित्पात्रस्य विशेषणमात्रं योजयति। यथाभिज्ञानशाकुन्तले—

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः

प्रलापस्तु प्रासंगिको न भवति। यथा विक्रमोर्वशीये—

हंस प्रयच्छ मे कान्तां गतिस्त्वस्यास्त्वया हृता ॥ इत्यादि ४.१७

अनुलापस्तु असकृत् प्रोक्तं तदेव वचः। यथा मृच्छकटिके।

किं कुलेनोपदिष्टेन इत्यादि ८.२९ तथा ९.७ श्लोकः।

संलापस्तु संवाद एव।

अपलापस्तु पूर्ववचनविरुद्धोक्तिः। यथा स्वप्नवासदत्तस्य षष्ठेऽङ्के राज्ञो वचने प्रतीयतेऽधोविधम्—

राजा—निर्यातय पद्मावति। साक्षिमन्न्यासो ( वासवदत्ता ) निर्यातयितव्यः।

राजा—कथं महासेनपुत्री! देवि ( वासवदत्ते ) प्रविशत्वभ्यन्तरं पद्मावत्या सह।

अतिदेशस्तु द्वयोः पात्रयोः समानं वचनम्।

यथा मृच्छकटिके दशमेऽङ्के—

शकारः—व्यापादिता।

चारुदत्तः—एवमस्तु।[1]

समानमेव श्लोकं वक्ता प्रतिवक्ता च मालतीमाधवे पठतः।[2] निर्देशस्तु प्रतिज्ञावचनम्। यथा प्रतिज्ञायौगन्धरायणे।

यौगन्धरायणः—विजये

यदि शत्रुबलग्रस्तो राहुणा चन्द्रमा इव।
मोचयामि न राजानं नास्मि यौगन्धरायणः ॥ १.१६

व्यपदेशस्तु अप्रस्तुतेन प्रस्तुतस्य कथनम्।

यथाभिज्ञानशाकुन्तले—

---

१. मृच्छ १०.३३/३४

२. कठोरास्थिग्रन्थिव्यतिकरघणत्कारमुखरः। इत्यादि ५.३४

'चक्रवाकवधुके, आमन्त्रयस्व सहचरम् । उपस्थिता रजनी ।' इत्यनेन व्यपदेशेन शकुन्तला दुष्यन्तसंगतिरसाम्प्रतमिति सूचिता ।

अन्यविधा उपदेश-विलाप-सन्देशादयः स्पष्टाभिप्राया एव पारिभाषिक वैशिष्ट्यं नार्हन्ति ।

इमे आलापादयो द्वादश उपनयविधा वाचिकाभिनयात्मका मार्गा इति भरतेनोदाहृतम् । एतेषां द्वादशानां सप्त प्रकाराः सन्ति— प्रत्यक्षः, परोक्षः, कालत्रयात्मकास्त्रयः, आत्मस्थः, परस्थश्च[1] । एतादृशैः सूक्ष्मेक्षया वाक्याभिनयस्य कोटिशतान्येकानि भवन्ति भेदाः ।[2]

## वक्तुः सत्त्व-पद-कार्योचिता भाषा

पात्रानुरूपभाषात्वमिति भोजराजेन निर्दिष्टम् । अतः संस्कृत-प्राकृतादयो भाषाः पात्राणां स्त्रीपुरुषत्वेनोत्तममध्यमादि-कोटिविचारणेन चावधारिताः[3] । अन्यच्च भेदोऽत्र गुणालङ्काररीत्यादीनां विचारेण कल्पितः । ग्राम्यशब्दा ग्राम्यैर्जनैर्ग्राम्यविषयाधिकरणे प्रयोजनीयाः । उच्चस्तरीया महासत्त्वा गुणालङ्काररीत्यपेक्षया उच्चस्तरीयां भाषां प्रवदन्ति ।

'वाचि यत्नस्तु कर्तव्यः' इति भरतवचनम्[4] । नाटके वचनविन्यासो वक्तुः श्रोतुश्च मानसिकस्थितेर्वार्ताविषयस्य चानुकूल्येन प्रचरेत् । कस्यापि नायकस्य गौरवमौदात्त्यं च तस्य भाषया व्यज्येते ।

मृच्छकटिके बहुविधनायकानां पदोचिता कार्योचिता च भाषा पदे-पदे विलसति ।

नाटके साधारणनियम आसीद्यत्—

मृदुशब्दाभिधानञ्च कविः कुर्यात्तु नाटकम् ।

तथापि वक्तुः सत्त्वपदकार्यादीनां विचारेण परुषाक्षरवैभवानां पदानां प्रयोगो दृश्यत एव । तद्यथा—

---

१. एतेषां स्पष्टं विवरणं नाट्यशास्त्रे २२.६२–७० द्रष्टव्यम् ।

२. ना० शा० २२.७१ अधिकृत्यभारती ।

३. स्त्री वसन्तसेना श्लोकान् संस्कृतेन वदति मृच्छकटिके । तत्रैव क्वचिद् सा गद्यमपि संस्कृतेन वदति । ४.३२/३३

४. ना० शा० १४.२

संवादस्य भाषा तु पात्रानुरूपिणी भवत्येव। पात्राणामुत्तमाधमत्वं वृत्तिं प्रवृत्तिं च विचार्य कविस्तदनुरूपौ शब्दार्थौ प्रयोजयेत्। तद्यथा मृच्छकटिके—

चन्दनकः—अरे राअउलं अधिअरणं वा वच्च। किं तुए सुणअसरिसेण।

अत्र जात्यासच्छूद्रौ कर्मणा सेनाभृतौ पुरुषौ। संवादिनौ स्तः। सदृशौ स्वपदस्य शब्दार्थौ प्रयुङ्क्तः।

तत्रैव सप्तमेऽङ्के

चारुदत्तः—वर्धमानक चरणान्निगडमपनय।

वर्धमानकः—यदार्य आज्ञापयति। (तथा कृत्वा) आर्य अपनीतानि निगडानि।

आर्यकः—स्नेहमयान्यन्यानि दत्तानि।

अत्र आर्यकस्य महासत्त्वानुरूपं प्रतिवचनं कविक्रियां शिखरीकरोति।

तदनु वक्तृश्रोत्रौदात्त्यैकात्म्यानुरूपं संवादकलामनुत्तमां कुरुते पदान्वयनगत्या—

चारुदत्तः—क्षेमेण व्रज बान्धवान्।

आर्यकः—ननु मया लब्धो भवान् बान्धवः।

चारुदत्तः—स्मर्तव्योऽस्मि कथान्तरेषु भवता।

आर्यकः—स्वात्मापि विस्मर्यते।

चारुदत्तः—त्वां रक्षन्तु पथि प्रयान्तममराः।

आर्यकः—संरक्षितोऽहं त्वया।

चारुदत्तः—स्वैर्भाग्यैः परिरक्षितोऽसि।

आर्यकः—ननु हे तत्रापि हेतुर्भवान्॥ ७.७

आर्षोचितं वचनं विश्वामित्रस्य महावीरचरिते—

एष तावदोङ्कारः सकलराक्षससंहार-निगमाध्ययनस्य[1]।

भूयिष्ठ-समस्तपदयोजनया कार्यस्यानवरतसातत्यं व्यज्यते भावानुकूलपदध्वनिः सृज्यते च। तद्यथा मालतीमाधवे—

'त्रस्तकलहंसविभ्रमाभिरामचरण-संचरण-रणरणायमान-मञ्जुमञ्जीर-रणितानुविद्धमेखलाकलाप-किंकिणी-रणरणत्कारमुखरम्' इति समस्त-

१. महा० १.४०/४१

पदैः मालती-सखीनां पाद-संचरणस्य सातत्यं शृङ्गारोचितमसृणपद-ध्वनिश्च व्यज्येते ।

महासत्त्वाः पृथग्जनेभ्य इतरामेव शब्दावलीं प्रयुंक्ते । तद्यथा वेणी-संहारे युधिष्ठिरः कथयति—

मुने, निर्वर्त्यतामुदन्याप्रतीकारःअत्र साधारणजनः 'पिपासा-प्रतीकारः' इति कथयेत् । उदन्याशब्दस्तु महाजनानामेव रिक्थम् ।

अतः परं तत्रैव युधिष्ठिरो वदति—'सम्यग्वेदी भवान् ।' अत्र सम्य-ग्वेदी महासत्त्वानां मुखे विलसति ।

कञ्चुकी राजकीय-शिष्टाचारसंस्कृति-विषयको विद्वान् आसीत् । तस्य वाणी तु संवाद-सौष्ठवस्यादर्शः स्यात् । यथा विक्रमोर्वशीये—

कञ्चुकी--न तु मे वर्णविभवसहा दृष्टिः । ५ ६/७

### भावानुरूपा भाषा

उदात्तान् भावानुदात्तैव भाषा संसेवेतेति कवयोऽवदद्यति ।

उदात्तपराक्रमान् यः कश्चिद् वर्णयति स वर्णनकाले स्वयमपि उदात्तो भवतीति विचारेण क्वचिद् हीनपात्राणामपि संस्कृतभाषाप्रयोगो निर्दिष्टः ।[1] यथा—पञ्चरात्रे

बृहन्नला—सुणादु भट्टा ।

राजा—ऊर्जितं कर्म । संस्कृतमभिधीयताम् ।

बृहन्नला—श्रोतुमर्हति महाराजः । इत्यादि

मृच्छकटिके प्राकृतभाषी चन्दनको गोपालायाभयं संस्कृतेन ददाति । तद्यथा—

आर्यकः —शरणागतोऽस्मि ।

चन्दनकः —( संस्कृतमाश्रित्य) अभयं शरणागतस्य ।

अतः परं स आर्यकेणापि सह प्राकृतं वदति ।

---

१. मातृगुप्तमतानुसारेण

नीचानां पण्डकानां च नीचविग्रहकारिणाम् ।

विद्वद्भिः प्राकृतं कार्यं कारणात् संस्कृता क्वचित् ॥

अर्थद्योतनिकायां राघवभट्टेन ४.५ अभिकृत्योद्धृतम् ।

**परिवेशादुपमानम्**

त्रैलोक्यादपि कवय उपमानानि यथावश्यकं संगृह्णन्ति। एतत् सर्वथोचितमेव, किन्तु कार्यस्थल्याः परिवेशवर्तीनि उपमानानि सविशेषं रोचमानानि नाटकेषु भूयिष्ठं राजन्ते। यथाभिज्ञानशाकुन्तलस्य सप्तमेऽङ्के परिवेशस्तु आरण्यकतपोवनभूमिर्विलसति। तत्र बालमृगेन्द्रशावकः क्रीडनकीकृतः। तत्रोपमानि वन्यानि सन्ति। यथा—

> तेन हि ऋतुसमवायचिह्नं प्रतिपद्यतां लताकुसुमम्। ७.२५/२६
> कृष्णसर्पशिशुनेव चन्दनम्। ७.१८
> उदेति पूर्वं कुसुमं ततः फलम्। ७.३०
> यथा गजो नेति समक्षरूपे। ७.३१
> यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥७.११
> अमृतह्लदमिवावगाढोऽस्मि ।७.११/१२
> नवोषसा भिन्नमिवैकपङ्कजम् ॥ ७.१६

मालतीमाधवे च —

'शीतलस्पर्शस्त्वां परिष्वजति कुसुमाकरोद्यानमारुतः।'[1] इत्यत्र परिसरप्रभावेणोत्प्रेक्षा।

## रसानुरूप-सन्दर्भत्वम्

यद्यपि भरतेन मृदुशब्दाभिधानं नाटकं कुर्यादिति बाहुलकेन विहितवान्, तथापि भोजेन रसानुरूप-सन्दर्भत्वं साधु व्याख्यातम्। तथा हि—रति-प्रकर्षे कोमलः, उत्साह-प्रकर्षे प्रौढः, क्रोध-प्रकर्षे कठोरः, शोकप्रकर्षे मृदुः, विस्मय-प्रकर्षे तु स्फुट शब्दसन्दर्भो विरचनीयः।

रसादोनामुपकर्त्री गुणानुरूपिणी पदसंघटना रीतिरिति सिद्धान्तः प्रथित एव। तत्र वागभिनयप्रधाने नाटके रीतिः सविशेषं महत्त्वमर्हति। बुद्ध्यारम्भेषु वचनविन्यासक्रमो रीतिः। सैव काव्योत्कर्षे महिमानं भजत इति साररूपतया काव्यस्यात्मेत्युच्यते।

रसानुरोधिशब्दचयनं भवेदिति मतमभिनवगुप्तस्य। 'मदनरिपुरिति भगवत्पर्यायश्चेति तदीयशृङ्गारवर्णने न प्रयोक्तव्यम्।

---

१. मालतीमाधवे ३.३/४

पर्यायौ स्तो वैदग्ध्यं वैदग्धी च। तत्र वैदग्ध्यस्य स्थाने वैदग्धी प्रयोज्या, यतो हि नाम स्त्रीप्रत्ययेन सौभाग्यातिशयप्रतीतेः।

अन्ये च बहुविधा विचाराः शब्दचयनमधिकृत्य भरतेन निगदिताः संस्कृतव्याकरणार्णव-प्रसङ्गेन—

आगमनामाख्यातनिपातोपसर्गसमासतद्धितैर्युक्तः।

सन्धिवचनविभक्त्युपग्रहनियुक्तो वाचिकाभिनयः॥ ना० शा० १४.४

एतद् भरतकृतं विधानं क्षेमेन्द्रेणौचित्य-विचारचर्चाया सोदाहरणं बहुलीकृतम्।

## पद्य–प्रियता

संस्कृत-नाटकेषु पद्य-प्रियता तु प्रत्यक्षतो दृश्यते। विरलमेव नाटकं सर्वथा पद्यविरहितं प्राचीनयुगे मध्ययुगेऽपि वा विरचितम्। अवश्यमेव भावपेशलता पद्यमावहति किन्तु भावविरहितेषु गद्योचितस्थलेष्वपि पद्यानि निर्भ्रियन्ते। तथाहि—

स्वप्नवासवदत्ते—

प्रियतरं वाक्यमेतद् राज्यलाभशतादपि।
अपराद्धेष्वपि स्नेहो यदस्मासु न विस्मृतः॥ ६.१२

पञ्चरात्रे—

रथमानय शीघ्रं मे श्लाघ्यः प्राप्तो रणातिथिः।
तोषयिष्ये शरैर्भीष्मं जेष्यामीत्यमनोरथः॥ २.१३

रिपूणां सैन्यभेदेषु यस्ते परिचितो रथः।
रथचर्यां बहिष्कर्तुं तमास्थायोत्तरो गतः॥ २.१४

तथापि संस्कृतनाटकेषु पद्यानां प्रासंगिकता पूर्ववर्तिगद्यांशानुरोधेनापि प्रतिभासते। तद्यथाभिज्ञाने—

राजा—सूत, दूरममुना सारंगेणवयमा कृष्टाः। अयं पुनरिदानीमपि—

ग्रीवाभंगाभिरामं मुहुरनुपतति स्यन्दने दत्त दृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा।
पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥

सम्भ्रमाधिक्येन गद्योचितस्थलेष्वपि जनाः पद्यं वदन्तीति प्रतिभाति ।

पद्यं तु नाटकेषु श्रेष्ठनायकोचितं सम्मतम् । स्त्रियोऽधमनायकाश्च क्वचिदेव पद्यं वदन्ति ।[1]

## संक्षेपः

भोजेन संक्षेप इति नवीनो गुणः प्रकल्पितः । अयं गुणो विस्तारस्य विपरीत एव[2] । नाटके संक्षेपस्यावश्यकता वर्तत एव । संक्षेपस्योदाहरणमभिज्ञानशाकुन्तले प्रथमाङ्के वर्तते—'बलभित्सखो दुष्यन्त' इत्यनेन पदद्वयेन बहुवर्णितम् । तत्र

प्रसादगुणस्तु अर्थप्राकट्यमेव ।
गुणास्तु रसव्यञ्जकाः ।
माधुर्यं शृंगारकरुणयोर्व्यञ्जकम् ।

## क्वचिद् दीर्घदीर्घतर-भाषणानि

नाटकेषु भावानुभावात्मकाः संवादाः प्रायशो नातिदीर्घाः सन्ति । प्रायो द्वित्रैर्वा पञ्चषैर्वाक्यैः पात्रस्य सकृत् संवादकथाः पूर्णा भवन्ति, किन्तु दीर्घतमानि सन्ति नैकस्थलेषु कवेरभीष्टविषयानधिकृत्य भाषणानि । तद्यथैकोक्तिरूपेणाविमारके चतुर्थाङ्कस्यादितः नवमश्लोकान् यावत् । अत्रैकाकी नायकः स्वदौर्मनस्यं वैकल्यं च वर्णयति ।

मालतीमाधवे मदयन्तिका मकरन्द-विषयकं स्वकीयं स्वप्नं ५३ पंक्तिभिर्वर्णयति । तत्रैव लवङ्गिका मालत्याः कामदशावर्णनं ३५ पंक्तिभिः करोति । यद्यपि श्रव्यकाव्यदृशैतादृशानां वर्णनानां सुरुचिनिर्भरता नास्ति सन्दिग्धा, तथापि नाट्यदृशा कस्यचित्पात्रस्य सकृदेव दीर्घतमभाषणानां प्रयोगो रुचिं नानुरुणद्धि । वेणीसंहारे चतुर्थेऽङ्के सुन्दरकस्य युद्धविभीषिकात्मकं ३६ पंक्तीर्यावद्भाषणं भाणशैलीं स्मारयति ।

भाणे तु नैकशो विट एव रङ्गे नैकपृष्ठानि वदति । तत्रैवाकाश इति विधिना स एकाकी नैकहोरा अनवरतं वदति । अत एव कस्यचिदेकस्य पात्रस्य दीर्घभाषणात् प्रेक्षका नोद्विजन्त इति भारतीया क्षमता ।

---

१. अपवादरूपेण वसन्तसेना मृच्छकटिके पद्यानि प्रायशो वदति, तदपि संस्कृतेन । अधमोऽपि चाण्डालौ शकारश्च तत्र पद्यभाषिणः सर्वत्र ।

२. विस्तरस्तावदनपेक्षितवाग्विस्तार एव । व्यासेनोक्तिस्तु विस्तरः ।

तथापि वागभिनयस्य प्रौढिर्नितरामपेक्षिता भवति लम्बायमानेषु भाषणेषु ।

काव्यशैली नाट्यभारतीमाश्रित्य शिखरायमाणा परिलक्ष्यते । भावाकर्षिण्यः कल्पनाः सालङ्कारा एव प्रभवन्ति श्रेष्ठनायकानामिति पदे-पदे दृश्यते । तथापि सोदाहरणमुपक्षेपोऽयं विशदीक्रियते—

एषा मनो मे प्रसभं शरीरात् ।
पितुः पदं मध्यममुत्पतन्ती ॥
सुराङ्गना कर्षति खण्डिताग्रात् ।
सूत्रं मृणालादिव राजहंसी ॥

नाट्यभारत्या संरचनावैचित्र्याणि गणनाकोटिं व्यतिरेचयन्ति । तथापि तस्याः कतिपयविशेषा अत्र निबद्धाः ।

नाटके भाषा मूर्तिग्राहिणी भवेदिति नाट्यापेक्षा ।



## आकाशपुरुषः

आकाशपुरुषस्तु आकाशवचनस्य वक्ता नास्ति । भरत आकाशवचनं संजानीतेऽधोविधम्—

दूरस्थाभाषणं यत्स्यादशरीरनिवेदनम् ।
परोक्षान्तरितं वाक्यमाकाशवचनं तु तत् ॥१५.८६

अनेन स्पष्टं भवति यदाकाशवचनमधोविधं लक्षणप्रपन्नम्—

(१) दूरस्थानां कृते भाषणम् ।
(२) अशरीरिणां देवादीनां कृते भाषणम् ।
(३) परोक्षं वाक्यम् ।
(४) अन्तरितं वाक्यम् ।

एतेषु बहुविधेषु आकाशवचनेषु क्वचिद् वक्ता क्वचिच्छ्रोता (आमन्त्रणीयो जनः) न समक्षं भवति,[1] दविष्ठो भवति मृतत्वाद्दूरस्थत्वाद्वा । अशरीरिणस्तु देवा एव । तेष्वप्रत्यक्षितेषु तेषां वचांसि 'आकाशवाणी' इति ज्ञेयानि ।

भरतो नाट्यशास्त्रे आकाशपुरुषं पुनः पुनः लक्षयति पृथगेव । तथा हि—

परवचनमात्मसंस्थं प्रतिवचनैरुत्तरोत्तरग्रथितैः ।
आकाशपुरुषकथितै[2]रङ्गविकारैरभिनयैश्चैव ॥ १८.१०९

यदा चाकाशपुरुषपरस्थवचनाश्रयम् ।
भवेत् काव्यं तदा ह्येष कर्तव्योऽभिनयः स्त्रिया । २२.२९३

---

१. भाणेषु श्रोता प्रतिवक्ता च रङ्गपीठे नास्त्येव ।

२. अभिनवगुप्त 'आकाशपुरुषकथितैः' इत्येतेषां पदानां व्याख्याधोविधं करोति—आकाशे शून्ये यानि पुरुषकथितानीति । नैतत् सत्यं यतो हि नाम नैतानि वचांसि शून्ये कथितानि, प्रत्युताकाशपुरुषेण (नो पुरुषेण, शून्यपुरुषेण कल्पितपुरुषेण वा) उच्यन्ते । मनमोहन घोषो प्रसङ्गेऽस्मिन् आकाशः Imaginary Person (कल्पितपुरुष) इति व्याख्याति ।

शृङ्गाररससम्भूतो रतिसम्भोगखेदनः ।
यच्चैवाकाशपुरुषं परस्थवचनाश्रयम् ॥ २२.३२१

एतेषु सन्दर्भेषु आकाशपुरुषस्तु कल्पितपुरुष एव साम्प्रतिकं शाश्वतं वाऽदृष्टोऽदर्शनीयश्च आकाशपुरुषस्त्वत्राकाशकुसुम इव कल्पनाप्रसूतिः ।

**आकाश-पुरुषः**

आकाशपुरुषस्तु न भवति रङ्गे रंगसमीपे वा, न च नेपथ्ये वा । सोऽदृश्य एव भवति रंगस्थपात्राणां प्रेक्षकाणां च । आकाशपुरुषस्तु अभिनवभारत्यामभिनवगुप्तः संजानीते ।[1] कोऽयमाकाशपुरुषः ? रंगस्थपात्रेण स्वरेण परिचित इव प्रेक्षकैरदृश्यो जन आकाशपुरुषः । स तु भाणवदन्यविधेषु रूपकेष्वपि प्रयुज्यते । भाणे तेन सह रङ्गस्थपात्रस्य कल्पित एव वार्तालापः कार्यते ।

अपरविध आकाशपुरुषोऽभिज्ञाने पञ्चमेऽङ्के प्रयुक्तोऽधोविधम्—

राजा – तूष्णीं भव यावदाकर्णयामि । (आकाशे गीयते)

अभिनवमधुलोलुपो भवान् तथा परिचुम्बितचूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥

एतस्या गीतेर्गायिका रङ्गे नास्ति, नासीद्, नागमिष्यति च । सान्तःपुरे वर्तते, न रङ्गे न नेपथ्ये यदा सा गायति । ईदृशो जन आकाशपुरुषसंज्ञां लभते ।[2]

अस्मिन्नेव नाटके चतुर्थेऽङ्के आकाशे गीयते—

रम्यान्तरैः कमलिनीहरितैः सरोभिश्
छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात् कुशेशयरजोमृदुरेणुरस्याः ।
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥

एतद्वचनं तपोवनदेवतानाम् । एता अपि रङ्गे न सन्ति, नासन्, न चागमिष्यन्ति । अत एव आकाश-पुरुषाः सन्ति ।

---

१. एकहार्यैरित्याकाशपुरुषभाषितैः । ना० शा० १८.११२ अधिकृत्य भारती ।

२. A Stage direction implying some thing said by or to a person out of sight. Mon. Williams : A Sanskrit English Dictionary P.127.

पूर्वोक्तेषु सन्दर्भेषु वक्तादृश्यो वर्तते। अन्यत्र वक्तरि दृश्ये सति य आमन्त्रणीयो जनोऽदृश्यो भवति स आकाशपुरुषो ज्ञेयः। अस्यां कोटौ बहुविधानि पात्राणि समायान्ति। प्रथमं तावद्देवा एवाकाशपुरुषा इति विभावितम्। तद्यथाभिज्ञानशाकुन्तले शकुन्तला दुष्यन्तेन प्रत्याख्याता पृथ्वीदेवीमेवं वदति—

भगवति वसुधे देहि मे विवरम्।

मृच्छकटिके धूता कृतान्तं प्रति—

भगवन् कृतान्त पुष्करपत्रपतितजलबिन्दुचञ्चलैः क्रीडसि दरिद्र-पुरुषभागधेयैः।[1]

वसन्तसेनेन्द्रं प्रति—

किन्ते ह्यहं पूर्वरतिप्रसक्ता यत्त्वं नदस्यम्बुदसिंहनादैः।
न युक्तमेतत् प्रियकांक्षिताया मार्गं निरोद्धुं मम वर्षपातैः॥ ५.२९

यद्वदहल्याहेतोर्मृषा वदसि शक्र गौतमोऽस्मीति।
तद्वन्ममापि दुःखं निरपेक्ष निवार्यतां जलदः॥५.३०

वेणीसंहारे लोकपालाश्चेटया सम्बोधिताः। तथा हि—हा भगवन्तो लोकपालाः, परित्रायध्वं परित्रायध्वम्, इत्यादि।[2]

तत्रैव विधिराकाशपुरुषः सूतेन सम्बोधितः—(आकाशे लक्ष्यं बद्ध्वा) ननु भो हतविधे, भरतकुलविमुख—

अक्षतस्य गदापाणेरनारूढस्य संशयम्।
एषापि भीमसेनस्य प्रतिज्ञा पूर्यते त्वया॥

**अनुपस्थिता प्रकृतिः**

अनुपस्थिता लोका द्विविधा आकाशपुरुषाः सम्मताः। प्रथमं तावत्ते जना मृता एव। यथोत्तररामचरिते सीता पञ्चत्वं गतं जटायुं सम्बोधयति—हा तात जटायो, शून्यं त्वया विनेदं जनस्थानम्।[3] दिवंगतमेव स्वपितरं शोकाविष्ट अश्वत्थामाह्वयति—'हा तात, हा सुतवत्सल, हा लोकत्रयैक-

१. मृच्छ० ३.२६/२७
२. वेणी ६.२८/२९
३. उत्तर० ३.१४/१५

धनुर्धर, हा जामदग्न्यास्त्रसर्वस्वप्रतिग्रहप्रणयिन् क्वासि। प्रयच्छ मे प्रतिवचनम्। स पुनः पुनः स्वर्गतं पितरं सम्बोधयति।

अपरविधोऽनुपस्थित आकाशपुरुषः श्रवणपरिधेरत्यन्तदविष्ठो भवति। यथाश्वत्थामा वेणीसंहारे दूरस्थं श्रवणपरिधेर्बाह्यं युधिष्ठिरं सम्बोधयति। यथा,

(अकाशे) युधिष्ठिर, युधिष्ठिर

आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः।
ताते गुरौ द्विजवरे मम भाग्यदोषात्
सर्वं तदेकपद एव कथं निरस्तम्॥ ३.१५

अस्मिन्नेवाङ्के स आकाशपुरुषान् दूरस्थान् धृष्टद्युम्नं पुनरपि युधिष्ठिरं पाण्डवान्, कृष्णञ्च सम्बोधयति।[१]

तत्रैव युधिष्ठिरो भीमस्य मृत्योर्मृषा संवादं श्रुत्वा श्रवणपरिधेर्बाह्यां मातरं पृथां सम्बोधयति—अम्ब पृथे, श्रुतोऽयं तव पुत्रस्य समुदाचारो मामेकमनाथं विलपन्तमुत्सृज्य क्वापि गतः।

मृतममृतं वा भीमसेनं दूरस्थं द्रौपदी आमन्त्रयति—(आकाशे दत्तदृष्टिः) नाथ भीमसेन, त्वया किल मे केशाः संयमितव्याः इत्यादि।[२]



१. वेणी ३.२३/२४
२. वेणी ६.१८/१९

/

## नाट्यरसाः

> भावाभिनयसम्बद्धान् स्थायिभावांस्तथा बुधाः
> आस्वादयन्ति मनसा तस्मान्नाटचरसाः स्मृताः ॥
>
> ना० शा० ६.३३

अर्थात् सहृदयाः (प्रेक्षकाः) सञ्चारिभावैरनुभावैश्चोपस्थितान् स्थायिभावान् मनसास्वादयन्ति । अयमास्वादः केवलं प्रेक्षकाणामेव ग्राह्यो नाटचसमुद्भूतः । नाटचाद्रसः ।

अनभिनेये काव्ये रसः कथं स्यात्? अत्रोच्यते—काव्येऽपि नाटचायमान एव रसः । काव्यार्थविषये हि प्रत्यक्षकल्पसंवेदनोदये रसोदयः[1] । 'नाटचे एव रसो न लोके' इति ।

भावा अभिनयद्वारेण रसान् भावयन्ति (सम्पादयन्ति) अत एव

> न भावहीनोऽस्ति रसो न भावो रसवर्जितः ।
> परस्परकृता सिद्धिस्तयोरभिनये भवेत् ॥
>
> ना० शा० ६.३६

रसबन्ध एव कवेः प्राधान्येन प्रवृत्तिनिबन्धनं युक्तमित्यानन्दवर्धनाचार्यस्य कविशिक्षा । अन्यच्च—रसज्ञतैव सहृदयत्वमिति ।

संस्कृतरूपकेषु रसा अङ्गाङ्गिरूपेण दृश्यन्ते । अङ्गिनो रसास्तु केवलं शृङ्गारः, वीरः, रौद्रः, करुणः, हास्यः, शान्तः, अद्भुतश्च भवन्ति । शेषाः भयानको बीभत्सश्चाङ्गरस एव प्रतीयेते । अङ्गिरसेषु यद्यपि शृङ्गारो रसराज इति प्रथितः तथापि तस्य प्रतिष्ठा नाटकेषु सर्वोपरि नास्त्येवेति विपश्चितां मतं समर्थितमेव । तद्यथाभिनवगुप्तो विशदयति—

---

१. अत्राभिनवगुप्तः स्वगुरोर्भट्टतोतस्य मतमुद्धरति निष्कर्षरूपेण ।

(क) प्रयोगत्वमनापन्ने काव्ये नास्वादसम्भवः ।

(ख) वर्णनोत्कलिता भोगप्रौढोक्त्या सम्यगर्पिताः ।
उद्यानकान्ताचन्द्राद्या भावाः प्रत्यक्षवत् स्फुटाः ॥

ना० शा० ६.३३ अधिकृत्याभिनवभारती

**वीररौद्रशृङ्गाराः**

सर्वरसयोग्यतायामपि नाटके प्रकरणे च धर्मार्थादिवीर एव प्रधानम्। परमार्थतः सर्वेषु नायकभेदेषु वीरत्वानुगमदर्शनात्। समवकारे तु यद्यपि हि शृङ्गारादित्वमुक्तं, तथापि वीर एव प्रधानं रौद्रो वा। 'डिमव्यायोगयोरप्येवम्। ईहामृगेऽपि रौद्रप्राधान्यमेव।' अतः परं स उपसंहरति—

**अङ्गिरसविषये**

(१) एवं तावद वीररौद्रशृङ्गारा यथास्वं पुमर्थत्रयप्रमाणभूतत्वेन वर्तमाना।[1]

(२) एतेषु प्रयोगेषु शान्तवीभत्सरसौ तु चरमपुमर्थयोगात्तत्र च सर्वस्य नाधिकारोऽपि कस्यचिदपश्चिमजन्मनोऽधिकारान्नाटके यद्यपि तत्फलप्रधानतया प्राधान्यमवलम्बेयातां तथापि नासौ प्रचुरप्रयोग इति तयोः पुरुषार्थप्रवरप्राणितयोरपि वीरादिरसान्तराध्यावापेनावस्थापनम्।

**अङ्गरस विषये**

(३) एवं तावत् पुमर्थविषयो रूपकरसविषय एव परमार्थतः, तथापि-त्वितिवृत्तवैतत्याद् रसान्तरप्रयोगोऽपि तदङ्गतया तत्र भवति।

**करुणहास्यविस्मयाः**

(४) उत्सृष्टिकाङ्कप्रहसनभाणास्तु करुणहास्य-विस्मयप्रधानत्वाद् रञ्जकरसप्रधानाः। तत एवात्र स्त्रीबालमूर्खादिरधिकारी।

अत्र पूर्वोक्तस्य निष्ठचूतार्थोऽधोविधं विलसति—

(१) पुमर्थत्रयोद्दिष्टाः वीररौद्रशृङ्गारास्तु उच्चकोटिकेषु रूपकेषु अङ्गिरसा भवन्ति।

(२) रञ्जनप्रधानास्तु करुणहास्याद्भुता अवरकोटिकेषु रूपकेष्वङ्गिनो भवन्ति।

(३) शान्तभयानकवीभत्सास्तु अङ्गरसा एव गौणा भवन्ति।[2]

पुमर्थसाधनेन रञ्जन-वैशिष्ट्येन चोभयविधो शृङ्गारो लोके सर्वश्रेष्ठः प्रतिष्ठितः।

---

१. क्रमशः वीरेण धर्मो रौद्रेणार्थः शृङ्गारेण कामश्च।

२. शान्तरसप्रधाना नाट्यकृतयोऽभिनवगुप्तस्याज्ञाता आसन्।

## शृङ्गारः

शृङ्गार एव मधुरः परः प्रह्लादनो रसः ।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥
ध्वन्यालोके २.७

शृङ्गाररसो ससारिणां नियमेनानुभवविषयत्वात् सर्वरसेभ्यः कमनीयतया प्रधानभूतः । शृङ्गाररसाङ्गैरुन्मुखीकृताः सन्तो हि विनेयाः सुखं विनयोपदेशान् गृह्णन्ति, इत्यनेनानन्दवर्धनाचार्यस्य मतेन कवीनां शृङ्गारितरचनाप्रवृत्तिर्नाटकेषु सुप्रतिष्ठितैव शाश्वतसम्मानमर्हति रसिकानाम् ।

शृङ्गारस्तु बहुविधो भवति । भरतानुसारेण सम्भोगो विप्रलम्भश्च शृङ्गारस्य द्वौ भेदौ । धनञ्जयस्तत्र सप्रमाणं योजयति अयोगनामकं शृङ्गारभेदम्[1]—

तत्रायोगोऽनुरागोऽपि नवयोरेकचित्तयोः ।
पारतन्त्र्येण दैवाद्वा विप्रकर्षादसंगमः ॥ दशरूपके ४.५१

नाट्यार्थं सम्भोगात्मकः शृङ्गारः कवीनां न तावन्मात्रं स्पृहणीयो यावन्मात्रमयोगात्मको विप्रलम्भात्मको वा भवति । तद्यथाभिनवगुप्तेन ध्वन्यालोकलोचने प्रमाणितम्—

सम्भोगशृङ्गारान्मधुरतरो विप्रलम्भः ।[2] नाटकेषु प्रायशो नायिकाया दर्शनादयोग-शृङ्गारस्य स्थितिर्दीर्घयामा विद्यते यावन्नायको गर्भसन्धौ तामचिरकालिकं प्राप्नोति । इयमचिरावस्था सम्भोगस्याङ्गुलिगणनीयाभिः पंक्तिभिरेव कविभिर्वर्ण्यते । पश्चाद् विमर्शसन्धौ निर्वहणसन्धौ च तस्याः शाश्वतप्राप्तये प्रयासः फलोन्मुखतां याति । तद्यथाभिज्ञानशाकुन्तले प्रथमाङ्कादारभ्य तृतीयाङ्कस्य पादत्रयं यावन्नायकयोरयोगावस्था वर्णिता । तदनु गान्धर्वविवाहविधिना तयोर्मिलनं कतिपयपंक्तिभिरेव वर्णितम् पुनश्च पञ्चमाङ्कादारभ्य सप्तमाङ्कं यावत् तयोर्विप्रलम्भ एव प्रपञ्चितः ।

---

१. ना० शा० ६.३१ अधिकृत्यभारती ।
अयोगो विप्रलम्भाद् भिन्न एव यतो हि नाम विप्रलम्भस्तु वियोग एव । तत्र प्रथमं योगो भवति । पश्चाद् वियोगः । अयोगस्तु नायिकायोगात् पूर्वमेव भवति । गौरीशिवयोरसमागम उदाहरणम् ।

२. ध्वन्यालोकं २.८ अधिकृत्य ।

शृङ्गारस्य सर्वासां स्थितीनामुत्कर्षं विधातुं प्रच्छन्नकामितामेव कवयः स्पृहयन्ति। तत्र भासस्याविभारकं कालिदासस्य मालविकाग्निमित्रं, हर्षस्य रत्नावली-प्रियदर्शिके चानुत्तमानि सन्ति रससमृद्धि-दृष्ट्या प्रच्छन्नकामित्वेन।

काचिन्नवोनेव सरणिः शृङ्गारस्य प्रवर्तिता भासादिभिः, ययामृतापि नायिका मृतवद् विभाव्यते नायकेन। स्वप्नवासवदत्ते वासवदत्ता, कुन्दमालायामुत्तररामचरिते च सीता विप्रलम्भस्याश्रयभूता दृश्यन्ते, नायकश्च पुनरुदयनो रामश्च करुणस्याश्रयीकृतौ नितरां रसावर्जकौ। तत्रेर्ष्यामानप्रवासादिभिर्विप्रलम्भस्तु स्वल्पेषु नाटकेषु दृश्यते। साधारणतः शापवशात्, अपहरणात् निर्वासनाद्वा विप्रलम्भो जायते। अन्यच्च तत्र वियुक्तनायकस्याश्रयत्वं सातिशयं वर्णितम्। यथा उत्तररामचरिते निर्वासिता सीता रामस्य शोकभावमावहति।

प्रकरणे सबाधाः शृङ्गारप्रवृत्तयः सविशेषमुद्दामरूपं बिभ्रति। तत्र प्रतिनायकस्य विरोधचेष्टा निराकर्तुमिव नायको नायिका चावस्थावैविध्यं प्रापितौ शृङ्गाररसस्य तस्यानुभावसंचारिणां च वैचित्र्य भृशं निदर्शयन्ति।

नाटिकायां शृङ्गारस्य मृदुतमं स्वरूपं नायकस्य प्रच्छन्नकामितया प्रवर्तते। सैव प्रच्छन्नकामिता भाणे प्रायशः सातिशयं निबध्यते। तत्र नायिकाया अनुरागस्तु हार्दिको नास्ति। अत एव शृङ्गाराभास एव भाणे दृढमूलो भवति। तथापि विटानां नायिकाः प्रति सम्प्रसक्तिः, ताः प्राप्तुं योजनावैविध्यं सङ्गमाभीप्साश्चानुभावसञ्चारिणां विभावानां च चमत्कारं वर्धयन्ति। भाणे तु वेश्याविटादीनां कश्चिदसाधारण एव संसारो विलसति।

समवकारे धर्मार्थकामात्मकास्त्रिविधाः शृङ्गारा उपकल्पिताः। तत्र कामशृङ्गाराय परस्त्री नायिका भवतीति शृङ्गाराभास एव।

ईहामृगे वीथ्याञ्च शृङ्गारो मुख्यो रसः शास्त्रानुसारेण भवति। एतद्विधानां प्राचीन रूपकाणां प्रायोऽभाव एव साम्प्रतं प्रतीयते।

### उत्तमयुवप्रकृतिः

भारतानुसारेण शृङ्गारो रसः स्त्रीपुरुषहेतुक उत्तमयुवप्रकृतिः। संस्कृतनाटकेषु अग्निमित्रादयो युवानो न सन्ति। तथापि तेषां नायकत्वं महाकविभिर्दर्शितमिति नोचितं प्रतिभाति।

## वीररसः

वीररसालम्बनानि सन्ति महाभारतानुसारेण—

यज्ञशूरा दमे शूराः सत्यशूरास्तथापरे ।
युद्धशूरास्तथैवोक्ता दानशूराश्च मानवाः ॥
बुद्धिशूरास्तथैवान्ये क्षमाशूरास्तथा परे ।
आर्जवे च तथा शूराः शमे वर्तन्ति मानवाः ॥
वेदाध्ययनशूराश्च शूराश्चाध्यापने रताः
गुरुशुश्रूषया शूराः पितृशुश्रूषयापरे ।
मातृशुश्रूषया शूरा भैक्ष्यशूरास्तथापरे ॥
सांख्यशूराश्च बहवो योगशूरास्तथापरे ।
अरण्ये गृहवासे च शूराश्चातिथिपूजने ॥

अनुशासनपर्वणि ७४.२२–२७

वीराणां चेष्टया न केवलं ते अपितु व्यक्तिशः समष्टिशश्च लोक उन्नीयते। अत एवौन्नत्यविशिष्टा चित्तवृत्तिरुत्साह एव विजयते।

वीररसस्तु रामायणीय-महाभारतीय-नाटकेषु भृशायते। भासस्य बालचरिते, अभिषेके, प्रतिमायां पञ्चरात्रे च वीरस्य वैचित्र्यमवलोक्यते। मध्ययुगे जयसिंहशूरेः 'हम्मीरमदमर्दनम्' उत्कृष्टं वर्तते। तथैव गङ्गादासप्रतापविलासः गङ्गाधरस्यानुत्तम एव वीररसपोषकः।

युद्धवीरनायकानां चरितानि साधारणतो लोके गीयन्ते किन्तु नास्ति तत्रापरविधवीराणामुपेक्षा संस्कृतनाटकेषु। तथा हि सत्यवीरस्य हरिश्चन्द्रस्य कथामाश्रित्य बहूनि नाटकानि विरचितानि मध्ययुगे।[1]

मृच्छकटिके चारुदत्तो मुद्राराक्षसे चाणक्यश्च वस्तुतो वीरा एव। तत्र चारुदत्तस्य औदार्येण प्रतिज्ञापरिपालनेन च, चाणक्यस्य बौद्धिकप्रकर्षेण राष्ट्रसमृद्धि-प्रयत्नेन च धीरोदात्तत्वं समीहितम्।

धीरोदात्त एव नाटकस्य नायकः स्यात् इत्यनेन शृङ्गारप्रधानेष्वपि नाटकेषु कथानुसारेण धीरललितस्य नायकस्य धीरोदात्तत्वं प्रमाणयितुं क्वचिदभिधयान्यत्र व्यञ्जनया च वीररसस्य विभावादयः प्रधानतया प्रदर्श्यन्ते।

---

१. क्षेमीश्वरस्य चण्डकौशिकम्, रामचन्द्रस्य सत्यहरिश्चन्द्रश्च लोकचरित्रोन्नयने सर्वंकषे स्तः।

शृङ्गारपरायणतयैव कश्चिन्नायको धीरोदात्तो भवितुर्हति। वीरत्वेनैव धीरौदात्त्यं सिध्यति। अत एव शृङ्गारपरेषु नाटकेष्वपि नायकस्य धीरौदात्त्यं प्रतिपादयितुं नातिविस्तरैरपि वीररसोचितप्रकरणानि सन्निवेश्यन्ते। तद्यथाभिज्ञानशाकुन्तले नाट्यकथानुसारेण धीरललितोऽपि नायको बलभित्सख्येन, तपोविघ्नविनाशेन,[1] रक्षणेन[2], इष्टिविघ्नकारिणां रक्षसां दलनेन वीर एव शाश्वतरूपेण सर्वथा धीरोदात्तः।

### रौद्रः

अमसृणोऽपि दीप्तिमयो रौद्ररसोऽभिनयसाकल्येनामन्द एव गणितः। अभिनवगुप्तः प्रथयति—एवं तावद् वीररौद्रशृङ्गारा यथास्वं पुमर्थत्रयप्राणभूतत्वेन वर्त्तमानाः[3]। सोऽयं रसो वेणीसंहारेऽङ्गीभूय विलसति। अन्यत्र च समवकारे, डिमे, व्यायोगे, ईहामृगे च रौद्रप्राधान्यं दृश्यते। रौद्रस्य क्षेत्रं वधो युद्धात्मक एव कतिपयनाटकेषु सम्यक् चित्रितम्।

यद्यपि रौद्रस्य स्थायी भावः क्रोधो रिपु-भृत्य-गुरु-प्रियादीनवलम्बते, तथापि रिपुं विहायान्यानि आलम्बनानि विरलमेव नाटकेषु गृहीतानि[4]। क्रोधस्यानुभावा बहुविधाः सर्वाङ्गीणाः सन्ति। यथा विकटभ्रुकुटी, दष्टौष्ठं, हस्तकम्पः, स्वभुजप्रेक्षणं, भूरिभर्त्सनमक्षिविस्तारः, विकृतनेत्रं चाभिनयसमृध्यर्थं भृशं प्रभवन्ति रोचनत्वात्। रौद्रस्य त्रयो भेदाः- नेपथ्यजः, आंगिकः, स्वभावजश्च नाटकेषु प्रचुरं विलसन्ति। रौद्रानन्तरं करुणो विलसति।

### करुणः

करुणस्तु माधुर्यगुणेन शृङ्गारसम एव। 'एको रसः करुण एव' इति भवभूतेर्वचनं नाटके तस्याङ्गित्वं प्रतिपादयति। संस्कृतनाटकेषु केवलमुत्तमा

---

१. कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि।
तमस्तपति धर्मांशौ कथमाविर्भविष्यति॥ ५.१४
अन्येऽपि तत्रैव ७.३,३३ ; ६.२९,३०

२. आहितभूमिभारः (दुष्यन्तः) ५ ४
राज्यं स्वहस्तधृतदण्डमिवातपत्रम्। ५.६
शमयति परितापं छायया संश्रितानाम्। ५.७
आर्तानां भयमपनेतुमात्तधन्वा॥ ६.२७

३. ना० शा० १८.११० अधिकृत्य भारती

४. चण्डकौशिके परीक्षणीयो हरिश्चन्द्रः क्रोधस्यालम्बनः।

एव नायकाः करुणस्याश्रयभूताः संलक्ष्यन्ते। तेषां मानसिकः करुणः प्रधानम्।[1] उत्तररामचरिते रामः, स्वप्नवासवदत्ते, तापसवत्सराजे चोदयनः कारुण्यप्रतीकौ रसमेनमुच्चैः प्रतिष्ठापयतः। एतेषु नाटकेषु वास्तविकः करुणो नास्त्येव। तत्र करुणेन सह नायिकानां त्यागादर्शः प्रक्रियते। अन्यच्च संविधानकौशलेन मध्ये मध्ये नायिकानां पार्श्ववर्त्तनमपि प्रकटीकृतं येन कारुण्यं न शिखरायते।

रौद्रस्य चैव यत्कर्म स ज्ञेयः करुणः।                    ना० शा० ६.४५

नैतत्सर्वत्र सत्य प्रतिभाति। यथोत्तररामचरिते रौद्रस्य कथापि नास्ति किन्तु करुणो विजृम्भते तत्र।

अभिनवगुप्तानुसारेण करुणस्तु रञ्जनाप्रधानः[2]। उत्सृष्टिकाङ्के करुणस्य बहुलता भवति।

## अद्भुतो रसः

अभिनवगुप्तानुसारेण 'रञ्जकोऽयमद्भुतो रसो भाणे प्रधानम्।' अद्भुतरसस्य प्रीयमाणता सातिशयेति निश्प्रचम्। विक्रमोर्वशीयेऽपि शृङ्गारोऽङ्गीति पाश्चात्यविदुषां मतम्। अद्भुतार्थं देवार्थानां प्रक्रमः, आशातीतफलप्राप्तिश्चोपपद्येते।[3]

भरतानुसारेण—

निर्वहणे कर्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः।          ना० शा० १८.४३

तत्र प्रायोऽन्तिमेऽङ्के विभावस्तु दिव्यजनदर्शनं प्रायो भवति तथा हि—

नारददर्शनम्—अविमारके, विक्रमोर्वशीये

पृथ्वी—कुन्दमालायाम्, उत्तररामचरिते च।

गौरी—नागानन्दे

गङ्गा—उत्तररामचरिते।

धर्मः—चण्डकौशिके

चन्द्रचूडः कुन्दप्रभः—सत्यहरिश्चन्द्रे

---

१. त्रिविधः करुणः—मानसिकः, आङ्गिकः, वाचिकश्च। एतेषु आद्य उत्तमपुरुषे इति संगीतचन्द्रिकायाम् १८८९—१८९८

२. ना० शा० ६.१०० अधिकृत्य भारती।

३. कामन्दकी—एवमेतत्। अस्ति वा कुतश्चिदेवंभूतमहाद्भुतं विचित्ररमणीयोज्ज्वलं प्रकरणम्। मालतीमाधवे १०.२३/२४

न केवलमन्तिमेऽङ्केऽपितु नाटकादिष्वाद्यन्तं दिव्यप्रकृतीनां चरितेनाद्भुतरसो भूयो भूयो विलसति।[1]

न केवलं देवा अपितु पशु-पक्षिणः विद्याधराः, पिशाचाश्च पात्रीकृता विस्मयमावर्जयन्ति।

आश्चर्यचूडामणिनाटके तु प्रधानो रसोऽद्भुत एव विलसति।

अन्यच्च निगूढरहस्योद्घाटनेनाद्भुतरस उन्नीयते कतिपयनाटकेष्वन्तिमेऽङ्के। तद्यथा—

१. वासवदत्ता जीवतीति स्वप्नवासवदत्ते।

२. सीता जीवतीति कुन्दमालायामुत्तररामचरिते च।

३. उर्वश्याः पुत्रोऽस्तीति विक्रमोर्वशीये।

४. चाणक्यो निवेदयति यत् राक्षसश्चन्द्रगुप्तस्य मन्त्री भवेदिति मुद्राराक्षसे।

५. हरिश्चन्द्रस्य परीक्षा देवैः कृतेति चण्डकौशिके।

इन्द्रजालादिभिर्विस्मयो जन्यते बहुषु रूपकेषु। अविमारके नायकोऽग्निं प्रविशति किन्तु न दह्यते। तस्मै विद्याधरोऽङ्गुलीयकं ददाति येन सोऽदृश्यो भवति। रत्नावल्यां मालविकाग्निमित्रे च राजप्रासाद एवाग्निना ग्रस्यते किन्तु न कश्चित्तत्र दह्यते। अनेन प्रकारेणाद्भुतस्य रमणीयता कविदृशा बहुलीकृता प्रतिभाति।

महतां प्रभावेणापि विस्मयो जन्यते। तद्यथा बालचरिते बालकृष्णस्य प्रभावेण रात्रौ वसुदेवस्य मार्गे दीपप्रभा जन्यते, यमुनाजलं द्विधा छिन्नम्, नन्दस्य पांसून् मार्गयतो धरणीं छित्त्वा युगप्रमाणा सलिलधारोत्थिता। तत्र गरुडो, दिव्यानि पञ्चायुधानि च बालकृष्णप्रभावेण प्रविशन्ति। ते वदन्ति मनुष्यवत्।

नाटकेऽस्मिन् विस्मयमावहन्ति पशुरूपधारिणोऽसुरादयः ये संस्कृतं वदन्ति किन्तु पशुवदाचरन्ति। तद्यथा—अरिष्टर्षभस्तु गोवृषाधमोऽस्ति। स कृष्ण प्रतिवदति—

---

१. बालचरिते प्रायः सर्वेष्वङ्केषु तादृशानि पात्राणि रङ्गे वर्तन्ते। यथा द्वितीयेऽङ्के कात्यायनी सपरिवारा प्रविशति। तत्र कुण्डोदर-शूल-नील-मनोजवादयः कंसं हन्तुं प्रतिजानते। अभिज्ञानस्य पञ्चमाङ्के शकुन्तला ज्योतिषा नीयते।

श्रृङ्गाग्रकोटिकिरणैः खमिवालिखंश्च ।
शत्रोर्वधार्थमुपगम्य वृषस्य रूपम् ।
वृन्दावने सललितं प्रतिगर्जमान—
माक्रम्य शत्रुमहमद्य सुखं चरामि ॥ ३.६

नाटकेषु छायातत्त्वेनाद्भुतार्थः भृशं वर्धते । तत्र दूताङ्गदे मायासीता रावणं प्रति तस्य प्रेयसीव संवदतीति महदाश्चर्यकरम् ।

**बीभत्सः**

बीभत्सं शान्तं च समं निदर्शयन्नभिनवगुप्तः स्पष्टयति—

एतेषु प्रयोगेषु शान्तबीभत्सरसो तु चरमपमर्थयोगात्तत्र च सर्वस्य नाधिकारोऽपि कस्यचिदपश्चिमजन्मनोऽधिकारान्नाटके यद्यपि तत्फलप्रधानतया प्राधान्यमवलम्बेयातां तथापि नासौ प्रचुरप्रयोग इति तयोः पुरुषार्थप्राणितयोरपि वीरादिरसान्तराध्यावापेनावस्थापनम् ।

अत एव बीभत्सस्त्वङ्गी रसो न भवति नाटकादिषु किन्तु तस्याङ्गरसत्वं तु प्रतिष्ठितमेव । मालतीमाधवे—उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोधभूयांसि मांसानि इत्यादि ५.१६ तथा अन्त्रप्रोतबृहत्कपालनलकरक्वणत्कङ्कण—इत्यादि वीरचरिते । १.३५

वेणीसंहारस्य तृतीयाङ्कस्य प्रवेशके राक्षसौ महाभारतीययुद्धकर्मणो बीभत्सं स्वरूपं वर्णयतः—

हतमानुषमांसभारके कुम्भसहस्रवसाभिः सञ्चिते ।
अनिशं च पिबामि शोणितं वर्षशतं समरो भवतु ॥

इत्यनेन नाटके बीभत्सस्यापि समावेशो यथा स्यात्तथा प्रयतनीयमिति भट्टनारायणस्य शास्त्रीयापेक्षा मनसि कृता वर्तते । स तु रौद्ररसात्मके नाटकेऽस्मिन् द्वितीयेऽङ्के शृङ्गारमङ्गरसत्वेन पुरस्करोति । एतदपि नियमापेक्षया कृतं प्रतिभाति ।

चण्डकौशिके तु बीभत्सस्येतिवृत्तात्मकः समावेशो भूयो भूयो नाटकीयं प्रभावं सुरभीकरोति । तस्य महिमा हरिश्चन्द्रमुखेन राजतेऽधोविधम्—

सन्ध्यावध्यास्रशोणं तनुदहनचिताङ्गारमन्दार्कबिम्बम् ।
तारानारास्तिकीर्णं विशदनरकरङ्कायमाणोज्ज्वलेन्दु ॥

हृष्यन्नक्तं चरौघं घनतिमिरमहाधूमधूम्रानुकारं ।
जातं लीलाश्मशानं जगदखिलमहो कालकापालिकस्य ।। ४·१५

**भयानकः**

भयानकरसस्य नाट्ये ऽङ्गित्वं नास्ति । केवलमङ्गरस एव महाकविभिः स समादृतः । अभिज्ञानशाकुन्तले 'ग्रीवाभङ्गाभिरामम्' इत्यादि श्लोके 'धर्मार्ण्यं विरुजति गजः स्यन्दनालोकभीतः' इत्यादिश्लोकेषु च भयानको रसो विलसति । मृच्छकटिके खुण्डमोटको नाम वसन्तसेनाया गज उन्मत्त एव लोकान् भाययति । वनमानुषो रत्नावल्यां सर्वानन्तःपुरजनान् भाययति ।

**हास्यः**

नाटकेषु हास्यस्य परिधिर्भूयो भूयो विलसति । भरतानुसारेण—

(१) शृङ्गाराद् हि भवेद् हास्यः । ६.३९

(२) शृंगारानुकृतिर्या तु स हास्यस्तुप्रकीर्तितः । ६.४०

अभिनवगुप्तानुसारेण

(१) करुणाद्याभासेष्वपि हास्यत्वं सर्वेषु मन्तव्यम् । अनौचित्यप्रवृत्तिकृतमेव हि हास्यविभावत्वम् ।

(२) शान्ताभासो हास्य एव प्रहसनरूपः ।

रञ्जकरसेषु हास्योऽनुत्तमः प्रहसने तु अङ्गिरस एव । प्रायः सर्वविधेषु रूपकेषु हास्योऽङ्गरसत्वेन सुप्रतिष्ठितः । विदूषकस्तु हास्यस्य प्रधान उन्नायकः स्वरूपेण, नेपथ्येन, वचसा, कर्मणा च भवति । अन्यानि पात्राण्यपि प्रायशः स्ववचसा कर्मणा च हास्यसर्जने नियोज्यन्ते कविभिरिति पुस्तकेऽस्मिन् नाट्ये हास्ययोगः इति परिच्छेदे सविस्तारं निदर्शितम् ।[1] सूत्रधारोऽपि नाट्यारम्भे एव हास्यनिष्पादनेन प्रेक्षकान् प्रमोदयति मृच्छकटिकादिषु । हास्यस्यालम्बनानि आश्रयाश्चोत्तमकोटिकानि भवन्ति ।

भगवदज्जुकीये आचार्यो हास्यस्यालम्बनं भवति । पञ्चरात्रे ऽर्जुनादयो हास्यस्याश्रया आलम्बनाश्च सन्ति । घटोत्कचो मध्यमव्यायोगे हास्यस्य श्रेष्ठालम्बन एव ।

१. शकारः, विटः, भटः, द्युतकारः, बालः, सूत्रधारश्च स्वस्वकर्म कुर्वन्तोऽपि हास्यसर्जनायामभिनवकार्यवृत्तिषु व्यापृताः सन्ति ।

संस्कृतरूपकेषु परस्थो हास्यो भृशायते[1]। अतएव प्रहसनादिषु रङ्ग-पीठे पात्राणि न हसन्ति। तेषां विकृतवेशालङ्कारधाष्टर्यलौल्यकुहका-सत्प्रलापव्यङ्गदर्शनदोषोदाहरणादिभिः प्रेक्षका हसन्ति। भरतानुसारेण—

विकृताचारैर्वाक्यैरङ्गविकारैश्च विकृतवेशैश्च।
हासयति जनं यस्मात्तस्माज्ज्ञेयो रसो हास्यः॥

ना० शा० ६.५०

अतः परमपि हास्यस्य क्षेत्रं नाटकेषु विभाति।

### शान्तो रसः

शान्तरसस्याङ्गित्वं यद्यपि अभिनवगुप्तेनापि निषेधितं तथापि बहुषु नाटकेषु शान्तोऽङ्गित्वेन चमत्करोति।[2] प्रबोधचन्द्रोदये मोहराजपराजये, धर्माभ्युदये, संकल्पसूर्योदये, शामामृते च शान्तरसप्रधानाः प्रधाननायकाः सन्ति।

शान्तरसस्य प्रतिष्ठा रूपकेषु सुदूरप्राचीनयुगेऽपि अभवत्। अश्व-घोषस्य सारिपुत्रप्रकरणे शान्तो रसो विलसति।

### आश्रयः

रसप्रकरणे नास्ति तत्राश्रयस्य सविशेषं विवेचनम्, यतो हि शृङ्गार-वीर-रौद्रेषु रसेषु आलम्बन-विभावा एवाश्रया अपि भवन्ति। ते तु महत्त्वपूर्णा रसाः। किन्तु शेषेषु रसेषू आश्रयास्तु भिन्नैव आलम्बन-विभावेभ्यो भवन्ति। आश्रयेण तन्मयीभूताः प्रेक्षका रसास्वादं कुर्वन्ति। अतएव तेषां महिमा विचारणीयः।

नाट्ये तु महतामेव भावानुभावा रससर्जनाय प्रायशो वर्ण्यन्ते। अत एव कविः प्रेष्ठान् प्रभविष्णुतमांश्च रसान् तेषामाश्रयांश्च काव्यार्थनुत्सेच-यितुं विचिनोति।

आश्रयेण सहृदयप्रेक्षकाणां तन्मयीभावो भवति। अतएव तस्य नाटकेषु महिमा काव्योद्देश्यमुत्कर्षयति।

---

१. द्विविधश्चायं हास्यः —आत्मस्थः, परस्थश्च। यदा स्वयं हसति तदात्म-स्थः। यदा तु परं हासयति तदा परस्थः। ना० शा० ६.४८/४९

२. अभिनवगुप्तः स्पष्टयति यद् भरतो नव रसान् मनुते। ना० शा० १२.७६ अधिकृत्य भारती।

## अनुभावाः

अनुभावास्तु आश्रयेषु समुत्थिताः सन्तः तान् प्रेक्षकाणां विषयीकुर्वन्ति। संस्कृतनाट्येऽनुभावानां सम्पत्तिः साधु समृद्धा विलसति।

## संचारिभावाः

रत्यादेरङ्गिनो भावा अङ्गाः स्युर्व्यभिचारिणः।

व्याप्नुवन्ति स्थायिनमिति व्यभिचारिणः, स्थायिभावा रसा भवन्ति। सञ्चारिणस्तानुपकुर्वन्ति। यथा महार्णवे लघुकल्लोला महाकल्लोलानुपगच्छन्ति।

रतेः शोकस्य च वैविध्यात्तयोर्व्यभिचारिणो बहुसंख्यका वर्ण्यन्ते।[1]

स्वल्पा एव व्यभिचारिणः स्वत एव रञ्जका भवन्ति।[2] किन्तु अरञ्जका अपि सञ्चारिणो रञ्जकस्थायिभिः संयुक्ता रसनिष्पत्तौ सहाया भवन्ति।

इमे सञ्चारिणो वृत्त्यनुसारेण सन्ध्यङ्गानि सन्ध्यन्तराणि च विचित्रयन्ति।



---

१. रतेः संचारिणः आलस्यौग्र्यजुगुप्सावर्ज्या शेषा ऊनत्रिंशत्संख्यकाः सन्ति।

२. हर्षः, धृतिः, मतिरेव केवलं रञ्जकाः सन्ति।

# नाटकेषु नाट्येतरमनोरञ्जनानि

एतेषु मनोरञ्जककार्यक्रमेषु नृत्यं प्रथमं स्थानं भजते। मालविकाग्निमित्रस्य द्वितीयेऽङ्के नायिकायाश्छलितकनृत्यमुपगानेन गानेन च सह प्रदर्श्यते। इदं नृत्यं तु नायकयोः प्रणयव्यापारस्याभिन्नमङ्गमिव समावेशितं, किन्तु स्पष्टमिदं विपश्चितां यन्नायं कार्यक्रमः प्रेक्षकाणां मनोरञ्जनं विहायान्यत् किमपि प्रयोजनं बहुलीकर्त्तुम्, यतो हि नाम प्रागेव नायकस्य मनो मालविकायां निबद्ध आसीत्।

भास-सौमिल्ल-कविपुत्रादीनां प्रबन्धानां यो नाटकगुणातिशयस्तस्य दर्शनं मम प्रथमेऽस्मिन्नाटके भविष्यति न वेति सन्दिहान इव कविः कालिदासोऽपूर्वसुन्दर्या नर्तक्या नृत्येन प्रेक्षकाणां कृते परमरमणीयं वस्तुजातं प्रस्तावयति। मालविकाग्निमित्रस्य नाट्येऽपि यदि नाम कापि त्रुटिः स्यात्तस्याः पूर्तिर्मालविकानृत्यदर्शनेन भवेदेवेति कवेः समीहितं प्रतिभाति।

नृत्यसंवलितो नाट्याभिनयः भासस्यापि कलां चित्रयति। तद्यथा बालचरितस्य तृतीयेऽङ्के बालकृष्णस्य हल्लीसकः प्रस्तूयते। हल्लीसकात् प्राग् वाद्यं गानं च प्रेक्षकाणां प्रीत्यर्थं समायोजिते—

संकर्षणः—एते गोपदारकाः समागताः।

रक्तैर्वेणुकडिण्डिमैः प्रमुदिताः केचिन्नदन्तः स्थिताः
केचित् पङ्कजपत्रनेत्रवदनाः क्रीडन्ति नानाविधम्।
घोषे जागरिमा गुरुप्रमुदिता हुम्भारवशब्दाकुले।
वृन्दारण्यगते समप्रमुदिता गायन्ति केचित् स्थिताः॥ ३.३

हल्लीसकात् प्रागातोद्यानि वादितानि। ततः परं सर्वे हल्लीसकं नृत्यन्ति—गीतं वादितं नर्तितं च।

अयं गीत-वादित्र-नृत्यानां कार्यक्रमो मुख्यवस्तुनोऽङ्गं नास्त्यैवेति स्पष्टमेव। केवलं प्रेक्षकाणामनुरञ्जनार्थमेतानि समाविष्टानि। कालियनागमदमर्दन प्रकरणे स्वयं कृष्ण एव हल्लीसकं प्रस्तौति। तद्यथा—

निर्भर्त्स्य कालियमहं परिविस्फुरन्त
मूर्धाञ्चितैकचरणश्चलबाहुकेतुः।

भोगे विषोल्बणफणस्य महोरगस्य ।
हल्लीसकं सललितं रुचिरं वहामि ॥ ४.६

सर्वाः —आश्चर्यं भर्तः । कालियस्य पञ्च फणानामकं हल्लीसकं प्रक्रीडति ।

नृत्यं तु स्वत एव रमणोयम् । यदि नाम नर्तकी सुन्दरी भवेत्तर्हि का कथा मनोरागोद्रेकस्य । मालविकाग्निमित्रे तु कथाङ्गीकृतमालविकानृत्यं प्रेक्षकाणां भूयिष्ठमाह्लादोत्कर्षविधायि विजयते । अन्यथापि कथांशत्वेनानपेक्षितमपि नृत्यं नाटकेषूपयुज्यते । तद्यथा मालतीमाधवे—

मकरन्दः ( पुरोऽवलोक्य ) कथमवलोकिताबुद्धरक्षिते कलहंसश्च दूरतः समागतानस्मान् वीक्ष्य तत्रैव हर्षनिर्भरं नृत्यन्त इत एवागच्छति । ( ततः प्रविशतोऽवलोकिताबुद्धरक्षिते कलहंसश्च । ते विविधं नृत्यं कृत्वा सर्वं उपसृत्य सप्रणमं कामन्दकीं प्रति ) जय भगवति, कार्यनिधाने । इत्यादि ।[1]

लवङ्गिका—तदीयकार्यमपि चैतस्मिन् सम्पूर्णम् । अतः सर्वप्रकारमहोत्सवे नृत्यति ।

पुरातनकवयोऽपि कथावस्तुविधानेऽनपेक्षिमपि नृत्यं नाट्ये गुम्फन्तिस्म । तद्यथा भासो बालचरिते—

दामोदरः —घोषसुन्दरि वनमाले चन्द्ररेखे मृगाक्षि घोषवासस्यानुरूपोऽयं हल्लीसकनृत्तबन्ध उपयुज्यताम् ।[1]

सर्वाः —यद् भर्ताज्ञापयति ।

सङ्कर्षणः —दामक, मेघनाद, वाद्यन्तामातोद्यानि ।

उभौ—भर्तः, तथा ।

( सर्वे नृत्यन्ति )

भासः पञ्चरात्रेऽपि नृत्योपयोगेन प्रेक्षकान् रञ्जयति । तद्यथा—

वृद्धगोपालकः —महाराजस्य विराटस्य वर्षवर्धनं गोप्रदाननिमित्तमस्यां नगरोपवनवीथ्यामायातु गोधनम् । तावतीं वेलां गायन्तो भवामः ।

सर्वे—यन्मातुल आज्ञापयति । (सर्वे नृत्यन्ति) ।

---

१. मालतीमाधवे १०.२३/२४

वृद्धगोपालकः —ही ही, सुष्ठु नर्तितम्, सुष्ठु गीतम्, यावदहमपि नृत्यामि ।[1]

प्रवेशके समावेशितमिदं नृत्यं प्रेक्षकाणां ।

मनोरञ्जनमात्रमुद्दिश्य समावेशितमिति विदुषां विदितचरमेव ।

रत्नावल्याः प्रथमेऽङ्के चेटयोर्विदूषकस्य च गानं नृत्यं च मनोहारि वर्तते प्रेक्षकाणामनुरञ्जनाय । तन्निर्वर्ण्य राजा कथयति--

अहो निर्भरः क्रीडारसः परिजनस्य । तथा हि—

स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षीबाया नूपुरौ च द्विगुणतरमिमौ क्रन्दतः पादलग्नौ ।
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः ।
क्रीडन्त्याः पीडयैव स्तनभरविनमन्मध्यभङ्गानपेक्षम् ॥ १.१७

तत्रैव द्वितीयेऽङ्के विदूषको बाहुं प्रसार्य नृत्यति । नृत्यतस्तस्य कक्षान्तरात् फलकः पतति । इति नाट्यनिर्देशः ।

मृच्छकटिकस्य नवमेऽङ्के शकारः सहर्षं नृत्यति यदा चारुदत्त आसनादवतार्यते ।

योरपीयनाट्ये आदिकालतो नृत्यस्य प्रतिष्ठाभवत् । तत्र कोरस-डान्साभिधे नृत्ये भावादीनामभिनयोऽनुष्ठितः ।[2]

वाद्यस्य नृत्यवदुपयोग आसीन्नाट्ये । तद्यथा बालचरिते

मल्लौ—अङ्गो वादयत वादयत संख्यपटहान् ।



१. द्वितीयाङ्कस्य प्रवेशके ।

२. Choral dance was mimetic in character. It supplied the action of a scene reported on the stage, or it suggested the passion underlying the emotional outbursts of an actor. Millet : *The Art of the Drama*, P. 30.

# परिशिष्टम्

## नाट्यारम्भः

भारतीयनाटकेष नाट्यारम्भात् प्राङ् नाटकस्य वस्तु तस्य कवेश्च परिचयो नैकविधिभिर्वर्ण्यते। तत्र भासनाटकेषु स्थापना, ततः परवर्ति-नाटकेषु प्रस्तावनामुखञ्चाभवताम्। योरपीयनाटकेष्वपि तादृशी योजना वर्तते।[1]

## रूपकस्य भेदोपभेदाः

वस्तुनेतृरसदृष्ट्या प्राचीनरूपकाणि दशविधानि उपरूकाणि च विंशति-विधानि कल्पितान्येव।[2] तत्र भारतीये नाट्यशास्त्रे दशरूपकाणि मूलत उद्भिन्नानि, विंशद्भेदानि उपरूपकाणि परत एव स्वीकृतानि। प्रायो दशरूपकेषु साधारणत आदौ मध्येऽन्तिमे भागे वा नायको वैषम्यमापन्नो विमर्शेनापरेषां साह्येन वापि देवानामनुग्रहेण चाभीष्टं फलं विजयं च।

---

1. Four kinds of prologue—
   (1) Laudatory passage—wherein the author or the story is praised.
   (2) One wherein the opponent is crushed or the audience thanked.
   (3) One telling the plot of the play.
   (4) One composite—containing all the first three.

*Preface*—Where an account of the plot is given.
European Theories of the Drama P. 44.

२. नाटकं सप्रकरणं भाणः प्रहसनं डिमः।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा॥ इति दशरूपकाणि
तोटकं नाटिका गोष्ठी सल्लापः शिल्पकं तथा।
डोम्बी श्रीगदितं भाणी प्रस्थानं काव्यमेव च
प्रेक्षकं सट्टकं नाट्यरासकं लासकं तथा
उल्लाप्यकं च हल्लीसमथ दुर्मल्लिकापि च।
मल्लिका कल्पवल्ली च पारिजातकमित्यपि॥ इति उपरूपकाणि

लभते।[1]

योरपे नाटकस्य प्रमुखभेदाः ट्रेजेडी कामेडी मेलोड्रामा फार्स च सन्ति। तेष्वाद्यद्वयं मूलतो विकसितमष्टादशशताब्दं यावत् प्रचरितं च।[2] मेलोड्रामा षोडशशताब्दे, फार्सः सप्तदशशताब्दे च प्रमाणीभूतौ।[3] एतयोर्द्वयोस्तत्त्वानि पूर्वतः क्रमशः ट्रेजेडी-कामेडीषु समाविष्टानि बभूवुः उपभेदाश्च नाटकस्य तत्र क्रानिकिलप्लेज, हिरोयिकप्लेज, ट्रेजीकामेडी, बर्लेस्क, प्राब्लेम-प्लेज प्रकीर्णकानि चैतेषां मिश्रणेन परिगृहीता परवर्तियुगे।

**जीवनवृत्तात्मकं नाटकम्**

साधारणतो नाटकेषु किमपि फलमुद्दिश्य तत्सम्बन्धिमहाकार्याणि, अवान्तरकार्याणि च प्रारम्भाद्यवस्थासु प्रपञ्च्यन्ते। नैतादृशेषु नाटकेषु नायकस्य समग्रजीवनस्य कथावृत्तं समायाति यतो हि नाम तत्र बहूनि कार्याणि परस्परं स्वतन्त्ररूपेण विलसन्ति। न तेषु कार्येषु एकमुखता प्रधानफलापेक्षा वा प्रत्यक्षं भवति। नायकस्य समग्रजीवनमेव कथावस्तु-रूपेण यदि गृह्यते तर्हि सन्धिकृता सुश्लिष्टता विनश्यति। तथापि संस्कृतेन भासस्य बालचरितं, राजशेखरस्य बालरामायणम्, बालभारतञ्च, जय-देवस्य प्रसन्नराघवं, सोमेश्वरस्योल्लाघराघवमित्यादीनि समग्रजीवनवृत्ता-त्मकानि नाटकानि मध्ययुगं यावत् पल्लिवतानि। षोडशशताब्दस्य कविकर्णपूरस्य चैतन्यचन्द्रोदये चैतन्यमहाप्रभोः प्रायः समग्रजीवनचरितं कथावस्तुभूतं विलसति।[4]

---

१. फलमिदं प्रायशो त्रिविधं भवति—नायिकालाभः, विजयः कष्टनिवृत्तिर्वा।

२. ट्रेजेडी—अष्टादशशताब्दात् पश्चाद् भेदोऽयं नातिप्रमाणिको नवयुगरचनापेक्ष-येति समीक्षकाणामभिमतं दृढीकृतम्। तत्र नायकत्वेन महान् पुरुषो वस्तुत्वेन गौरवशीलघटनापेक्ष्येते। इयं सुखान्तापि सा भवितुमर्हति। कामेडी तद्विपरीतैव साधा रणजनानां विषये साधारणलोकव्यवहारमपेक्षते।

३. कामेडीतः फार्सः (Humorous Play) संस्कृतस्य प्रहसनवत् विकसितः। तत्राङ्कत्रयमासीत्। टेजेडीमध्ये गीतानां समावेशेन मेलोड्रामेति नवीनो भेदो विकसितः।

४. विदेशेष्वपि समग्रजीवनात्मकनाटकानि ( Biographical Dramas ) बहूनि प्रणीतानि सुप्रथितानि सन्ति। आधुनिकयुगेऽपि जान्सगाल्सवर्दी-बर्नार्ड-शादयस्तादृशानां जीवनवृत्तात्मकनाटकानां प्रणेतारः सन्ति। शेक्सपीयरेण हेनरी-चतुर्थनाटके नायकस्य समग्रजीवनवृत्तं वर्णितम्। Sobel : The Theatre Handbook P.601

## कथावस्तुनः सांस्कृतिकपरिधिः

कस्यचित् देशस्य नाटकानां कथावस्तूनि तत्रत्यसमाजस्य सांस्कृतिक-प्रवृत्तिमनुरुन्धन्ति । योरपीयदेशस्य कतिपयनाटकानां कथावस्तु असंस्कृतत्वात् भारते न कदापि स्वीकृतानि स्वीकरणीयानि वा ।[1] योरपीया विचारका अपि नाट्येऽभिनीतानि जुगुप्सितानि तत्त्वानि दृष्ट्वा विषीदन्ति ।[2]

---

१. राबर्टब्रुसो-महाभागस्य इटलीदेशे १६०६ ई० संवत्सरे Phantasm नामके नाटके शिष्यः कश्चिद् गुरुपत्नीं कामयते । जीन-रेसीनस्य फ्रांसदेशे १६७७ ई० संवत्सरे Phidre नामके नाटके काचिद्युवती सपत्नीपुत्रं स्निह्यति । ब्यूमाण्टस्य Philaster नामके नाटके अनभीष्टविवाह-कारणात् स्वपुत्रं वधूं च मृत्युदण्डेन नायकः प्रणाशयति । Pizarro नामके नाटके राज्ञी पत्युर्वधाय सेनापतयेऽसिं ददाति । टालस्टायस्य The Power of Darkness नामके नाटके काचित्पत्नी पतिं हन्ति येन तस्या विवाहो युवकभृत्येन भवेत् । स भृत्यः स्वामिकन्ययासंयोगेनापत्यं जनयति । तदपि स मातुर्नियोगेन मारयति येन तस्या विवाहो निर्बाधं भवेत् । एतादृशानि वैदेशिकानि बहूनि नाटकानि प्रसिद्धानि सन्ति ।

2. Indeed when I go to a theatre, I feel as though I were spending a few hours with my ancestors, who conceived life as something that was primitive, arid and brutal, but this conception of theirs scarcely even lingers in my memory, and surely it is not one that I can share. I am shown a deceived husband killing his wife, woman poisoning her lover, a son avenging his father, a father slaughtering his children, children putting their father to death, murdered kings, ravished vergins, imprisoned citizens—in a word, all the sublimity of tradition, but alas; how superficial and material ! Blood, surface tears, and death ! What can I learn from creatures who have but one fixed idea, and who have no time to live, for that there is a rival, or a mistress whom it behoves them to put to death. "The Tragical in Daily Life" in the Treasure of the Humble translated by Alfred Sutro.

ग्रीसदेशे प्राचीनकाले सत्कुलीना स्त्रियो राजमार्गे नागच्छन् । अत एव तत्रत्यनाटकेषु सम्भ्रान्तनारीणां नायिकात्वं विरलमेवोपकल्पितम् ।[1]

### स एव नामकस्तदेव वस्तु

प्रश्नः समुदेति स एव नायकस्तदेव वस्तु नैकेषु नाटकेषु गृह्यते । नास्त्यत्र दोषोऽपितु गुण एव वर्तते । यथा बहूनां मृष्टान्नानां शर्करा-घृत-पिष्टादिकं सामग्री भवति किन्तु सूदानां कौशलेन प्रत्येकस्य तत्त्वस्यानुपात-सम्प्रधारणेन विभिन्नास्वाददायीनि मृष्टान्नानि क्रियन्ते तथैव समानमेव नायकं वस्तु च स्वीकृत्य कवयः कौशलेन क्वचित्प्रकरणवक्रतया सन्ध्यंग-सन्ध्यन्तर-वीक्ष्यङ्गादीनां वैविध्येन स्वं स्वं कलाकृतिं सामाजिकानां रसा-स्वादनायोकल्पयन्ति ।

अन्यत्रापि विषयसामान्ये सति कलासौष्ठवपरीक्षा कलाकाराणां दृश्यते । मालविकाग्निमित्रे कालिदासवचनेन 'सामान्येऽपि कला-क्षेत्रे तारताम्यप्रयोगो वर्तत एव । तथाहि—

तत्रैककार्यसंश्रयमुभयोः प्रयोगं पश्यामः । तावता ज्ञायत एवात्रभवतो-रुपदेशान्तरम् ।[2]

योरपीयदेशेष्वपि कथावस्तुनः समानत्वं प्रचीयते । तथा हि

Nearly all ancient trgedies have the same subject and that the same plots are treated by Aeschylus, Sophocles and Euripides.[3]

### अन्वितित्रयम्

अरस्तू 'अन्वितित्रयम्' इति सिद्धान्तस्य मूलकर्तास्तीति न साधु । ग्रीकदेशे तस्य प्रचलनं तस्मात्प्रागपि बभूव ।

---

1. Respectable ladies would not come on the roads. Perhaps this conflict helps to explain the fact that most of the female characters in New Greek and Roman Comedies are women of rather bad reputation. Millett : The Art of The Drama, P. 231.

२. मालविकाग्निमित्रे १.१९/२०

3. European Theories of Drama, P. 120

'अन्वितित्रय'-विधानमनुसृत्य नाटकेष्वधोविधा व्यपेक्षासीत्—

(१) एकमेव महाकार्यं समीहितम्।[1]

(२) कथाया घटनाकाल आद्यन्तं चतुर्विंशतिहोरातोऽधिको न स्यात्। अयं कालावधिः प्रथमं होरात्रयं, पश्चाद् होराद्वादशकं तदनु होराचतुर्विंशतिकं समवर्धत।

(३) एकस्मिन् स्थाने नाटकीयकार्यस्यारम्भोऽन्तश्च स्याताम्।

अरस्तू द्वितीयं व्यञ्जनया प्रत्यपादयत्।[2] तृतीयं स नैवाभ्यधात्।

अन्वितित्रयस्य योरपीयसिद्धान्तो भारते कदापि मूलितो नासीत्।

प्रायशः सर्वेषु प्राचीननाटकेषु कथावस्तु नैकवर्षीयं प्रचरति। भासस्य प्रतिमाभिषेकाविमारकबालचरितादिषु नैकवर्षीया कथा विलसति। तथैव कालिदासस्याभिज्ञानशाकुन्तलविक्रमोर्वशीययोः, भवभूतेर्महावीरचरितोत्तररामचरितयोश्च कथा नैकवर्षीया। नैकदिवसानां मासानां वा कथा शेषेषु नाटकेषु वर्तते। कथास्थली नाटकस्य सीमितं नातिदीर्घं स्थानं न भजते अपितु एकस्मिन्नप्यङ्के शतशः क्रोशान् मानवलोकतः स्वर्गलोकं यावद खिलभारतं वा क्रोडी करोतीति अभिज्ञानशाकुन्तलोत्तररामचरितादिषु दृश्यते। फलं प्रति सर्वेषामवान्तरकार्याणां महाकार्यस्य चान्वितिः साधारणतो वर्तते। योरपेऽपि अन्वितित्रयस्य सिद्धान्तो मध्ययुगतो नातिचीर्णो बभूव। भारत एकस्मिन्नङ्क एकदिनस्य कथाया अवधारणं भवति।

---

1. European Theories of the Drama, P. 94.
   'अन्वितित्रयम्' सङ्कीर्णपरिधौ योरोपीय-देशेष्वपि कवीन् शाश्वतं नियन्तुं सक्षमं नासीत्। तथा हि—It can be seen then by this that the ancients and the most excellent masters of the profession have not always observed that rule ( अन्वितित्रयम् ) which our critics desire to make us so religiously observe at the present time. Ibid P. 120.

२. तेनेदंमात्रं कथितम्—Trgedy endeavours to keep as far as possible within a single circuit of the sun, or something near that.

## अङ्कविधानम्

संस्कृतनाटकेषु मूलतः पञ्चानामवस्थानां क्रमानुसारानुबन्धेन पञ्चाङ्कानां नियमोऽभवत् ।[१] नियमोऽयं शाश्वतो नाभवत् यतो हि नामैकस्मिन्नङ्क एकदिनस्यैव कथा भवेत्[२] किन्तु तत्सम्बन्ध्यवस्थायां दिनद्वयस्य कार्यजातं समन्वितं स्यात् । तर्हि एकस्या अवस्थायाः कृते द्वावङ्कौ भवेताम् । अधिकदिनानां कार्याणि एकस्मिन्नङ्के न निवेशनीयानि । अत एव नाटकेष्वधिकाधिकं दशानां दिनानां कार्याणि दशभिरङ्कैर्दर्शनीयानि । यदि नाम कस्यचिद्दिनस्य कार्याणि अवस्थाद्वयात्मकानि स्युः, तर्हि एकस्मिन्नेवाङ्के द्वयोरवस्थयोः सन्निधान स्यात् ।

योरपीयनाटकेष्वपि प्रारम्भे पञ्चानामवस्थानां पञ्चभिरङ्कैः (Acts, Scenes) अनुबन्धोऽभवत् ।[3] जानसन महोदयोऽङ्कं परिभाषते—
An act is only the representation of such a part of business of the play as proceeds in an unbroken tenor or without any intermediate pause.[४]

तत्रापि शनैः शनैरङ्कानां संख्या समवर्धत ।[५] एकस्मिन्नङ्के बहूनि

---

१. अस्यावस्थोपेतं कार्यं प्रसमीक्ष्य बिन्दुविस्तारात् ।
कर्तव्योऽङ्कः सोऽपि तु गुणान्वितं नाट्यतत्त्वज्ञैः ।। ना० शा० १८.१३
एतदधिकृत्याभिनवगुप्तो विशदयति—यदा प्रारम्भावस्था पूर्णत्वमेति तदाङ्कच्छेदो विन्दुद्वारानुसन्धीयमानद्वितीयाङ्काभिधेयरूपो विधेयः । एवं प्रयत्नाद्यवस्थाचतुष्टयेऽपि वाच्यमिति । पञ्च तावदङ्का इति मुख्यः कल्पः ।

२. क्वचिदेकदिनस्य कथा द्वाभ्यामङ्काभ्यामपि वर्ण्यते । यथा वेणीसंहारस्य चतुर्थपञ्चमयोरङ्कयोरैकदिनस्यैव कथा विलसति ।

३. लैटिन नाटकेषु Acts पुरारब्धाः । पूर्वत एव ग्रीकनाटकानि दृश्यैः (Scenes) विभक्तान्यासन् । परवर्तियुगेऽङ्कानाम् Acts दृश्यैः विभाजनं प्रारब्धम् ।

४. European Theories of the Drama P. 234.

5. आदिविधानानुसारेण कथाविस्तारोऽधोविधो विकसति ।
Act I—Principal points of the story are made clear.
Act II—Complications arise
Act III—Trouble deepens
Act IV—Matters look desperate
Act V—Knot loosed

दृश्यानि योरपीयमध्ययुगीननाटकेषु प्रायशो दृश्यन्त एव । संस्कृतनाटकेष्वपि यद्यपि दृश्य-विभाजन-विषयक-विधानं नाट्यशास्त्रीयां प्रतिष्ठां न भजते, तथापि मृच्छकटिकादिषु नाटकेषु अङ्कानां दृश्येषु विभाजनं तु प्रत्यक्षतो वर्तते ।

कति पात्राणि कस्मिंश्चिदङ्कस्य संवादे युगपद् भागग्राहिणो भवेयुरिति भारतीयविधानं योरपीयविधानं च प्रायः समानमेव । अङ्के कार्यपुरुषाश्चत्वारः पञ्च वा भवेयुः । तथापि भारते रङ्गपीठेऽनेकगणेषु विभक्ता नायकाः स्वतन्त्ररूपेण वा युगपत् सम्भाषमाणा अधिकाधिकसंख्यका भवन्ति । यथावश्यकं रङ्गशीर्षे विश्राम्यन्तो नायकाः संवादे यदा तदा भागग्राहिणो भवन्ति ।

## वृत्त्यनुसारेण वस्तु-संविधानम्

कथावस्तु रससमुद्रनुद्रितं भवति । तत्राङ्गरसा अङ्गिरसाश्च विलसन्ति । अङ्गिरसस्य परिपोषणाय तत्सम्बन्धि वृत्त्यनकूलमेव घटनाचक्रं प्रधानतो दृश्यरूपेण निबन्धनीयम् । अपरवृत्तीनां घटनास्तु संक्षेपेण सूचनीयानि । घटनासंक्षेपस्तु क्वचिदर्थोपक्षेपकैरन्यत्रैकोक्तिभिः । (Soliloquy) सन्देश-पठनेन, विशेषण-वाचनेन, श्रव्यविधानेन च प्रस्तूयते । यथाभिज्ञानशाकुन्तले दुर्वाससः शापो विष्कम्भकेण नेपथ्यवचनेन च सूच्यते, यतो हि नाम कैशिकीवृत्तिप्रधाने नाटकेऽस्मिन् आरभटीवृत्तिपरा शापघटना न समञ्जसति । सप्तमाङ्के पुनर्दुष्यन्तस्य दानवगण-विजय-पराक्रम- सात्वतीवृत्त्युचितः कविना मातलिवचनमात्रेण पंक्तिपञ्चकैरेव सूचितः ।

**भाग्य विपर्ययः**

कथावस्तुनि नायकानां विशेषतः प्रधाननायकयोर्भाग्यविपर्ययो दर्शनीयः । शृङ्गारप्रधानेषु नाटकेषु प्राप्त्याशावस्थायां नायिकाया ईषत्समागमानन्तरं वियोगापत्तिर्भवत्येव । कालिदासीयनाटकत्रय्यां त्वेतत्स्पष्टमेव ।

पदे पदेऽपि नायकयोर्भाग्यमुच्चावचतया विचित्रीयते । यथा स्वप्नवासवदत्ते पञ्चमेऽङ्के—

राजा—वयस्य, प्रियमावेदये । धरते खलु वासवदत्ता ।

विदूषकः —कुत्र वासवदत्ता ? चिरात् खलूपरता वासवदत्ता ।

राजा –वयस्य मा मैवम् ।

> शय्यायामवसुप्तायां मां बोधयित्वा सखे गता ।
> दग्धेति ब्रुवता पूर्वं वञ्चितोऽस्मि रुमण्वता ॥ ५.८

विदूषकः —असम्भावनीयमेतन्न । आ उदकस्नानसङ्कीर्तनेन तत्रभवतीं चिन्तयता सा स्वप्ने दृष्टा भवेत् ।

इत्यारभ्य 'मेदानीं भवाननर्थं चिन्तयित्वा । एतु भवान् । चतुश्शालं प्रविशामः ।

यथा वा विक्रमोर्वशीये पञ्चमाङ्के आयुष्कुमारं लब्ध्वा सहर्षं परिक्रामति उर्वशी । तदनु तापस्यां गतायाम्—

राजा—(उर्वशीं प्रति) कल्याणि

> अद्याहं पुत्रिणामग्र्यः सत्पुत्रेणामुना तव ।
> पौलोमीसम्भवेनेव जयन्तेन पुरन्दरः ॥ ५.१४

( उर्वशी स्मृत्वा रोदिति )

राजा—( सावेगम् )

> किं सुन्दरि प्ररुदितानि ममोपनीते
> वंशस्थितेरधिगमान् महति प्रमोदे ।
> पीनस्तनोपरि निपातिभिरानयन्ती
> मुक्तावली-विरचनां पुनरुक्तिमस्रैः ॥ ५.१५

( अस्या बाष्पं प्रमार्ष्टि )

उर्वशी—तदेतावानेव मे महाराजेन संवासः । (सर्वे विषादं नाटयन्ति । राजा मोहमुपगच्छति)

यदा नायको वनाश्रयं ग्रहीतुमुद्यतः, उर्वशी स्वर्गारोहणाय समुद्यता च, तदा नारद आगत्य राजानं कथयति—

इयं चोर्वशी यावदायुः तव सहधर्मचारिणी भवत्विति ।

उर्वशी—शल्यमिव मे हृदयादपनीतम् ।

**वृत्तद्वयम्** (Principal and Accessory

संस्कृतनाटकेषु आधिकारिककथायाः प्रासङ्गिककथायाश्च विधानं

नाट्यशास्त्रादिषु सम्यग्वर्तते, किन्तु स्वल्पेष्वेव नाटकेषु पूर्वोक्तं द्विविधं कथावस्तु समन्वितमेव लभ्यते ।[1]

योरपीयनाटकेषु कथाद्वय-समन्वयः प्रशस्त इति मान्यताभवत् ।[2]

## द्वन्द्वम्

योरपीयनाटकेषु प्रारम्भत एव द्वन्द्वस्योत्पत्तिः संवर्धनं शमनं चाश्रित्य कथानकं प्रायो विकसति । तत्सम्बन्धिविरोधस्तु नायकप्रतिनायकयोः, नायकसमाजयोः, नायकस्य विचार-सरणि-विकल्पस्य वा भवति ।[3]

भारतीयनाटकेषु द्वन्द्वं कतिपयनाटकेषु दृश्यते । तेषु मुद्राराक्षसं सुप्रथितम् । तत्र चाणक्यराक्षसयोर्द्वन्द्वमाद्यन्तमन्तर्निविष्टमेव प्रकटति । वेणीसंहारे भीमदुर्योधनयोः, बालचरिते कंसकृष्णयोः, प्रतिमानाटके रामरावणयोः, मध्यमव्यायोगे भीमघटोत्कचयोर्नाम द्वन्द्वं वर्तते ।

बहुषु नाटकेषु नायिकाप्राप्तिपथे दैवी वा मानुषी वा वाधा प्रवर्तेत । देवानां मित्राणां वोपाययोगेन बाधा विनश्यन्ति । अभिज्ञानशाकुन्तले

---

१. व्यभिचारिवृत्तं नाटकेऽस्त्येवेति उत्तररामचरिते शम्बूकवधकथांशेन दर्शितमेव

2. No drama can be praiseworthy which has not two actions, that is two plots, though one is principal and the other is accessory : European Theories of the Drama P. 64.

3. The cardinal part cf drama is the conflict. All drama ultimately arises out of conflict. In tragedy the "pity" and "terror" issues out of conflict. In comedy the essence of the laughable is derived from the same source. Struggle between two physical forces ( which may be characters), or between two minds, or between a person and a force beyond that person is to be found in the drama of ancient Greece.

Then there is inward conflict going on within the mind of the hero, conflict of emotion with emotion, of thought with thought etc.

दुर्वासःकृता बाधा इन्द्रादिदेवानां साह्येन दूरी भवन्ति। द्वन्द्वं तत्र प्रत्यक्षं न भवति। मालविकाग्निमित्रे पुना राज्ञीद्वयं नायकस्य नवं प्रणयं विहन्तु-मुद्यतम्। तत्र च विदूषकादीनामुपाययोगेन नायको नायिकां लभते।

उत्तररामचरिते द्वन्द्वं तु मानसिकमेव। तत्रात्मदर्शी नायकः स्वकरणीयस्य परिणामं मन्यमानोऽन्तर्दहति। न चेष्टते स विमोक्षाय किन्तु देवानामृषीणां च साह्येन, भवतु नाम, कतिपयवर्षानन्तरं स स्वीयां प्रियां सानुरोधं लभते।

**पात्र-परिचयः**

नाटकेषु महत्त्वपूर्णपात्राणां परिचयो रसनिष्पत्तिदृष्ट्यापेक्षित एव, यतो हि नाम तानि पात्राणि सम्यक् परिचितान्येव विभावत्वं साधयन्ति। अयं परिचयः क्वचन स्वमुखेनैव पात्रं प्रस्तौति। यथाभिज्ञानशाकुन्तले सानुमती आत्मविषयकं निवेदयति—

निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यं यावत् साधुजन-स्याभिषेककाल इति। साम्प्रतमस्य राजर्षेरुदन्तं प्रत्यक्षीकरिष्यामि। मेनकासम्बन्धनेन शरीरभूता मे शकुन्तला। तया च दुहितृनिमित्तमादिष्ट-पूर्वास्मि। अनेन पात्रं किं कर्त्तुं समर्थ इत्यपि ज्ञायते।

परमुखेनापि पात्रस्य दुर्भाग्य-सौभाग्याधायकानि वृत्तानि परिचय-प्रकरणेन दातव्यानि सन्ति। यथा वेणीसंहारे—

> कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी।
> कृष्णा केशोत्तरीयव्यपनयनमरुत्पाण्डवा यस्य दासाः
> राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
> क्वास्ते दुर्योधनोऽसौ कथयत न रुषाद्रष्टुमभ्यागतौ स्वः॥ ५.२६

अत्र दुर्योधनं प्रति कथं व्यवहरणीयमित्यनेन परिचयवाक्येन परि-चीयते।

प्रायशः पात्रस्य रङ्गे प्रथमप्रवेशस्यावसरे तस्य परिचयो दीयते। किन्तु विशेष-प्रयोजनमुद्दिश्यान्यत्रापि पात्रपरिचयो निवेद्यते। वेणी-संहार एतस्योदाहरणं पञ्चमेऽङ्केऽधोविधं वर्तते—

भीमः—मूढ, अनुल्लंघनीयः सदाचारः। न युक्तमनभिवाद्य गुरून् गन्तुम्। (उपसृत्य) संजय, पित्रोर्नमस्कृतिं श्रावयो अथवा तिष्ठ। स्वयं विश्राव्य नामकर्मणी वन्दनीया गुरवः।

अर्जुनः —(उपगम्य) तात अम्ब

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः पाण्डवोऽयम् ॥ ५.२७

भीमः —चूर्णिताशेषकौरव्यः क्षीवो दुःशासनासृजा ।
भक्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसाञ्चति ॥ ५.२८

प्रकरणेऽस्मिन् नामकर्मणी विश्राव्य वन्दनीया गुरव इति पात्रपरिचयस्य रूपमेव ।

प्रेक्षकाणां नायकाय सहानुभूतिं बहुलीकर्त्तुमेव क्वचित् पात्रपरिचयोऽपेक्षितो भवति । यथा वेणीसंहारे मुनिवेशधारी राक्षसो रङ्गं प्रविशति । स स्वमुखेनात्मानं परिचाययति—

'एषोऽस्मि चार्वाको नाम राक्षसः सुयोधनस्य मित्रं पाण्डवान् वञ्चयितुं भ्रमामि' अतः परं तस्य भयंकरी युधिष्ठिर-प्रतारण योजना प्रवर्त्यते । 'नायको युधिष्ठिरोऽनेन राक्षसेन प्रतार्यते' इति प्रतीत्या प्रेक्षकाणां तस्मै सहानुभूतिर्जृम्भते ।

### पात्र-प्रवेशः

नाटकेषु प्रागेव सूचितो नायको रङ्गं प्रविशेदिति साधारणनियमः । अयं नियमस्तु अवरकोटिकपात्राणां प्रेष्य-भृत्य-भट-चेटादीनां रङ्गप्रवेशविषये सर्वत्र न दृश्यते । उत्तम-मध्यमनायकानां प्रवेश-प्रकरणेऽपि सर्वत्र स्पष्टा वा साङ्केतिकी वा सूचना सर्वत्र न भवति ।

प्रेक्षका रङ्गप्रविष्टं पात्रं जानन्त्विति पूर्वोक्तसूचनायाः सविशेषं महत्त्वम् । सूचनां विनापि बहूनि पात्राणि स्ववेषादिभिरभिज्ञायन्ते । यथा चेटादयो विटविदूषकादयश्च । ते प्रायः सर्वेऽवरकोटिका एव । उच्चकोटिकाः पुरुषा यदा रङ्गं प्रविशन्ति तदा तेषां पूर्वसूचना रङ्गे पूर्वतः वर्त्तमानान् जनान् तेषां सम्भावनायै सज्जीकर्तुमावश्यकी । तेषामागमनेन कश्चन्महत्त्वपूर्णो नवीनः कथांशः प्रवर्तेतेति प्रेक्षकाणां तद्विषये सूचनावश्यकी भवति ।

यत्र श्रेष्ठपुरुषा अपि सूचनां विनैव रङ्गं प्रविशन्ति, तत्र कविर्विशेषोपायेन तेषां पूर्वतो वर्तमानाञ्जनान् प्रति सूचनां करोति । क ते उपायाः ?

**आत्मनिवेदनेन**

आगन्तुको जनः स्वयमेवात्मनिवेदनं परोक्षरूपेण करोति। तद्यथा पञ्चरात्रे भीम :—

आदीपिते जतुगृहे स्वभुजावसक्ता
मद्भ्रातरश्च जननी च मयोपनीताः।
सौभद्रमेकमवतार्य रथात्तु बालं।
तं च श्रमं प्रथममद्य समं हि मन्ये ॥२ ४२

## स्त्रीपात्राणि

नारीपात्राणि रङ्गपीठे न केवलं स्त्रीणामपितु पुरुषाणामपि भूमिकायामभिनयन्ति स्म। विक्रमाङ्कदेवचरिते बिल्हणः कश्मीरललनानामुत्कृष्टाभिनयं प्रशंसति।[1]

नारीपात्राणि तु नर्तक्यः सन्ति। तेषामौदात्त्यं भरतमुखेन वर्णनीयम्—

हुताश एव दीप्ताभिरुल्काभिः परिमार्जनम्।
नृपतेर्नर्तकीनां च कुर्याद्दीप्त्यभिवर्धनम्॥
अभितोद्य सहातोद्यैर्नृपतिं नर्तकीस्तथा।
मन्त्रपूतेन तोयेन पुनरभ्युक्ष्य तान् वदेत्॥
महाकुले प्रसूताः स्थ गुणौघैश्चाप्यलंकृताः।
यद्वो जन्मगुणोपेतं तद्वो भवत नित्यशः॥

ना० शा० ३.८३-८५

नर्तकीषु सूत्रधारी रमणीरत्नं भवति शूद्रकस्याधोविधप्रमाणेन—

'नवनाटकदर्शनोत्थिता सूत्रधारीव' वसन्तसेना। १.५१/५२

## अभिनयकालावधिः

साधारणतो नाट्यं सकृत् नातिचिरं प्रावर्तत। याममात्रमेव नाट्याभिनयः शोभनः स्यात्[2]। तथापि कतिपयदिवसेषु केषाञ्चिन्नाटकानामभिनयः प्रचरित इति तेषां वैपुल्येनानुमीयते। बालरामायणमेतादृशेषु

---

१. विक्रम० १८.२३,२९

२. याममात्रसमाप्यं यत्तन्नाट्यं रागवर्धनम्।
दीर्घं विरागजनकमतो नाट्यं विवर्जयेत्॥

नाटकेषु प्रथमं स्थानम्भजते। योरपीयदेशेष्वपि कतिपयदिवसान् यावत् कस्यचिन्महानाटकस्याभिनयः प्रावर्तत। तत्रापि साधारणतो होराद्वयाद् होरासप्तकं यावत् साधारणो नाट्यावधिः सम्मतः[1]।

**नाट्यधर्मी**

'यल्लोके भवितुं नार्हति किन्तु रङ्गपीठे नटैरभिनयविशेषैः प्रत्यक्षीकार्यते' तत् नाट्यधर्मी। तथा हि—अभिज्ञानशाकुन्तले प्रथमेऽङ्के नायको वने रथारूढो मृगयते। रथारूढो नायको वने परिभ्रंशन्तं मृगमनुयातुं न क्षमत इति वस्तुस्थितिः। किन्तु रङ्गपीठे वनभूमौ रथारूढस्य राज्ञो मृगयाभिनीयते इति नाट्यधर्मी-प्रयोगः।

नाट्यधर्मी-प्रयोगो भूयिष्ठमुल्लसति संस्कृतनाटकेषु। तेषां समाकलनं नाट्यसम्भाव्यतावधारणार्थमपेक्षितम्।

भरतस्तु नाट्यधर्मीप्रयोगं पात्रप्रवेशमधिकृत्य वर्णयति।

> नगरे वा वने वापि सागरे पर्वतेऽपि वा।
> दिव्यानां गमनं कार्यं द्वीपे वर्षेषु वा पुनः॥ १३.१८
> आकाशेन विमानेन माययाप्यथ वा पुनः।
> विविधाभिः क्रियाभिर्वा नानार्थाभिः प्रयोगतः॥ १३.१९

अभिनवगुप्तो विशदयति—आकाशगामिना विमानेन मायया वा अदर्शनरूपया, अन्याभिर्वा बलादाहरणादिक्रियाभिर्विविधप्रयोजनाभिः कार्यम्।

**कालावधिकनाट्यधर्मी**

कतिपयवर्षान्तरालेनापि घटिता कथा द्वित्राणां होराणामभिनयेन प्रत्यक्षीकार्यते। तथा हि—अभिज्ञानशाकुन्तलस्य कथा वर्षत्रयावधिकी वर्तते। सा तु होरात्रयेणाभिनीयते।

कश्चित्पुरुषः किमपि कार्यं साधयितुं न्यूनातिन्यूनं होरार्धमपेक्षते, किन्तु रङ्गपीठे तु क्षणार्धेनैव तत्कार्यं सम्पादयति। तद्यथा मृच्छकटिके—

अधिकरणिकः — य एषोऽधिकरणद्वार्यश्वस्तिष्ठति, तमेनमारुह्य गत्वा पुष्पकरण्डकोद्यानं दृश्यतामस्ति तत्र काचिद् विपन्ना स्त्री न वेति।

---

1. Oxford Companion to Theatre p. 420.
वर्मादेशे क्वचिदभिनयो रात्रौ नववादनकालतः प्रातः चतुर्वादनकालं यावत् प्रवर्तते Theatre in the East. p. 113.

वीरकः—यदार्य आज्ञापयति। (इति निष्क्रान्तो प्रविश्य च) गतोऽस्मि तत्र। दृष्टं च मया स्त्रीकलेवरं श्वापदैर्विलुप्यमानम्।

अद्भुतार्थ-निवेशनाय नाटयधर्मी बहुशः प्रयुक्ता।

**ऐन्द्रजालिकप्रयोगः**

रत्नावलीनाटिकायां राजप्रासाद ऐन्द्रजालिकप्रयोगेण ज्वालावलीढो भवति। तत्र वासवदत्ता-विदूषक-वसुभूति-बाभ्रव्यादयोऽग्नौ निपतन्ति। ते सर्वे नायिकया सहादग्धा परावर्तन्ते रङ्गपीठे।

भासोऽविमारके नायकमग्नौ निपतन्तं ततोऽदग्धमेव दर्शयति।

कर्पूरमञ्जर्या नायिका दूरत आनीयत इन्द्रजालबलेन

**देवादीनामृद्धिप्रयोगाः**

देवादीनाममानवीयाः शक्तयो विभूतयः सिद्धयश्च रङ्गपीठे दरीदृश्यन्ते। तद्यथा—उत्तररामचरिते रामस्य विमानराजो भाषया नियम्यते। रामो वदति—विमानराज, अत्रैव स्थीयताम्। अभिज्ञानशाकुन्तले तु दुष्यन्तो मातलिना सहेन्द्रलोकमाकाशयानेन विमानेन गच्छति।[1] ततः परं परावर्तनपथे स स्वर्गमार्गं लक्षते। तद्यथा मातलिर्वर्णयति—

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मिः।
तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम्॥ ७.६

भासस्याविमारके नाटके विद्याधरस्याङ्गुलीयकं धारयित्वा नायको यथेच्छं दृश्योऽदृश्यो वा भवति। अनेनोपायेन स नायिकाया भवनगतः प्रच्छन्न एव चिरं तस्याः साहचर्यं लभते।

भरतो नाटयधर्मीतत्त्वं परिभाषते—

**काव्यगतनाटयधर्मी**

अतिवाक्यक्रियोपेतमतिसत्त्वातिभावकम्।
लीलाङ्गहाराभिनयं नाटयलक्षणलक्षितम्।

एतदनुसृत्याभिनवगुप्तो निर्दिशति—

१. **अतिवाक्यक्रियोपेतमिति**—इतिहासादिवाक्यमतिक्रम्य योचितरञ्जकेतिवृत्तकल्पनात्मिका क्रिया। यथा बालरामायणे न तु कैकेयी रामं

१. विमानोऽयं गगनविहारी संयतप्रग्रहो बभूव।

निर्वासयति, अपि तु कश्चिद्राक्षसो मायादशरथो भूत्वा रामं निर्वासयतीति नाटचधर्मी। इयं तु कुन्तकस्य कथावस्तुनः प्रतिसंस्कारवक्रता।[1] तत्र स उदाहरति दुर्वाससः शापोऽभिज्ञानशाकुन्तलस्य चतुर्थाङ्कीय-विष्कम्भके।

२. **अतिसत्त्वादिकमिति**—स्वभावचित्तवृत्तिमतिक्रम्य यत्स्थितं कविकल्पितचित्तवृत्त्यन्तरयुक्तम्। यथा स्वभावचपलविदूषकचित्तवृत्त्य-तिक्रमात्। यथा वत्सराजेन मन्त्रिणामुचितगाम्भीर्यावहित्थयोजनं वसन्तकस्य तथा।

मृच्छकटिके शूद्रकेण वसन्तसेनायाश्चित्तवृत्त्यन्तरं साधु प्रकल्पितम्। वेश्याभूतापि सा सती साध्वी बभूवेति नाटचधर्मीविशेषः।

३. **अतिभाषकमिति**—स्वभावभाषितमतिक्रम्य यत्स्थितम्। यथा राज्या संस्कृतम्, पशूनां परस्परसंवादो वा।

**नटगता नाट्यधर्मी**

१. **लीलाङ्गहाराभिनयमिति**—लीलया शोभाप्रधानतया अङ्गहाराणि मनोहराणि तत्प्रधानैरभिनयैरुपेतम्।

२. **स्वरालङ्कारसंयोजनमिति**—पाठे स्वरालङ्कारसंयोजनया युक्तम्।

३. **अस्वस्थपुरुषाश्रयमिति**—यत्र च पुरुषो न स्वरूपे तिष्ठति, अपि तु स्त्रीत्वमाश्रयति। प्रयोज्यः पुरुषो यत्र न स्वरूपस्थः अपि तु स्त्रिया प्रयुज्यते, तन्नाट्यधर्मी।

**छायाप्रयोगेण नाट्यधर्मी**

भरतः पक्षिणां श्वापदानां च पशूनां च स्वस्वजातिसमुत्थेन स्वभावेन गतिर्भवेदिति सूचयति। तथाहि—

सिंहर्क्षवानराणां च गतिः कार्या प्रयोक्तृभिः।
यां कृता नरसिंहेन विष्णुना प्रभविष्णुना ॥ १२.१५४

## रङ्गे रथादयः

वैदेशिकरङ्गे रथादीनां चर्या बभूव। सेनाया अपि प्रयाणं तत्र प्रत्यक्ष-दृश्यमासीत्। भारते साधारणतः सुसंस्कृतरङ्गे नैतादृशानां रथादीनां चर्या प्रत्यक्षदर्शिता। तत्राङ्गहारादिना व्यञ्जनया सङ्केतेन वा महत्ता

---

1. उत्पाद्यलवलावण्यादन्या लसति वक्रतेति ४.३

दर्शयितव्या बभूवेति शास्त्रीयमतानुसारेण सत्यमेव रथादीनि। विदेशे रङ्गमण्डपस्य विपुलाकारो रथादीनि बहुविधमहत्तमानि वस्तूनि साक्षात्कारयितुमार्हत् ।

तथापि लक्ष्यग्रन्थप्रमाणेन प्रवहणादीनां तेषूपविष्टानां जनानां च स्थितिर्निस्सन्दिग्धैव । तथा हि मृच्छकटिकस्याष्टमेऽङ्के प्रवहणे प्रविश्यैव शकारस्तत्र राक्षसीं पश्यति । स कथयति—

भाव प्रवहणान्तः स्त्री प्रतिवसति । विटस्तत्र वसन्तसेनां पश्यति ।

तदनु वसन्तसेनावतीर्यैकान्ते स्थिता ।

पूर्वमदृष्टा वसन्तसेना पश्चात् प्रवहणादवतीर्य सर्वैर्दृश्यते । अत एव स्पष्टं प्रतिभाति यत् सा प्रवहणे व्यराजत ।

गोपालदारकस्यापि प्रवहणेन गमनं चारुदत्तस्य दर्शनं च रङ्गे प्रवहणचर्यां विना न सम्भवतो यतो हि नाम प्रवहणे प्रच्छन्नो गोपालदारकश्चश्चन्दनकेन सम्भाषते, तस्मादसिं लभते च । किन्तु तत्रैव स्थितो वीरकस्तं न पश्यति । प्रवहणवाहकश्चेटो जानाति यद् वसन्तसेना प्रवहण उपविष्टा वर्तते। प्रवहण आगते प्रवहण उपविष्ट आर्यको न केनापि दृश्यते। वसन्तसेनैवागतेति चेटवचनेन चारुदत्तो जानाति। प्रवहणं प्रविश्यैव विदूषकः कथयति—न वसन्तसेना, वसन्तसेनः खल्वेषः । अत एव रङ्गे प्रवहणस्य तस्मिन्नुपविष्टस्य प्रच्छन्नस्य स्थितिः प्रमाणितैव ।

**मूर्तिमन्तो रथादयः**

भरतस्य 'शैलयानविमानानि चर्मवर्मायुधध्वजा मूर्तिमन्तः प्रयुज्यन्ते'[1] इति कथनेन न तु वास्तविकरथः किन्तु शिल्पकृतो रथो रङ्गे नेय इति ज्ञायते ।

देशकालकलावैविध्येन साक्षाद्दर्शनं छायया प्रतीकेन वा प्रतिबोधनं कस्यचिद् वस्तुनः समुपकल्पितम् ।

### सर्वसाधारण-नाट्यमण्डपः

रङ्गमण्डपस्य स्वरूपं भरतादिभिः नियमितं वर्तते । तथापि स्वतन्त्रतया सूत्रधारादय आवश्यकतानुसारेण नित्यं नवनवस्वरूपात्मकं रङ्गमण्डपं निर्मितवन्तः । तद्यथा रामचन्द्रेण नाट्यदर्पणे वितन्यते—

---

१. ना० शा० १३.७६

रथ्यासमाजचत्वर-सुरालयादौ प्रवर्त्यते बहुभिः।
पात्रविशेषैर्यत् तत् प्रेक्षकं कामदहनादिः॥

मनमोहनघोषः सम्प्रधारयति—

It cannot be said how far the ancient Indian plays were performed in specially constructed theatres. It may be possible that only kings and very wealthy people owned play houses constructed according to the Natyasastra while dramatic spectacles meant for the common people were held in the open halls, called Natamandira in front of temples, or in a temporarily devised theatre under the cover of a canopy, as in the case of the modern Bengali Yatras which seem to have unmistakable resemblance and connection with the ancient Indian Natya described in the Natya-sastra.[1]

The Natyas'astra : Introduction P. LI.

देवालयानां मण्डपेषु नाट्य-प्रदर्शनं तु साधारणरीतिरासीत्

योरपीयदेशेष्वपि स्थायिभवनं विनापि आधुनिक 'रामलीलावत्' नाट्याभिनयो विशालप्राङ्गणेष्वभवत्। तत्र दर्शकाः १७,००० अपि बभूवः।

परवर्ति युगे 'बेअर-स्टेज़' इति नाट्यमण्डपस्योपयोगोऽभवद् योरपीय-देशेषु।[2]

## कवेः सत्त्वौदात्त्यम्

कवेः स्वकीया विचारा जीवनोद्देश्यानि च तस्य कृतौ प्रतिफलन्ति। स स्वयमेव विविधपात्राणां मुखेन नाटकोचितं संवादादिकं वितनुते। ग्रीक-देशे तु बहवो नाटककारा योद्धारोऽभवन्, स्वयमेव स्वनाटकाभिनयप्रयो-

---

१. महाकालीमण्डपे गङ्गादास-प्रतापविलासस्य प्रथमप्रयोगोऽभवदिति प्रस्तावनातो ज्ञायते।

२. A stage free from any scenery or properties. Sobel : The Theatre Handbook P. 75.

जनेन नाट्याचार्या अभिनेतारश्च बभूवुः[१]। मध्ययुगेऽपि योरपीयनाटककाराणां हिंसा-प्रवृत्तिरुल्लेखनीयासीत्।[२] भारते श्रेष्ठराजानो, राजामात्या दार्शनिका महापण्डिताश्च नाटकं रचयामासुः।

## श्रव्यमात्रेणापि नाट्यम्

'नाटकीयेष्वङ्केषु नायकचरितमङ्कभागे दृश्यमेव वर्तते' इति धनञ्जयस्याधोवचनेन विज्ञापितम्—

प्रत्यक्षनेतृचरितोऽङ्कः[३] ॥ दश० ३.३०

नैतत् लक्ष्यग्रन्थेषु दृश्यते। विशुद्धश्रव्येण विधिना प्रचुरं वस्तु अङ्केषु वितन्यते। यथा वेणीसंहारस्य चतुर्थेऽङ्के सुन्दरको दूतः दुर्योधनाय सविस्तरं वर्णयति कथं नाम वृषसेनार्जुनयोर्युद्धमभवदिति। तत्र वृषसेनो मृत इति च। मुद्राराक्षसे दूताश्चाणक्याय राक्षसाय चारिभिर्नायकैकृतं कार्यजातमङ्कभागे वर्णयन्ति। तथा हि—

द्वितीयाङ्के राक्षसः (विराधगुप्तं प्रति)—सखे वर्णय कुसुमपुरवृत्तान्तम्।[४]

---

१. तथा ग्रीसदेशे एअक्लीज् (५२५—४५६ ई० पू०) मराथान-समरे पारसीकै रयुध्यत्। स ९० नाटकानां रचयितासीत्। स्वयमभिनेता चासीत्, नटानशिक्षयच्च। तस्य नाटकानि धार्मिकाणि देशभक्तिपराणि च विलसन्ति। सोफोक्लीज ४९७–४०५ ई० पू० तत्रैव सेनापतिः १०० नाटकानां रचयिता बभूव। अपवादरूपेण तत्र बभूव यूरिपीडिज् (४८५—४०६ ई० पू०), स्वरचनासु चारित्रभंश-प्रवृत्तीनां निदर्शको नास्तिकः।

2. During Elizabethan times poets, creators of beauty, were violent men. Jhonson killed a man in a duel, Marlowe was stabbed. Sidney was killed in a battle. Millett : The Art of the Drama P. 43.

३. अनेनाङ्कभागे नायकचरितस्य श्रव्यता न निषेधिता। अभिप्रायो मूलशास्त्रकृतोऽयमेव विद्यते यदुपक्षेपकादिषु नायकचरितं दृश्यं न भवेत्।

4. यथा मिलेटमहोदयो दर्शयति The messengers speeches are frequently the most purple patches in even a distinguished play. The Art of the Drama, P. 225

## नाट्यस्य लोकप्रतिष्ठा

भारते शाश्वतमेव नाट्यकला वैभवशालिनां राज्ञां धर्माचार्याणाञ्च प्रेष्ठाभवदस्ति च। इयं नाट्यकलार्यमिश्राणां विद्वद्वराणां राजामात्यानां तीर्थिकानां राज्ञीनां, परिजनानां च परितोषाय प्रवर्तमाना सर्वेषां कृते जीवनोद्देश्यं प्रदर्शितवती। नैतादृशी स्थितिर्योरपीयदेशेषु सदावर्तत। तत्रत्या राजानो धर्माचार्याश्च प्रारम्भिकयुगे प्रायशो नाट्यविद्वेषका बभूवुः। नाट्य तु न सत्पथानुयायिना दर्शनीयमिति सामाजिकी धारणासीत्। नाटकीया नाट्यानि च सुसंस्कृतनागरैरुपेक्षितानि नगरेभ्यो बहिष्कृतानि मध्ययुगं यावत् कथं कथमपि श्वसन्ति स्म। इयं स्थितिर्नाटकस्य स्वरूपं द्वयोर्महाद्वीपयोर्भिन्नं भिन्नमेव प्रकरोति। राजाश्रितं विद्वदाश्रित च भारतीयं नाट्यं चिरं संवर्धते।

### योरपे नाटकदुर्दशा

नाटकस्याभ्युदयः समाजे नाटकलेखकानां, नटानां नाट्यमण्डपानां च प्रतिष्ठा-सौष्ठवेनाभिव्यज्यते। तद्यथा सोबेल महोदयो वर्णयति—

In the 17th century actors in Germany were vagabonds, roamers, jugglers, quacks, musicians and acrobats.

Active opposition by London authorities to the Theatrical activities caused many playhouse-managers to move to Bank side, which was beyond the jurisdiction of the city.[1]

## अभ्युदयो नाटकान्ते

संस्कृतनाटकेषु प्रधाननायक आदौ मध्ये वा वैषम्यप्रपन्नोऽन्तेऽभ्युदयमर्जति। अयमभ्युदयश्च फलम्। नायकस्य सत्प्रयत्नेन, सद्वृत्तिभिश्चाभ्युदयात्मकमेव फलं निश्चप्रचम्। तद्यथा मालविकाग्निमित्रे—

धारिणी—साधारणः खलु तासां मम चायमभ्युदयः। ५.१७/१८

अभ्युदयकथयोचितं न लक्षितम्। ५.१८/१९

अभिज्ञानशाकुन्तले च

राजा—अयि, आचरितव्यमेतदभ्युदयकालेषु। ७.२५/२६

योरपीयनाटकेषु दुःखान्तानि ट्रेजेडीनामानि सुखान्तानि कामेडोनामानि च दृश्यानि भवन्ति। यद्यपि भारतीयनाटकेषु कामेडी-तत्त्वानि

1. Sobel : The Theatre Handbook P. 74, 32

भूयो लभ्यन्ते तथापि नायकदृशा नाटकादीनि कामेडीतो भिन्नान्येव सन्तीत्यधोविवेचनेन स्फुटमेव ।

### ट्रेजेडी-कामेडी

टेजेडी तु महतां वैषम्यं साटोपं निदर्शयति । कामेडी पुनरादौ वैषम्यपरापि मध्यमवर्गीयाणां साधारणलोकानां वा रमणात्मकं जीवनवृत्तं प्रस्तौति । ट्रेजेडी कामेडी च परस्परं भिन्नैव नायकदृष्टया, वस्तुदृष्टया[1] च ।

### अनाटकीयतत्त्वानि

नाटकस्य बहुविधान्युद्देश्यानि परिपालयितुं कविरनाटकीयानि तत्त्वानि योजयति । तानि वस्तुतः कथावस्तुविकासार्थं न साधकानि, प्रत्युत बाधकान्येव । न तु पात्राणां चरित्र-चित्रणार्थमपि तेषामुपयोगो वर्तते । अनाटकीयतत्त्वानां समावेशेन प्रबन्धशरीरे शैथिल्यं समुपजायते ।

वस्तुत ईदृशं शैथिल्यं वैदेशिकैः समीक्षकैरपि दोष एवेत्यालोचितम् ।[2]

मृच्छकटिकेऽनाटकीयतत्त्वानां प्राचुर्यं वर्तते । तत्र चतुर्थेऽङ्के वसन्तसेनाया भवनस्य पञ्चमेऽङ्के वर्षायाश्च दीर्घतरं वर्णनं सापेक्षं नास्त्येव ।

---

1. Comedy deals with men of humble station and tragedy deals with the adversity of a distinguished man. Comedy begins with adverse circumstances and has happy termination. It specialises in pleasing and amusing happenings. Whereas tragedy is lofty and sublime, comedy is humble and mild. European Theories of Drama P. 45. Tragedy is characterised by horrible events, irrespective of its sad ending or happy ending. Ibid P. 62
2. The relatively loose form of the English drama of the renaissance offered a particular temptation to the dramatists to introduce essentially non-dramatic passages. For example, the discussion of national drinking habits in the fourth scene of Hamlet strikes most readers as a dull and unwarranted intrusion. It does not further the plot, it does not advance the characterisation.

Millet : The Art of the Drama p. 224.

## नास्ति ग्रीकप्रभावः

भारतीयनाटके ग्रीकप्रभावो नास्त्येवेति मानियर-विन्टरनित्ज सप्रमाणं साधयति । तद्यथा—

The theory that the Indian drama had been influenced by the classical Greek comedy has long been rejected. Now we know that the beginnings of the Indian drama have to be looked for in the ancient ballad poetry, mostly connected with religious worship. In so far the drama was certainly indigenous in India. But the poet who introduced the drama into literature, also imitated the popular performances of strolling players. And it is just possible, that among these strolling players. there were also Greeks, who had come to India in the train of Bactrian and other foreign rulers in the North West of India. It may be urged against the Greek influcnce, that the Indian drama as we know, it has an entirely national Indian character. If there was any Greek influence on the Indian drama it can only have been a very superficial one.

Some Problems of Indian literature P: 77–78.

अभिज्ञानशाकुन्तलेऽङ्गुलीयकस्याभिज्ञानत्वं मिनेण्डरनामकेन महाकविना प्रणीतस्य Epitrepontes ( The Arbitrator ) नामकस्य नाटकस्याङ्गुलीयक-संविधानमुपजीवतीति तयोः संवादेन स्पष्टं प्रतीयते । सोऽयं महाकविः ख्रीष्टात् प्राक् चतुर्थशतके प्रादुर्बभूव ।[1]

मुद्राराक्षसे विषकन्यया राजकुमारस्य मारणयोगस्तु The Revenger's Tragedy नामके नाटके कस्याश्चिन् मृतप्रेयस्याः कपाले विषमयं परिधानं परिधाय तमसि राजकुमारस्य तस्याः संस्पर्शेन मृत्युं विहितवान् [2] इति नाटचकथाया मूलम् ।

---

1. World Drama : Epitrepontes
2. Soble : The Theatre Hand book P. 661

## आदर्शनाटकानि विश्वात्मकता च

कतिपयनाट्यकृतय आदर्शरूपाः सहस्रवर्षं यावदुदीय मानकवीनां पथप्रदर्शिका भवन्ति। यथा, भासस्य कालिदासस्य वा नाटकानि परवर्तियुगे नाट्यक्रियाया आदर्शभूता आद्रियन्ते स्म। योरपीयदेशेष्वपि तादृशा नाटककारा बभूवुः। स्पेनदेशोद्भवः सेनेका ख्रीष्टाब्दस्य प्रथमे शतके नवनाटकानि विरचितवान्, येषामानुरूप्यं पुनर्जागरणयुगेऽपि भृशं समीहितमासीद् योरपीयनाटकेषु। सेनेका योरपीयनाट्यविकासस्य प्रथमपदस्यान्तिमो महाकविः। इयमेव कलाकृतेर्विश्वात्मकता भवति।[1]

## सुसंस्कृति-शिक्षा

न केवलं कथा-प्रसङ्गेनापितु ततो बहिरपि प्रेक्षकं नीत्वा सुसंस्कृतिप्रदानि वाक्यानि कविर्नाटकेषु निदधाति। तथा हि बालचरिते—

नन्दगोपः —भर्तः अशौचोऽस्मि। मृता दारिका गृहीता। मुहूर्तकं प्रतिपालयतु भर्ता। यावद् यमुनाजलं गत्वा शौचं करोमि।

वसुदेवः —वयस्य, घोषवासात् प्रकृत्या शुचिरेव भवान्।

नन्दगोपः –तेन हि अस्माकं घोषस्योचितं पांसुना शौचं करोमि।

कविरत्र घोषस्य पांसोः पावकत्वं मानसे वासयति। तथैव बालचरिते वृद्धगोपस्य वचनेन गवां जगन्मातृत्वं निर्दर्शितम्—

अनुदितमात्रे सूर्ये प्रणमत सर्वादरेण शीर्षेण।<br>
नित्यं जगन्मातृणां गवाममृतपूर्णानाम्॥ ३ १

अत्र गोर्मातृत्वं भारतीयसंस्कृतेरादर्शः प्रभावितम्।

स्वप्नवासवदत्तेऽधोलिखितसंवादः केवलं सुसंस्कृतिं शिक्षयितुकामेन कविना निबद्धः—

पद्मावती —आर्यपुत्र, किं मया सहोपविष्ट एतं जनं प्रेक्षिष्यते।

राजा —कोऽत्र दोषः।

पद्मावती —आर्यपुत्रस्यापरः परिग्रह इत्युदासीनमिव भवति।

---

1. It is a spirit of universality that makes out every great drama, no matter when or where that drama was produced. A. Nicoll: The Theory of the Drama P. 100.

राजा —कलत्रदर्शनार्हं जनं कलत्रदर्शनात् परिहरतीति बहुदोषमुत्पादयति। तस्मादास्यताम्।

रामः प्रतिमायां परिव्राजकवेषं रावणं कथयति—

भगवन् एष एव मे निश्चयः —

उभयस्यास्ति सान्निध्यं यद्येतत् साधयिष्यति।
धनुर्वा तपसि श्रान्ते श्रान्ते धनुषि वा तपः॥ ५.९

अनेन वाक्येन न केवलं क्षत्रियाणां कृतेऽपि तु सर्वेषां भारतीययुवकानां कृते राष्ट्रस्य समाजस्य वा सौष्ठवं विधातुं धनुषः ( शक्तिविधानेन ) तपसः ( चारित्रिकवैशद्येन ) च समुत्कर्षः साधनीयः इति बोधो गम्यते।

सप्रसङ्गमेव विराटेश्वरस्य वचन पञ्चरात्रे—

अकारणं रूपमकारणं कुलं महत्सु नीचेषु च कर्म शोभते। २.३२

अयं कर्ममहिमैव राष्ट्रमुन्नयति।

मध्यमव्यायोगे भीमः शिक्षयति—

माता किल मनुष्याणां देवतानां च दैवतम्।
मातुराज्ञां पुरस्कृत्य वयमेतां दशां गताः॥ ३.७

अत्र भारतीयसंस्कृतौ मातृदेवो भवेति शिक्षा।

प्रस्थानकाल इष्टजनस्य वदतु—

गच्छतु पुनर्दर्शनाय।[1]

अतिथिमाश्रमपदद्वारं यावत् सहयात्रया सम्भावयेदिति तत्रैव शिक्षितम्।

मृच्छकटिके प्रियवचनं सोपदानं श्रोतव्यमिति शिष्टाचारोऽप्येविधं निर्दिशतः —

चारुदत्तः — सहर्षम् ) भद्र न कदाचित् प्रियवचनं निष्फलीकृतं मया। तद् गृह्यतां पारितोषिकम्। ( इत्युत्तरीयं प्रयच्छति। )

न खलु भिक्षुः स्त्रीशरीरं स्पृशेदिति मृच्छकटिकेऽप्येविधं शिक्षितम्—

भिक्षुः —उत्तिष्ठतु, उत्तिष्ठतु बुद्धोपासिके तां पादपसमीपजातां लतामवलम्ब्य। ( इति लतां नामयति )

---

१. मध्यमव्यायोगे ५१/५२

( वसन्तसेना गृहीत्वोत्तिष्ठति )

नीतिलता नाटचकथावृक्षसंश्रिता स्वपुष्पफलादिभिः प्रेक्षकान् भूयिष्टं चिरं प्रभावयति।

तत्रैव संस्कृति-शिक्षाद्योविधा वर्त्तते—

चाण्डालौ—

सर्वः खलु भवति लोके लोकः सुखसंस्थितानां।
विनिपतितानां नराणां प्रियकारी दुर्लभो भवति ॥ १०.१५
न खलु वयं चाण्डालाश्चाण्डालकुले जातपूर्वा अपि।
येऽभिभवन्ति साधुं ते पापास्ते च चाण्डालाः ॥ १०.२२

स्वतन्त्ररूपेणैतानि पात्राणि मृच्छकटिकस्य दशमेऽङ्के स्वविचारान् प्रकटयन्ति। चाण्डालौ चारुदत्तश्च सह गच्छन्ति किन्तु तत्र चाण्डालौ परस्परमालपतः। तयोर्वचनमश्रुत्वेवानेकशश्चारुदत्तः स्वविचारान् प्रकटयति। तथा हि—

चारुदत्तः —( सनिर्वेदं स्वगतम् )

मखशतपरिपूतमित्यादि। १०.१२

इति शम्।

## प्रमुखा लक्षणग्रन्थाः


१. भरतः —नाट्यशास्त्रम्, अभिनवभारतीसहितम्। गायकवाड ओरियण्टल सीरीज, बड़ौदा।

२. आनन्दवर्धनः —ध्वन्यालोकः अभिनवगुप्तकृतलोचनसहितम्, चौखम्भा विद्याभवन, वाराणसी, १९७९।

३. कुन्तकः —वक्रोक्तिजीवितम्, कर्नाटक यूनिवर्सिटी, धारवाड, १९७७।

४. धनञ्जयः —दशरूपकम्, धनिककृतावलोकसहितम्, अडयारलाइब्रेरी, अडयार, १९६८।

५. सागरनन्दी—नाटकलक्षणरत्नकोशः, चौखम्भा संस्कृत सीरीज, १९७२।

६. भोजः —(१) शृङ्गारप्रकाशः, सम्पादकः जोश्यार, मैसूर, १९६३।

(२) सरस्वतीकण्ठाभरणम्—काशीहिन्दूविश्वविद्यालयः, वाराणसी, १९७९।

७. क्षेमेन्द्रः —औचित्यविचारचर्चा, वाराणसेय-संस्कृत-संस्थान, वाराणसी, १९८४।

८. मम्मटः —काव्यप्रकाशः, भण्डारकर-ओरियण्टल इन्स्टीटयूट, पुणे, १९५०

९. रामचन्द्र-गुणचन्द्रः —नाट्यदर्पणः, गा० ओ० सीरीज, बड़ौदा, १९५९।

१०. शारदातनयः —भावप्रकाशनम्, गा० ओ० सीरीज, बड़ौदा, १९३०।

११. विश्वनाथः —साहित्यदर्पणः, निर्णयसागर प्रेस।

१२. सिंहभूपालः —रसार्णवसुधाकरः, संस्कृत-परिषद्, विश्वविद्यालयः, सागर, १९६९।

१३. विप्रदासः ( शुक्लपण्डितः ) सङ्गीतचन्द्रिका, उस्मानिया यूनिवर्सिटी, हैदराबाद, १९०४।

१४. पण्डितराजो जगन्नाथः —रसगङ्गाधरः, निर्णयसागर प्रेस।

१५. रामकृष्णकविः —सम्पादकः भरतकोशः, मुन्शी राममनोहर लाल, नई दिल्ली, १९८3।

## प्रमुखा लक्ष्यग्रन्थाः

१. भासनाटकचक्रम्—सम्पादकः सी. आर. देवधर ।

२. कुन्दमाला—सम्पादकः के. के. दत्त ।

३. मृच्छकटिकम्—निर्णयसागर प्रेस ।

४. मुद्राराक्षसम्—मोतीलाल बनारसी दास ।

५. मालविकाग्निमित्रम्
६. विक्रमोर्वशीयम्
७. अभिज्ञान शाकुन्तलम्
} सम्पादकः प्रो० रेवाप्रसादो द्विवेदी, काशी हिन्दू-विश्वविद्यालयः, वाराणसी, १९७६

८. प्रियदर्शिका—निर्णयसागर प्रेस ।

९. रत्नावली ,,

१०. नागानन्दम् ,,

११. वेणीसंहारम् ,,

१२. महावीरचरितम्—चौखम्भा विद्याभवन, वाराणसी ।

१३. मालतीमाधवम्—लोकभारती, प्रयाग ।

१४. उत्तररामचरितम्—विश्वविद्यालय-प्रकाशन, वाराणसी ।

१५. आश्चर्यचूडामणिः—चौखम्भा विद्याभवन, काशी ।

१६. बालरामायणम्—चौखम्भा सुरभारती प्रकाशन ।

१७. बालभारतम्—निर्णयसागर प्रेस ।

१८. विद्धशालभञ्जिका

१९. कर्पूरमञ्जरी

२०. चण्डकौशिकम्—विद्याभवन संस्कृत ग्रन्थमाला, काशी ।

२१. प्रबोधचन्द्रोदयम् ,, ,,

२२. भगवदज्जुकीयम्—मंगलोदयम् प्रेस, त्रिचूर ।

२३. सत्यहरिश्चन्द्रम्—निर्णयसागर प्रेस ।

२४. मोहराजपराजयम्—गायकवाड ओरियण्टल सीरीज, बड़ौदा ।

२५. प्रबुद्धरौहिणेयम्—आत्मानन्द सभा, भावनगर ।

२६. धर्माभ्युदयम्—आत्मानन्दसभा, भावनगर।
२७. उल्लाघराघवम्—गायकवाड ओरियण्टल सीरीज, बड़ौदा।
२८. हम्मीरमदमर्दनम् " " "
२९. दूताङ्गदम्—निर्णयसागर प्रेस।
३०. संकल्पसूर्योदयम्—अडयार लाइब्रेरी, मद्रास।
३१. गङ्गादासप्रतापविलासम्—गायकवाड ओरियण्टल सीरीज, बड़ौदा।
३२. शमामृतम्—आत्मानन्दसभा, भावनगर।

**Reference in English**

1. Allardyce, Nicoll (1) The Theory of the Drama.
(2) The World Drama.
2. Millett ; The Art of The Drama
3. Sobel, Bernard : The Theatre Handbook, 1940.
4. Styan : Dramatic Experience
5. Bowers, Faubion : The Theatre of The East 1950
6. The Oxford Companion to Theatre
7. Keith, A. B. : The Sanskrit Drama 1959
8. Wilson, H., Theatre of the Hindus 1950
9. Clark, H : European Theories of The Drama 1947
10. Raghavan, V. Bhoja's Srngara Prakasa 1978.

# शब्दानुक्रमणिका